*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*



श्रीशिवा शरणम्

षष्ठ-वर्षे] Sep.-Nov., 1951 [ प्रथमादि संख्यात्रयम्

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

**Special Articles in this number.**



S'aṅkarācārya's unpublished writings.

Mahābhāṣya with English Translation, notes, extracts from various commentaries including the hitherto-unpublished Bhāṣya-pradīpikā of Bhartṛhari (pp. 17-3 ).

An interesting Sanskrit drama.

Sanskrit translation of Longfellow's "Psalm of life."

इवेन सह समासः—a critical study.

**Look out for the Special Dewali No. of the Manjusa which will be posted on Dec. 1.**

Vol. V of the Mañjūṣa contains 300+32+32 pages including "The S'iva sūtras and the Sanskrit alphabet" "Mahābhāṣya" "Critical studies on the text of S'āyaṇa's commentary on the Rigveda" etc. etc. Rs. 6/8/-

*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign—Rupees Nine.

The Madhuravāṇī (Bagalcott) writes: स्वागतं मञ्जूषायै । कलिकातानगरतः शब्दाब्धिलब्धवैदग्ध्यस्य कवितावनितास्वयंवरवृतवरस्य पण्डितप्रवरस्य श्रीक्षितीशचन्द्रचट्टोपाध्यायस्य सम्पादकत्वे प्रतिमासं नियतमाविष्क्रियमाणा मञ्जूषानामिका पत्रिका शिञ्जानमञ्जरीमञ्जुलपदैः गीतगुञ्जारवैश्च रञ्जयति रसिकपुञ्जम् । क्वचित् महाभाष्य-शब्देन्दुशेखरादिगत-सूक्ष्मतम-विषयसमीक्षणसंरम्भेण महामहापण्डितपुण्डरीकाणामपि शिरःकण्डूतिम् उपजनयति । कदाचित् कुशलग्रामवृद्धेव सरसकथाकथनेन कौतुकमुत्पादयति । कुत्रचिच्च प्राचीन-सरस-सुन्दर-सुभाषितानाम् आंग्लानुवादान् प्रकटीकृत्य उपकरोति छात्रवृन्दम् । क्वचिदपि च वेदवेदान्तमन्त्रतन्त्रादीनां भावार्थादिकं [illegible]यते । मध्ये मध्ये लघुतरविनोदकथाभिः हास्यलहरीरपि उद्भावयति । तत्र तत्र च शब्दशक्तिप्रकाशेन शब्दशुद्धिविचारैः पुरातनसाहित्यप्रकटीकरणेन च भिन्नभिन्नरुचिमपि वाचककुलं सम्यगाराधयति । प्रायः सर्वत्र सरलतमा सुबोधा च अमला भाषा विदुषामिव विद्यार्थिनामपि सविशेषं परितोषं जनयति । 'पण्डिता च पतिव्रता' इति ख्यातायाः क्षमादेवीरावमहोदयायाः "परित्यक्ता" इति [illegible] चैत्राङ्कगता [illegible] चमत्कुरुते सचेतसां चेतांसि हृदयङ्गमया निरूपणभङ्ग्या । तस्मिन्नेव मञ्जूषायाः [illegible]ङ्के 'शिवसूत्रस् एण्ड संस्कृत आल्फाबेट्' इति विचारप्रचुरः सम्पादकानाम् आंग्लभाषायां लिखितः विवेचनात्मकः लेखः सर्वेषामपि विपश्चिदपश्चिमानां प्रशंसापात्रं भवतीति निश्चप्रचम् । वयं तु सादरं संसूचयामः "[illegible] लेखा लिख्यन्ताम्" येन [illegible] उपयोगो भवेत् ।

शिञ्जन्मञ्जीरमञ्जूक्तिगुञ्जिते रसिकरञ्जिनी ।

क्षितीशकृतिमञ्जूषा केषामेषा न तोषदा ॥

सुवर्णाभाषितैः [illegible]भिः ।

अलङ्कारप्रियैरेषा मञ्जूषा गृह्यतां रसात् ॥

[illegible] ।

[illegible] ॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ।

# मञ्जूषा

Sept.-Nov. 1951. | १८७३-शकीयाश्विनादीनाम् षष्ठ-वर्षस्य प्रथमादिसंख्यात्रयम् | Vol. VI. Nos. 1-3.

श्रीमच्छङ्कराचार्यविरचितं

## श्रीनीललोहितपादादिकेशान्तस्तोत्रम्

॥ श्रीगणेशाय नमः ॥

कल्याणं वो विधत्तां कटकतटलसत्कल्पवाटीनिकुञ्ज-
क्रीडासंसक्तविद्याधरनिकरवधूगीतरुद्रावदानः ।
तारैर्हेरम्बनादैस्तरलितनिनदत्तारकारातिकेकी
कैलासः शर्वनिर्वृत्यभिजनकपदं सर्वदा पर्वतेन्द्रः ॥१॥

यस्य प्राहुः स्वरूपं सकलदिविषदां सारसर्वस्वयोगं
यस्येषुः शार्ङ्गधन्वा समजनि जगतां रक्षणे जागरूकः ।
मौर्वी दर्वीकराणामपि च परिवृढः पूस्त्रयी सा च लक्ष्यं
सोऽव्यादव्याजमस्मानशुभभिदनिशं नाकिनां श्रीपिनाकः ॥२॥

आतङ्कावेगहारी सकलदिविषदामङ्घ्रिपद्माश्रयाणां
मातङ्गाद्युग्रदैत्यप्रकरतनुगलद्रक्तधाराक्तधारः ।

क्रूरः शूरायुधानामपि च परिभवं स्वीयभासा वितन्वन्
घोराकारः कुठारो दृढतरदुरिताख्याटवीं पाटयेन्नः ॥३॥

कालारातेः कराग्रे कृतवसतिरुरःशाणशातो रिपूणां
काले काले कुलाद्रिप्रवरतनयया कल्पितस्नेहलेपः ।
पायाद्वः पावकार्चिःप्रसरसखमुखः पापहन्ता नितान्तं
शूलः श्रीपादसेवाभजनरसजुषां पालनैकान्तशीलः ॥४॥

देवस्याङ्काश्रयायाः कुलगिरिदुहितुर्नेत्रकोणप्रचार-
प्रस्तारानत्युदारान् पिपठिषुरिव यो नित्यमत्यादरेण ।
आधत्तेभाङ्गतुङ्गैरनिशमवयवैरन्तरङ्गं समोदं
सोमापीडस्य सोऽयं प्रदिशतु कुशलं पाणिरङ्गः कुरङ्गः ॥५॥

कण्ठेप्रान्तावसज्जत्कनकमयमहाघण्टिकाघोरघोषैः
कण्ठारावैरकुण्ठैरपि भरितजगच्चक्रवालान्तरालः ।
चण्डप्रोद्दण्डभृङ्गः ककुदकवलितोत्तुङ्गकैलासशृङ्गः
कण्ठेकालस्य वाहः शमयतु शमलं शाश्वतः शाक्वरेन्द्रः ॥६॥

निर्यद्दानाम्बुधारापरिमलतरलीभूतलोलम्बपाली-
झङ्कारैः शङ्कराद्रेः शिखरशतदरीः पूरयन् भूरिघोषैः ।
शार्वः सौवर्णशैलप्रतिमपृथुवपुः सर्वविघ्नापहर्ता
शर्वाण्याः पूर्वसूनुः स भवतु भवतां स्वस्तिदो हस्तिवक्त्रः ॥७॥

यः पुण्यैर्देवतानां समजनि शिवयोः श्लाघ्यबीजैकमत्याद्
यन्नाम्नि श्रूयमाणे दितिजभटघटा भीतिभारं भजन्ते ।
भूयात्सोऽयं विभूत्यै निशितशरशिखापाटितक्रौञ्चशैलः
संसारागाधकूपोदरपतितसमुत्तारकस्तारकारिः ॥८॥

आरूढः प्रौढवेगप्रविजितपवनं तुङ्गतुङ्गं तरङ्गं
चैलं नीलं वसानः करतलविलसत्काण्डकोदण्डदण्डः ।

रागद्वेषादिनानाविध[रिपु]पटलीभीतिकृद्भूतभर्ता
कुर्वन्नाखेटलीलां परिलसतु मनःकानने मामकीने ॥९॥

नृत्तारम्भेषु हस्ताहतमुरवधिमि[द्]धिक्कृतैरत्युदारै-
श्चित्तानन्दं विधत्ते सदसि भगवतः सन्ततं यस्य नन्दी ।
चण्डीशाद्यास्तथाऽन्ये चतुरगुणगणप्रीणितस्वामिसत्का-
रोत्कर्षोद्यत्प्रसादाः प्रमथपरिवृढाः पान्तु सन्तोषिणो वः ॥१०॥

अम्भोजाभ्यां च रम्भारथचरणलताद्वन्द्वकुम्भीन्द्रकुम्भै-
र्बिम्बेनेन्दोश्च कम्बोरुपरि विलसता विद्रुमेणोत्पलाभ्याम् ।
अम्भोदेनापि सम्पादितमुपजनिताऽऽडम्बरं शम्बरारेः
शम्भोः सम्भोगयोग्यं किमपि घनमिदं सम्भवेत्सम्पदे नः ॥११॥

वेणीसौभाग्यविस्मापिततपनसुताचारुवेणीविलासान्
वाणीनिर्धूतवाणीकरतलविधृतोदारवीणाविरावान् ।
एणीनेत्रान्तभङ्गीनिरसननिपुणापाङ्गकोणानुपासे
शोणान् प्राणानुदूढप्रतिनवसुषमाकन्दलानिन्दुमौलेः ॥१२॥

मुक्तामाणिक्यजालैः परिकलितमहासालमालोकनीयं
प्रत्यप्तानर्घरत्नैर्दिशि दिशि भवनैः कल्पितं दिक्पतीनाम् ।
उद्यानैरद्रिकन्यापरिजनवनितामाननीयैः परीतं
हृद्यं हृद्यस्तु नित्यं मम भुवनपतेर्धाम चन्द्रार्धमौलेः ॥१३॥

स्तम्भैर्जम्भारिरत्नप्रवरपरिचितैः सम्भृतोपान्तभागं
शुम्भत्सोपानमार्गं शुचिमणिनिचयैर्गुम्फितानल्पशिल्पम् ।
कुम्भैः सम्पूर्णशोभं शिरसि सुघटितैः शातकौम्भैरकम्पैः
शम्भोः सम्भावनीयं सकलमुनिजनैः शातदं स्यात्सदो नः ॥१४॥

न्यस्तो मध्ये सभायाः परिसरविलसत्पादपीठाभिरामो
हृद्यैः पादैश्चतुर्भिः कनकमणिमयैरुच्चकैरुज्ज्वलात्मा ।

वासो रत्नेन केनाप्यधिकमृदुतरेणास्तृतो विस्तृतश्रीः
पीठः पीडाभरं नः शमयतु शिवयोः स्वैरसंवासयोग्यः ॥१५॥

आसीनस्यापि पीठे त्रिजगदधिपतेरङ्घ्री पीठानुषक्तौ
पाथोजाभोगभागौ परिमृदुलतरोल्लासिपद्मादिरेखौ ।
पातां पादावुभौ तौ नमदमरकिरीटोल्लसच्चारुहीर-
श्रेणीशोणायमानोन्नतनखदशकोद्भासमानौ समानौ ॥१६॥

यन्नादो वेदवाचां निगदति निखिलं लक्षणं पक्षिकेतु-
र्लक्ष्मीसम्भोगसौख्यं विरचयति ययोश्चापरे रूपभेदे ।
शम्भोः सम्भावनीये पदकमलसमासङ्गतस्तुल्यशोभं
मङ्गल्यं नः समग्रं सकलसुखकरे नूपुरे पूरयेताम् ॥१७॥

अङ्के शृङ्गारयोनेः सपदि शलभतां नेत्रवह्नौ प्रयाते
शत्रोरुद्धृत्य तस्मादिषुधियुगमहो न्यस्तमेतत्किमग्रे ।
इत्थं शङ्कानतानाममरपरिषदामन्तरङ्कुरयत्तत्-
संघातं चारुजङ्घायुगमखिलपतेरंहसः संहरे नः ॥१८॥

जानुद्वन्द्वेन मीनध्वजनृवरसमुद्गोपमानेन साकं
राजन्तौ राजरम्भाकरिकरकनकस्तम्भसम्भावनीयौ ।
ऊरू गौरीकराम्भोरुहसरससमामर्दनानन्दभाजौ
चारू दूरीक्रियेतां दुरितमुपचितं जन्मजन्मान्तरे नः ॥१९॥

आमुक्तानर्घरत्नप्रकरकरपरिष्वक्तकल्याणकाञ्ची-
दाम्ना बद्धेतु दुग्धद्युतिनिचयमुषा चीनपट्टाम्बरेण ।
संवीते शैलकन्यासुचरितपरिपाकायमाणे नितम्बे
नित्यं नर्नर्तु चित्तं मम निखिलजगत्स्वामिनः सोममौलेः ॥२०॥

सन्ध्याकालानुरज्यद्दिनकरसरुचा कालधौतेन गाढं
व्यानद्धः स्निग्धमुग्धः सरसमुदरबन्धेन वीतोपमेन ।

उद्दीप्रैः स्वप्रकाशैरुपचितमहिमा मन्मथारेरुदारो
मध्यो मिथ्यार्धसध्र्यङ् मम दिशतु सदा सङ्गतिं मङ्गलानाम् ॥२१॥

नाभीचक्रालवालान्नवनवसुषमादोहदश्रीपरीताद्
उद्गच्छन्ती पुरस्तादुदरपथमतिक्रम्य वक्षः प्रयान्ती ।
श्यामा कामागमार्थप्रकथनलिपिवद्भासते या निकामं
सा मा सोमार्धमौलेः सुखयतु नितरां रोमवल्लीमतल्ली ॥२२॥

आश्लेषेष्वद्रिजायाः कठिनकुचतटीलिप्तकाश्मीरपङ्क-
व्यासङ्गादुद्यदर्कद्युतिभिरुपचितस्पर्धमुद्दामहृद्यम् ।
दक्षारातेरुदूढप्रतिनवमणिमालावलीभासमानं
वक्षो विक्षोभिताङ्गं सततमतिजुषां रक्षताद्क्षतं नः ॥२३॥

वामाङ्के विस्फुरन्त्याः करतलविलसच्चारुरक्तोत्पलायाः
कान्ताया वामवक्षोरुहभरशिखरामर्दनं व्यग्रमेकम् ।
अन्यांस्त्रीनप्युदारान् वरपरशुमृगालङ्कृतानिन्दुमौले-
र्बाहूनाबद्धहेमाङ्गदमणिकटकानन्तरालोकयामः ॥२४॥

संभ्रान्तायाः शिवायाः पतिविलयभयात्सर्वलोकोपतापात्
संविग्नस्यापि विष्णोः सरभससुभयोर्वारणप्रेरणाभ्याम् ।
मध्ये त्रैशङ्कवीयामनुभवति दशां यत्र हालाहलोष्मा
सोऽयं सर्वापदां नः शमयतु निचयं नीलकण्ठस्य कण्ठः ॥ २५ ॥

हृद्यैरद्रीन्द्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री-
रुद्योतन्त्या नितान्तं धवलधवलया मिश्रितो दन्तकान्त्या ।
मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः
सद्योजातस्य दद्यादधरमणिरसौ सम्पदां सञ्चयं नः ॥ २६ ॥

कर्णालङ्कारनानामणिनिचयरुचां सञ्चयैरञ्चितायां
वर्ण्यायां स्वर्णपद्मोदरपरिविगलत्कर्णिकासन्निभायाम् ।

पद्धत्यां प्राणवायोः प्रणतजनहृदम्भोजवासस्य शम्भो-
र्नित्यं नश्चित्तमेतद्विरचयतु सुखेनाऽऽसिकां नासिकायाम् ॥ २७ ॥

अत्यन्तं भासमाने रुचिरतररुचां सङ्गमात्सन्मणीनाम्
उद्यच्चण्डांशुधामप्रसरनिरसनस्पष्टदृष्टावदाने ।
भूयास्तां भूतये नः करिवरजयिनः कर्णपाशावलम्बे
भक्तालीभालसज्जज्जनिभरणलिपेः कुण्डले कुण्डले ते ॥२८॥

याभ्यां कालव्यवस्था भवति तनुमतां यो मुखं देवतानां
येषामाहुः स्वरूपं जगति मुनिवरा देवतानां त्रयीं ताम् ।
रुद्राणीवक्त्रपङ्केरुहसततविहारोत्सुकेन्दिन्दिरेभ्य-
स्तेभ्यस्त्रिभ्यः प्रणामाञ्जलिमुपरचये त्रीक्षणस्येक्षणेभ्यः ॥२९॥

वामं वामाङ्कगत्या वदनसरसिजव्यालगद्वल्लभाया
व्यानम्रेष्वन्यदन्यत्पुनरलिकभवं वीतनिःशेषरौक्ष्यम् ।
भूयो भूयोऽतिमोदान्निपतदतिदयाशीतलं चूतबाणे
दक्षारेरीक्षणानां त्रयमपहरतादाशु तापत्रयं नः ॥ ३० ॥

यस्मिन्नर्धेन्दुमुग्धद्युतिनिचयतिरस्कारनिस्तन्द्रकान्तौ
काश्मीरक्षोदसङ्कल्पितमिव रुचिरं चित्रकं भाति नेत्रम् ।
तस्मिन्नुल्लोलचिल्लीनटवरतरुणीलास्यरङ्गायमाणे
कालारेर्भालदेशे विहरतु हृदयं वीतचिन्तान्तरं नः ॥ ३१ ॥

स्वामिन् गङ्गामिवाङ्गीकुरु तव शिरसा मामपीत्यर्थयन्तीं
धन्यां कन्यां खरांशोः शिरसि वहसि किं न्वेष कारुण्यशाली ।
इत्थं शङ्कानतानां जनयदतिघनं कैशिकं कालमेघ-
च्छायं भूयादुदारं त्रिपुरविजयिनः श्रेयसे भूयसे नः ॥ ३२ ॥

शृङ्गाराकल्पयोग्यैः शिखरिवरसुतासत्सखीहस्तलूनैः
सूनैराबद्धमालावलिपरिविगलत्सौरभाकृष्टभृङ्गम् ।

तुङ्गं माणिक्यकान्त्या परिहसितसुरावासशैलेन्द्रशृङ्गं
सङ्घं नः सङ्कटानां विघटयतु सदा काङ्कटीकं किरीटम् ॥३३॥

वक्राकारः कलङ्की जडतनुरहमप्यंघ्रिसेवानुभावाद्
उत्तंसत्वं प्रयातः सुलभतरघृणास्यन्दिनश्चन्द्रमौलेः ।
तत्सेवन्तां जनौघाः शिवमिति निजयाऽवस्थयैवं ब्रुवाणं
वन्दे देवस्य शम्भोर्मुकुटसुघटितं मुग्धपीयूषभानुम् ॥३४॥

कान्त्या संफुल्लमल्लीकुसुमधवलया व्याप्य विश्वं विराजन्
वृत्ताकारो वितन्वन् मुहुरपि च परां निर्वृतिं पादभाजाम् ।
सानन्दं नन्दिदोष्णा मणिकटकवता वाह्यमानः पुरारेः
श्वेतच्छत्राख्यशीतद्युतिरपहरतादापदस्तापदा नः ॥३५॥

दिव्याकल्पोज्ज्वलानां शिवगिरिसुतयोः पार्श्वयोराश्रितानां
रुद्राणीसत्सखीनां मदतरलकटाक्षाञ्चलैरञ्चितानाम् ।
उद्वल्गद्बाहुवल्लीविवलनसमये चामरान्दोलिनीनाम्
उद्भूतः कङ्कणालीवलनकलकलो वारयेदापदो नः ॥३६॥

स्वर्गौकःसुन्दरीणां सुललितवपुषां स्वामिसेवापराणां
वल्गद्भूषाणि वक्त्राम्बुजपरिविगलन्मुग्धगीतामृतानि ।
नित्यं नृत्तान्युपासे भुजविधृतिपदान्यासभावावलोक-
प्रत्युद्यत्प्रीतिमाद्यत्प्रमथनटनटीदत्तसम्भावनानि ॥३७॥

स्थानप्राप्त्या स्वराणां किमपि विशदतां व्यञ्जयन्मञ्जुवीणा-
स्वानावच्छिन्नतालक्रममममृतमिवास्वाद्यमानं शिवाभ्याम् ।
नानारागातिहृद्यं नवरसमधुरस्तोत्रजातानुविद्धं
गानं वीणा महर्षेः कलयति ललितं कर्णपूरायतां नः ॥३८॥

चेतो जातप्रमोदं सपदि विदधती प्राणिनां वाणिनीनाम्
पाणिद्वन्द्वाग्रजाग्रत्सुललितरणितस्वर्णतालानुकूलाम् ।

स्वीयारावेण पाथोधररवपटुना नादयन्ती मयूरीं
मायूरी मन्दभावं मणिमुरवभवा मार्जना मार्जयेद् नः ॥३९॥
देवेभ्यो दानवेभ्यः पितृमुनिपरिषत्सिद्धविद्याधरेभ्यः
सिद्धेभ्यश्चारणेभ्यो मनुजपशुपतज्जातिकीटादिकेभ्यः ।
श्रीकैलासप्ररूढास्तृणविटपमुखाश्चापि ये सन्ति तेभ्यः
सर्वेभ्यो निर्विवादं नतिमुपरचये शर्वपादाश्रयेभ्यः ॥४०॥
इत्थं ध्यायन् प्रभाते प्रतिदिवसमिदं स्तोत्ररत्नं पठेद्यः
किं वा ब्रूमस्तदीयं सुचरितमथवा कीर्तयामः समासात् ।
सम्यग् जातं समग्रं सदसि बहुमतिं सर्वलोकप्रियत्वं
संप्राप्यायुःशतान्ते पदमयति परब्रह्मणो मन्मथारेः ॥४१॥

**इति श्रीमच्छङ्कराचार्यविरचितं नीललोहितपादादि-**
**केशान्तस्तोत्ररत्नं समाप्तम् ।**

---

**श्रीमच्छङ्कराचार्यविरचितं**

## व्योमकेशकेशादिपादान्तस्तोत्रम्

देयासु र्मूर्ध्नि राजत्सरससुरसरित्पादपर्यन्तनिर्यत्-
प्रांशुस्तम्बाः पिशङ्गास्तुलितपरिणतारक्तशालीलता वः ।
दुर्वारापत्तिगर्ते श्रितनिखिलजनोत्तारणे रज्जुभूता
घोराघोर्वीरुहालीदहनशिखिशिखा शर्म शार्वाः कपर्दाः ॥१॥
कुर्वन्निर्वाणमार्गप्रगमपरिलसद्रूप्यसोपानशङ्कां
शक्रारीणां पुराणां त्रयविजयकृतस्पष्टरेखायमाणम् ।
अव्यादव्याजमुच्चैरलिकहिमधराधित्यकातस्त्रिधोद्यज्
ज्जाह्नव्याभं मृडानीकमितुरुडुपरुक् पाण्डुरं वह्निपुण्ड्रम् ॥२॥

क्रुध्यद् गौरीप्रसादानतिसमयपराङ्गुष्टसंक्रान्तलाक्षा-
बिन्दुस्पर्धि स्मरारेः स्फटिकमणिदृषन्मग्नमाणिक्यशोभम् ।
मूर्ध्न्युद्यद्दिव्यसिन्धोः पतितशफरिकाकारि वो मास्तकं स्ताद्
अस्तोकापत्तिकृत्यै हुतवहकणिकामोक्षरूक्षं सदाक्षि॥३॥

भूत्यै दृग्भूतयोः स्याद्यदहिमहिमरुग्बिम्बयोः स्निग्धवर्णो
दैत्यौघध्वंसशंसी स्फुट इव परिवेषावशेषो विभाति ।
स्वर्गस्थित्यन्तवृत्ति मयि समुपगतेऽतीवनिर्वृत्तगर्वं
शर्वाणीभर्तुरुच्चैर्युगलमथ दधद्विभ्रमं तद् भ्रुवो वः ॥४॥

युग्मे रुक्माब्जपिङ्गे ग्रह इव पिहिते द्राग् ययोः प्राग् दुहित्रा
शैलस्य ध्वान्तनीलाम्बररचितबृहत्कञ्चुकोऽभूत् प्रपञ्चः ।
ते त्रैनेत्रे पवित्रे त्रिदशवरघटामित्रजैत्रोग्रशस्त्रे
नत्रे नेत्रे भवेतां द्रुतमिह भवतामिन्द्रियाश्वान्नियन्तुम् ॥५॥

चण्डीवक्त्रार्पणेच्छोस्तदनु भगवतः पाण्डुरुक् पाण्डुगण्ड-
प्रोद्यत्कण्डूं विनेतुं वितनुत इव ये रत्नकोणैर्विघृष्टिम् ॥
चण्डार्चिर्मण्डलाभे सततनवजगद् ध्वान्तखण्डातिशौण्डे
चाण्डीश ते श्रिये स्तामधिकमवनताखण्डले कुण्डले वः ॥६॥

खट्वाङ्गोदग्रपाणेः स्फुटनिकटपुटो वक्त्ररन्ध्रप्रवेशः
प्रेप्सूदञ्चत्फणोरुश्वसदतिधवलाहीन्द्रशङ्कां दधानः ।
युष्माकं कम्रवक्त्राम्बुरुहपरिलसत्कर्णिकाकारशोभः
शश्वत्त्राणाय भूयादलमतिविमलोत्तुङ्गकोणः स घोणः ॥७॥

क्रुध्यत्यद्धा ययोः स्वां तनुमतिलसतो बिम्बितां लक्षयन्ती
भर्त्रे स्पर्धातिनिघ्ना मुहुरितरवधूशङ्कया शैलकन्या ।
युष्मांस्तौ शश्वदुच्चैरबहुलदशमीशर्वरीशातिशुभ्रा-
वव्यास्तां दिव्यसिन्धोः कमितुरवनमल्लोकपालौ कपोलौ ॥८॥

यो भासा भात्युपान्तस्थित इव निभृतं कौस्तुभो द्रष्टुमिच्छन्
सोऽथ स्नेहान्नितान्तं गलगनगरलं पत्युरुच्चैः पशूनाम् ।
प्रोद्यत्प्रेम्णा यमार्द्रा पिबति गिरिसुता सम्पदः सातिरेका
लोकाः शोणीकृतान्ता यदरुणमहसां सोऽधरो वो विधत्ताम् ॥९॥

अत्यर्थं राजते या वदनशशधरादुद्गलच्चारुवाणी
पीयूषाम्भःप्रवाहप्रसरपरिलसत्फेनबिन्द्वावलीव ।
देयात्सा दन्तपङ्क्तिश्चिरमिह दनुदायाददौवारिकस्य
द्युत्या दीप्तेन्दुकुन्दच्छविरमलतरप्रोन्नताग्रा मुदं वः ॥१०॥

न्यक्कुर्वन्नुर्वराभृन्निभघनसमयोद्घुष्टमेघौघघोषं
स्फूर्जद्वाध्युत्थितोरुध्वनितमपि परब्रह्मभूतो गभीरः ।
सुव्यक्तो व्यक्तमूर्तेः प्रकटितकरणः प्राणनाथस्य सत्याः
प्रीत्या वः संविदध्यात्फलविकलमलं जन्म नादः सनादः ॥११॥

भासा यस्य त्रिलोकी लसति परिलसत्फेनबिम्बार्णवान्त-
र्व्यामग्नेवातिगौरस्तुलितसुरसरिद्वारिपूरप्रवाहः ।
पीनात्मा दन्तभाभिर्भृशमहह हकारादिभीमः सदेष्टां
तुष्टिं पुष्टां कृषीष्ट द्रुतमिह भवतामट्टहासोऽष्टमूर्तेः ॥१२॥

सद्योजाताख्यमास्यं यदु विमलमुदग्वृत्ति यद्वामदेवं
नाम्ना हेम्ना सदृक्षं जलदनिभमघोराह्वयं दक्षिणं यत् ।
यद्बालार्कप्रभं तत्पुरुषनिगदितं पूर्वमीशानसंज्ञं
यद्दिव्यं तानि शम्भोर्भवदभिलषितं पञ्च दद्युर्मुखानि ॥१३॥

आत्मप्रेम्ण मृडान्याः स्वयमिव रचिताः सादरं सांवनन्या
मध्या तिस्रः सुनीलाञ्जननिभगररेखाः समाभान्ति यस्याम् ।
आकल्पानल्पभासा भृशरुचिरतरा कम्बुकल्पाऽम्बिकायाः
पत्युः साऽत्यन्तमन्तर्विलसतु सततं मन्थरा कन्धरा वः ॥१४॥

वक्त्रेन्दोर्दन्तलक्ष्म्याश्चिरमधरमहाकौस्तुभस्याप्युपान्ते
सोत्थानां प्रार्थयन् यः स्थितिमचलभुवे वारयन्त्यै निवेशम् ।
प्रायुङ्क्तेवाशिषो यः प्रतिपदिममृतत्वोत्थितः(?) कालशत्रोः
कालं कुर्वन् गलं वो हृदयमलमलं क्षालयेत्कालकूटः ॥१५॥

प्रौढप्रेमाकुलाया दृढतरपरिरम्भेषु पर्वेन्दुमुख्याः
पार्वत्याश्चारुचामीकरवलयपदैरङ्कितं कान्तिशालि ।
रिङ्गन्नागाङ्गदार्ढ्यं प्रसभमविहितं कर्म निर्मूलयेत्तद्
दोर्मूलं निर्मलं यद्धृदि दुरितमपास्यार्जितं धूर्जटेर्वः ॥१६॥

कण्ठाश्लेषार्थमाप्ता दिव इव कमितुः स्वर्गसिन्धोः प्रवाहाः
क्रान्त्यै संसारसिन्धोः स्फटिकमणिमहासंक्रमाकारदीर्घाः ।
तिर्यग्विष्कम्भभूतास्त्रिभुवनवसतेर्भिन्नदैत्येभदेहा
बाहा वस्ता हरस्य द्रुतमिह निवहानंहसां संहरन्तु ॥१७॥

वक्षो दक्षद्विषोऽलं स्मरभरविनमद्दक्षजाक्षीणवक्षो·
जान्तर्निक्षिप्तशुम्भन्मलयजमिलितोद्भासिभस्मोक्षितं यत् ।
क्षिप्रं तद्रूक्षचक्षुःश्रुतिगणफणरत्नौघभाभीक्ष्णशोभं
युष्माकं शश्वदेनः स्फटिकमणिशिलामण्डलाभं क्षिणोतु ॥१८॥

मुक्तामुक्ते विचित्राकुलवलिलहरीजालशालिन्यवाञ्चन्
नाभ्यावर्ते विलोठद्भुजगवरयुते कालशत्रोर्विशाले ।
युष्मच्चित्तत्रिधामाप्रतिनवरुचिरे मन्दिरे कान्तिलक्ष्म्याः
शेतां शीतांशुगौरे चिरतरमुदरक्षीरसिन्धौ सलीलम् ॥१९॥

वैयाघ्री यत्र कृत्तिः स्फुरति हिमगिरेर्विस्तृतोपत्यकान्तः
सान्द्रावश्यायमिश्राः परित इव वृता नीलजीमूतमाला ।
आबद्धाहीन्द्रकाञ्चीगुणमतिपृथुलं शैलजाक्रीडभूमिं
तद्वो निःश्रेयसे स्याज्जघनमतिघनं बालशीतांशुमौलेः ॥२०॥

पुष्टावष्टम्भभूतौ पृथुतरजघनस्यापि नित्यं त्रिलोक्याः
सम्यग्वृत्तौ सुरेन्द्रद्विरदवरकरोदारकान्तिं दधानौ ।
सारावूरू पुरारेः प्रसभमरिघटाघस्मरौ भस्मशुभ्रौ
भक्तैरप्यार्द्रचित्तैरधिकमवनतौ वाञ्छितं वो विधत्ताम् ॥२१।

आनन्दायेन्दुकान्तोपकरचितसमुद्गायिते ये मुनीनां
चित्तादर्शं विधातुं निदधति चरणे ताण्डवाकुञ्चनानि ।
काञ्ची भोगीन्द्रमूर्ध्ना प्रतिमुहुरुपधानायमानेक्षणं ते
कान्ते स्तामन्तकारे द्युतिविजितसुधाभानुना जानुनी वः ॥२२॥

मञ्जीरीभूतभोगिप्रवरगणफणामण्डलान्तर्नितान्त-
व्यादीप्तानर्घरत्नद्युतिकिसलयिते स्तूयमाने द्युसद्भिः ।
बिभ्रत्यौ विभ्रमं वः स्फटिकमणिबृहद्दण्डवद्भासते ये
जङ्घे शङ्खेन्दुशुभ्रे भृशमिह भवतां मानसे शूलपाणेः ॥२३॥

अस्तोकस्तोमशस्त्रैरुपचितममलं भूरिभावोपहारैः
कुर्वद्भिः सर्वदोच्चैः सततमभिवृतौ ब्रह्मविद्देवलाद्यैः ।
सम्यक् संपूज्यमानाविह हृदि सरसीवानिशं युष्मदीये
शर्वस्य क्रीड़तां तौ प्रपदवरबृहत्कच्छपावच्छभासौ ॥२४॥

याः स्वस्यैकांशपातादतिबहलगलद्रक्तवक्त्रं प्रणुन्न-
प्राणं प्राक्रोशयन् प्राङ् निजमचलवरं चालयन्तं दशास्यम् ।
पादाङ्गुल्यो दिशन्तु द्रुतमयुगदृशः कल्मषप्रोषकल्याः
कल्याणं फुल्लमाल्यप्रकरविलसिता वः प्रणद्धाहिवल्ल्यः ॥२५॥

प्रह्व-प्राचानबर्हिःप्रमुखसुरवरप्रस्फुरन्मौलिसक्त-
ज्यायोरत्नोत्करोस्रैरविरतममला भूरि नीराजिता या ।
प्रोदग्राग्रा प्रदेया[त्] ततिरिव रुचिरा तारकाणां नितान्तं
नीलग्रीवस्य पादाम्बुरुहविलसिता सा नखाली सुखं वः ॥२६॥

सत्याः सत्याननेन्दावपि सविधगते ये विकाशं दधाते
स्वान्ते स्वान्ते लभन्ते श्रियमिह सरसीवामरा ये दधानाः ।
लोलं लोलम्बकानां कुलमिव सुधियां सेवते ये सदास्तां
भूत्यै भूत्यैणपाणे विमलतररुचस्ते पदाम्भोरुहे वः ॥२७॥
येषां रागादिदोषाक्षतमतियतयो यान्ति मुक्तिं प्रसादे
ये वा नम्रात्ममूर्ति-द्युसदृपिपरिपन्मूर्ध्नि शेषायमाणाः ।
श्रीकण्ठस्यारुणोद्यच्चरणसरसिजप्रोत्थितास्ते परागा
यष्मान् सन्तारयेयुश्चिरतरविततज्जन्मसंसारपाशात् ॥२८॥
भूम्ना यस्यास्तभूम्ना भुवनमनुसृतं यत्परं धाम धाम्नां
साम्नामाम्नायतत्त्वं यदपि च परमं यद् गुणातीतमाद्यम् ।
यच्चांहोहन्निरीहं गहनमिति मुहुः प्राहुरुच्चैर्महान्तं
माहेशं तन्महोऽत्र महितमहरहर्मोहरोहं निहन्तुम् ॥२९॥

इति श्रीशङ्कराचार्यविरचितं व्योमकेशकेशादिपादान्तस्तोत्रं संपूर्णम् ॥

श्रीभवानीशङ्करार्पणमस्तु ॥

राजापुरनगरात् क्रोशषट्कदूरवर्ति खारेपाटणपुरवासिभिः
नाइणकरकुलसंभूतलक्ष्मणतनयैर्बालकृष्णशास्त्रिभिर्लिखितमिदं

श्रीशङ्कराचार्यविरचितं स्तोत्रयुगलम् ।

यस्येयं प्रतिकृतिस्तत्प्रशिष्येण श्रीदेवैकुण्ठवासिगुरुवर्यविद्यारत्न-निगुडकरोपाह्वदत्तात्रेयशास्त्रिशिष्येण पाटणकरोपाह्वश्रीमत्कृष्णस्य तनुजेन रघुनाथशर्मणा १८७३ शके खरेऽब्दे ज्येष्ठासितैकादश्यां भृगौ कृता ॥

लेखकप्रदत्ताः स्तोत्रद्वयगतानां दुर्बोधशब्दानामर्थाः ।

१ श्रीनीललोहित (शिव) पादादिकेशान्तस्तोत्रम् ।

६ श्लोके "वाडवेयः सौरभेयो भद्रः शक्वरशाक्वरौ" इत्यभिधान-चिन्तामणौ ।

१२ श्लोके "वेणी सेतुप्रवाहयोः । देवताडे केशबन्धे" इति हलायुधः ।

१४ ,, "शुम्भत्—भासमान ।"

१८ ,, "मनःशृङ्गारसंकल्पात्मानो योनिः"—इति हेमचन्द्रः ।

शृङ्गारो योनिर्यस्येति शृङ्गारयोनिः ।

२० श्लोके "कल्याणं काञ्चने शुभे" इति त्रिकाण्डशेषः ।

३३ ,, "कटप्रूः कङ्कटीकश्च जटाटीरो दशाव्यय" इति वैजयन्ती ।

३९ ,, "मार्जनं शुद्धिकरणे मार्जना मुरजध्वनौ" इति हेमचन्द्रः ।

अत्रैव मद्दत्ता दुर्बोधशब्दार्थाः ।

१-२८ श्लोकयोः "अवदानं तु सत्कृत्ये शौर्य आचरणे शुभे"

७ श्लोके "समौ रोलम्बलोलम्बौ"

२९ ,, "इन्दिन्दिरोऽली रोलम्बो द्विरेफोऽस्य षडङ्घ्रयः" इति अभिधानचिन्तामणिः ।

३९ ,, "वाणिन्यौ नर्तकीदूत्यौ" इत्यमरः ।

श्रीव्योमकेश-केशादिपादान्तस्तोत्रम् ।

५ श्लोके "नेत्रो नेतरि वाच्यवत्" इति मेदिनी ।

८ ,, "बहुलः कृष्णपक्षेऽपि" इति त्रिकाण्डशेषः ।

११ ,, "उर्वरा सर्वसस्याढ्यभूमौ स्याद्भूमिमात्रके" इति मेदिनी ।

१३ ,, "उकारः क्षत्रिये नेत्रे हारमूले हरे हरौ" इति एकाक्षरनिघण्टुः ।

१४ ,, "मन्थरः सुन्दरे मन्दे" इति त्रिकाण्डशेषः ।

१४ ,, "सांवनन्या वशीकरणसम्पादिन्या" ।

१७ ,, "भुजा बाहा च बाहौ स्यात्" इति त्रिकाण्डशेषः ।

१८ ,, "अभीक्ष्णं तु भृशो नित्ये" इति मेदिनी ।

१९ ,, "त्रिधामा त्रिविक्रमः" ।

२६ श्लोके "प्राचीनबर्हिः पुरुहूतवाडवौ" इति हेमचन्द्रः ।

# व्याकरणविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" [ १।४।३७ ] इति सूत्रस्य तत्त्वबोधिन्यां दृश्यते—[ द्रुहादयोऽपि ] कोपप्रभवा एव [ गृह्यन्ते ] इति। कथं तर्हि कुप्यसि कस्मैचित् इति। न हि कोपः कोपप्रभवः। अत्र व्याचख्युः। कुपिरत्र द्रोहार्थ इति। लघुशब्देन्दुशेखरे नागेशभट्टेनाप्युक्तम्—न ह्यकुपितः क्रुध्यति इति भाष्येण प्ररूढ़कोप एव क्रोधः इति कुपेस्तदर्थत्वाभावेन न तद्योग इदम्। "कुप्यति कस्मैचित्" इत्याद्यसाध्वेव। इति। शब्दरत्ने प्रौढमनोरमागतस्य "क्रोधोऽमर्षः" इत्यस्य व्याख्यानं दृश्यते—वाक्चक्षुरादिविकारानुमेयः प्ररूढ़कोप इत्यर्थ इति। तच्च ज्योत्स्नायां व्याख्यातम्—"यावद्वाचः स्फुरणं चक्षुषोः रक्तत्वं दन्तानां घर्षणमित्यादयो विकारा नाभिव्यज्यन्ते किन्तु सूक्ष्मरूपेणावस्थिताः, तावच्चित्तस्य कोपावस्था" इति। भावप्रकाशकारेण नागेशभट्टशिष्येण वैद्यनाथनोक्तम्—न ह्यकुपितः क्रुध्यति इति भाष्येण प्ररूढतादृशकोपस्यैव क्रोधत्वबोधनेन, कुपेरतदर्थत्वेन न तद्योग इदम्। "कुप्यति कस्मैचिदित्याद्यसाध्वेव।" एतेन तदङ्गीकुर्वन् दण्डी परास्तः। इति। भैरवमिश्रेण पुनश्चन्द्रकलायां कुप्यति कस्मैच्चिदित्यादीनां साधुत्वं समर्थितम्। तद् यथा—कुपधातुयोगे सम्प्रदानसंज्ञां वारयति—न ह्यकुपित इति। क्रोध इतीति बोधनेन इति शेषः। तदर्थत्वाभावेन क्रोधार्थत्वाभावेन। कुपधातुयोगे सम्प्रदानत्वं न, किन्तु तद्योगे कर्मसंज्ञेति शेषः। अत एव भाष्यकैयटोक्तं व्याकुप्येत इति कर्मप्रयोगो मनोरमोक्त उपपद्यते। यदि च—

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।
यस्मै प्रसीदसि पुनः स भात्युदारोऽनुदारश्च॥

इति काव्यप्रकाशस्थप्रयोगानुपपत्तिरिति विभाव्यते तदा महाकविप्रयोग-दर्शनेन प्ररूढकोपार्थकत्वं कुपधातोरपि कल्पनीयम्। कोपसामान्यार्थक-कुपधातुयोग तु नेति समर्थनीयम्। इति।

प्रकृतसूत्रस्य भाष्यं यथा—किमेत एकार्था आहोस्विन्नानार्थाः। यद्येकार्थाः किमर्थं पृथङ् निर्दिश्यन्ते। अथ नानार्थाः कथं कुपिना शक्यन्ते विशेषयितुम्। एवं तर्हि नानार्थाः, कुपौ त्वेषां सामान्यमस्ति। न ह्यकुपितः क्रुध्यति न वाकुपितो द्रुह्यति न वाकुपित ईर्ष्यति न वाकुपितोऽसूयति इति।

कोप-क्रोधयोरवान्तरभेदो वर्ततां वा मा वा कुपधातोः क्रोधार्थकत्वे लेशतोऽपि संशयो नास्ति। यो हि कुपित स क्रुद्धः एव इति भाष्य-कारस्याशयः। न खलु तावता तयोर्भेदः संसिध्यति। सूत्रस्य व्याख्यान-सौकर्याय भगवतेदमुक्तमित्यपि न विस्मरणीयम्। भट्टोजिदीक्षितेन "द्रुहादयः कोपप्रभवा एव" इत्युक्तं न तु क्रोधादयः कोपप्रभवा इति, इत्यपि न विस्मरणीयम्। अत एव विस्पष्टमेव चन्द्राचार्येण "कोपस्थान-ऽनाप्ये" [२।१।७६] इति सूत्रितम्। अत एव कातन्त्रवृत्तौ दुर्गसिंहे-नोक्तम्—छात्राय क्रुध्यति, मित्राय द्रुह्यति, मित्रायेर्ष्यति, मित्राया-सूयति। यस्मै कुप्यतीति वक्तव्यम् इति। हेमचन्द्रेणापि क्रुध-द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपः [२।२।२०] इति सूत्रस्य बृहद्वृत्तावुक्तम्—कोप इति किम्? शिष्यस्य कुप्यति विनयार्थम् इति। व्याख्यात-ञ्च तल्लघुन्यासे—शिष्यसम्बन्धिनोऽविनयस्योपरि कोपः, न तु शिष्यस्य ......अत्रेदं विचार्यते। कोपाद् द्रोहादयो भिन्नस्वभावा व्याख्याताः। तत् कथं तदर्थानां यं प्रति कोप इति सामान्येनैतद्विशेषणमुपपद्यते। तेषां हि 'यं प्रति द्रोहः' 'यं प्रतीर्ष्या' 'यं प्रत्यसूया' इत्येव घटते। नैष दोषः। क्रोधस्तावत् कोप एव। द्रोहादयस्तु द्विप्रकाराः। केचित् कोपहेतुकाः केचिद्वस्त्वन्तरहेतुकाः। तत्रहे पूर्वेषां ग्रहणं यथा

स्यात् उत्तरेषां मा भूदित्येवमर्थं "यं प्रति कोपः" इति सामान्येन विशेषणमुक्तम् , अन्यथा व्यभिचारादिदमनुपादेयं स्यात् इति ।

( क्रमशः )

---

## श्रीमर्कटमार्दलिको नाम भाणः

[ श्रीमहालिङ्ग-कवि-प्रणीतः ]

लङ्कापुरोद्दीपनदीपदण्डं
    कीनाशपाशं पिशिताशनानाम् ।
आस्फोटशब्दत्रुटदद्रिकूटं
    हनूमतो वालमनुस्मरामः ॥

सूत्रधारः । भोः सभासदः, "विनायकं प्रकुर्वाणो रचयामास वानरम्" इत्याभाणकमनुसृत्य किमप्युपक्रमितुं चिन्तितम्, किमप्युपक्रान्तमस्माभिः । भवतु, एवमपि भवतामवश्यं चित्तविनोदः संपाद्यते, यदस्य रूपकस्य रचयिता,

महालिङ्गकविः सोऽयं यद्वा तद्वाप्युदारधीः ।
विशोधयन्नुपादत्ते वस्तु यस्तून्नयत्यपि ॥

अपि च वयं रङ्गप्रयोगेषु परिनिष्ठितकौशलाः । (श्रुतिमभिनीय) अये कोऽयं सीत्करोति निःसहमस्मदात्मश्लाघाममृष्यमाण इव (दृष्ट्वा), ह ह ह, विदितं भोः,

उदस्यन् लोललाङ्गूलमुत्पतन् विलुठन् भ्रमन् ।
अयं वनमृगः कश्चिदावेदयति वेदनाम् ॥

धिक् कष्टम् । अति हि व्यथते वराकः । भवतु, आर्तस्य पुरो न स्थातव्यम् । तदितो निष्क्रामामि ।          इति निष्क्रान्तः ।

प्रस्तावना ।

(ततः प्रविशति यथानिर्दिष्टो वानरः)

वानरः। अहो धिक्! चापलात्कण्टकवृतिमुदग्रां लङ्घयतो मे लाङ्गूलं कण्टकाविद्धमभूत्, असह्या चेयं वेदना। तत्कुत्र नु खलु प्रतीकारमन्विष्यामि? (दृष्ट्वा) अये एष नापितः करणसमुद्गकं कक्षे निक्षिप्य आगच्छन् दृश्यते। नूनमनेन मे कार्यं साधयिष्यते। (उच्चैः) भो भो नापितमहत्तर, अस्ति मे कार्यम्। वेतनं ते दास्यामि। पश्य मे लाङ्गूलमूलम्। अत्र लग्नं कण्टकमुद्धर। त्वं हि मनुष्याणां शस्त्रचिकित्सामपि करोषि। वेदनार्तस्त्वां शरणं प्रपन्नोऽस्मि। किं ब्रवीषि? "भवतु पश्यामि" इति। अहो सुजनो भवान्। किन्नु खलु सुदृढं विद्धं कण्टकमशस्त्रोपायेनोद्धरिष्यति भवान्? स्वैरं प्रयुङ्क्ष्व शस्त्रम्। किं ब्रवीषि? "अवस्थितो भव शस्त्रं प्रयुञ्जानस्य मे" इति। एष स्थिरोऽस्मि। अविहा अविहा, भवान् मां मारयति! स्फारीभवति वेदना। अयि भो धूर्त किं मे पुच्छं त्वया चिकित्साच्छलेन समूलमुच्छिन्नम्? इदानीं न भवसि। उत्पाटयामि ते अक्षिणी, विदारयामि ते नासाम्। किं ब्रवीषि भयविह्वलः, "भो मर्कटराज, न मेऽत्रापराधः। कण्टकमुत्कर्षतो मे भवान् तथा उत्प्लुत्योत्प्लुत्यानर्तीत्, यथा अवशान्मे छुरिका पुच्छमूले प्रहृतवती" इति। भोः अवितथम्, इयं च नः प्रकृतिः। किंतु न वयं नृशंसाः। त्वं तावन्मुच्यसे। मत्पुच्छविच्छेदी निस्त्रिंशस्त्वया मद्धस्ते देयः। किं ब्रवीषि "गृह्णातु महाभागः" इति। ह ह ह दत्त्वा चासौ प्रधावितः (आत्मानं निवर्ण्य)।

भोः कष्टम्! छिन्नलाङ्गूलो मर्कटः कस्य न हास्यास्पदं भविष्यामि? भवतु वहामि निस्त्रिंशम्। उपस्थिता खलु सम्पदनुमोदितव्या। अथवा कथमेनं वहामि? न मे कक्ष्यावन्धः। विकोशश्चायमनिपुणेन मयोह्यमानो मा तावद्धस्तपादं मे निकृन्ततु। किं दूरत

एनमुत्सृजामि ? अयं मे पुच्छप्रतिनिधिः कथमुत्सृज्यते ? (इति परिक्रामति)

अये कैषा जरती या शिम्बीपिटकं निष्पादयन्ती छुरिकाया अलाभान्नखैरेव वंशीशिम्बिका विदारयति ? अनुकम्पयाम्येनाम् (उपसृत्य) अयि मातः, मास्तु ते क्लेशः, एष निस्त्रिंशस्ते कर्मलाघवमातनोतु । न च मेऽस्मिन् स्पृहा । किं ब्रवीषि, "कस्त्वम्" इति । अहं हि पूर्वं वानरः, पुच्छच्छेदादिदानीं नर एव । तिष्ठत्वतिप्रसङ्गः । अस्ति निस्त्रिंशेन प्रयोजनं न वा ? किं ब्रवीषि "क इदानीं भवन्तमन्तरेणेदृशमुपकारं चिन्तयति" इति । तिष्ठतु श्लाघा । न वयं प्रत्यक्षस्तवमभिनन्दामः । गृह्णात्वत्तिका । साधयत्वेतेन कर्म । किं ब्रवीषि, "चिरं जीव" इति । अतिसाध्वी खल्वसि । साधयामस्तावत् । (किञ्चिदन्तरं गत्वा) अहो मे लाङ्गूलमोक्षाद् गतिवैचित्र्यं सञ्जातम् । (श्रुत्वा) अये कोऽयं चटच्छब्दः ? इयं च जरती परितप्यते । (निवृत्य) अयि मातः, किमापतितम् ? किं ब्रवीषि "पिटकग्रथने व्यापारितेयं छुरिका भग्नेति । अयि मूढे लब्धपरिपालनासमर्थे, धिक् त्वाम् । मत्पुच्छप्रतिनिधिं निस्त्रिंशं त्रोटितवत्यसि । किं ब्रवीषि "कृपालो, अशरणाहं किं करिष्ये" इति । तर्हि एनमेव पिटं मूल्यं कल्पयित्वा आत्मानं मोचय । किं ब्रवीषि "दिष्ट्या प्रसन्नो भवान्, कुरु यथेच्छम्" इति । एषा पिटं विसृज्य व्यपेता । अहो बत जरत्यामपि शुल्कनिष्ठुरो जातोऽहम् । अथवा ईदृशो व्यवहारः । तदिदानीं दैवनियोगात् पिटवाही संवृत्तोऽस्मि । कुतः पिटः कुतो मर्कटः ? फुरुफुरायन्ते ममाङ्गुल्यः एनं पिटमवयवशः प्रविलोप्तुम् (परिक्रामति) ।

अये को मामाह्वयति ? (विभाव्य) दिष्ट्या न माम् । कोऽप्यसावुपच्छन्दयति बलीवर्दयुगलं पिण्याककार्पासिकवलैः कटे भूमावास्तृतैः । भवतु द्रक्ष्याम्येनम् । (परिक्रम्य) भद्रमुख, कोऽयं निर्बन्धः ? किं

बलीवर्दौ भूतलप्रक्षिप्तं पिण्डं भोक्ष्येते ? किं ब्रवीषि "पिण्याकपिटोऽचिरादाभ्यां ध्वंसितः। एवमेव प्रत्यहं शृङ्गाशृङ्गि कुर्वाणावेनौ दुर्दान्तावशनपिटं नाशयतः। किमहं करवाणि ? अर्हत एतावुपेक्षाम्" इति। सखे मा शुचः, किमहमनेन पिटेन करोमि। आदत्स्व स्वैरमुपयुङ्क्ष्व। किं ब्रवीषि, "मा मा भवान्। दुष्टावेतौ बलीवर्दावर्हतोऽवज्ञाम्" इति। भद्र, न मे प्रणयस्त्वया विच्छेदनीयः। किं ब्रवीषि "यदि ते निर्बन्धः ग्रहीष्यामि" इति। गृहाण गृहाण। (दत्त्वा) अहह यदसाववदत् तदमिथ्यैव। दुष्टावेतौ बलीवर्दौ परस्परसङ्घर्षेण द्रुतमवघट्य आच्छिद्य विमृद्य च पिटं क्षणात् ध्वंसितवन्तौ, अहो मे पिटको विपन्नः, अहो मे पुच्छप्रतिरूपको विपन्नः, न मृष्याम्येनं पुरत एवावस्थितमपराधिनम्। (सक्रोधम्) भो दुर्मते, गृहीतस्त्वया मे पिटकः। न च किंचिन्मूल्यं दत्तम्। प्रत्यर्पय पिटकम्। किं ब्रवीषि "त्वयानिच्छतो मे प्रतिपादितः, नाशितो बलीवर्दाभ्याम्। कस्त्वं मामभियोक्तुम् ? कोऽहं ते दातुम् ? पृच्छ बलीवर्दावेव" इति। एवं नु भणसि ? भवतु। बलीवर्दौ मे पिटकप्रतिभुवौ न्यायस्थलेऽभियोक्ष्ये। एतम्, बलीवर्दौ मे प्रतिवादिनावेतम्। अधिकरणं नेष्यामि वाम्। अरे मूर्ख, किमवगृह्णासि ? तिष्ठ दूरतः। कोऽहं तव ? त्वं वा को मम ? अहं बलीवर्दौ प्रक्ष्यामि किल। यदि मन्मार्गं निरोत्स्यसि तदा त्वन्नयने उत्पाटयिष्यामि। नासापुटं विदारयिष्यामि। श्रवसी निकर्तयिष्यामि। केशान् विलोप्स्यामि। हहह! एष भीषितो मया प्रनष्ट एव। हैं हैं बलीवर्दौ हैं हैं।

(परिक्रम्य श्रुतिमभिनीय) अयं कश्चिन्मामाह्वयति। कस्यैषा धीरता ? एष खलु चक्रोपजीवी वणिक्। भो वणिग्वर, कुतो मां शब्दाययसि ? किमहं ते परिचितपूर्वः ? किं ब्रवीषि "कुतस्ते इमौ

बलीवर्दौ" इति। यतः कुतो वा। किमियं ते विचिकित्सा? किं ब्रवीषि, "मारिष, मा कुप्य। ममास्ति प्रयोजनमेताभ्याम्। किं न पश्यसि मां स्वयमुद्युज्यमानमेतस्य तैलयन्त्रस्यावर्तने" इति। पश्यामि, भाव, पश्यामि। किं मया करणीयम्? किं ब्रवीषि "यदि मे मारिषः प्रसीदति, ग्रहीष्याम्येतौ मुहूर्तमात्रं यन्त्रपरिवर्तनाय" इति। भाव, अनेन प्रस्तावेन साप्तपदीनमावयोः सख्यं संवृत्तम्। बन्धुरिव मधुरं त्वं मामाह्वयसि। किं ब्रवीषि सादरम् "अथ किम्, अथ किम्। कः सन्देहः?" इति। भाव, न खलु अतिमात्रमायास्य पादानेतयोर्भङ्क्ष्यसि। किं ब्रवीषि "न न, अरुग्णौ पुनरेतौ बाढं ते निर्यातयिष्यामि" इति। तेन हि नियोजयतु भाव एतौ युगन्धरौ। किं ब्रवीषि, "अतिदृढावेतौ कर्मसहौ नैतयोर्विपत्तिशङ्का" इति। तथाप्यस्ति खलु पुरुषप्रमादः परिहरणीयः। भोः, मा तावत् तोत्रेण दृढं प्रहर। अयि भोः मैवं वालनालमवरुज। किमसौ न शृणोति? अहो धिक् परिकृष्यमाणस्य यन्त्रहतकस्य दुःश्रवोऽयं क्रेङ्कारवः (उपसृत्य किञ्चिदुच्चैः) भाव, जिगमिषा मे जाता, प्रत्यर्पय धवलौ। किं ब्रवीषि "अहो मारिष, किं न जानीषे, सांप्रतमेव निष्पीड्यमानास्तिला निश्च्योतयितुमारभन्ते। प्रतिपालयतु मारिषः" इति। भाव, कियत् प्रतिपालयितव्यम्? अक्षमा वयं जातिस्वभावेन प्रतिपालनकर्मणि। तद् भावो मां विसर्जयतु। किं भणसि, "एष विसर्जयामि" इति। कदा? किं ब्रवीषि, "कलशमात्रं तैलमुद्धृतम्, अवरतस्त्रयोदशकलशा उद्धर्तव्याः। यदि मारिषः कार्यान्तरं स्मरति गत्वा श्वः प्रातरागम्यताम्," इति। अरेरे जाल्म, किं निक्षेपमात्रे स्वाम्यमभिमन्यसे? अपेहि रे दुर्मते अपेहि। कस्य स्वं केन भुज्यते? किमहं ते श्वः प्रातरागमिष्यामि? मय्यपि भो वैयात्यं प्रदर्शयसि! किं त्वत्प्रतीक्षया मया रात्रिर्जागरितव्या, कितवस्य तव हस्ते लग्नाविमौ मे धवलौ कथं प्रत्युपेष्यतः इति। विरम रे परवञ्चक,

हीनमते, विरम। अथवा स्वयमेवाहं मोचयित्वा ग्रहीष्यामि धवलौ (इति साटोपमुपधावति)।

(प्रतिहतिमभिनीय) हा धिक् किमयं दुष्टवणिग्युगमूलमुपारूढो हस्तगतेन सशलाकेन तोत्रेण मां तर्जयते। साहसिकश्चायं वणिक्पाशः। अहो वैशसम्! तदिदं प्राप्तकालम्। योऽयमुद्धततैलोपेतः कलशस्तमपहरामि। दिष्ट्या आसादितः कलशः। अरे वैश्यापसद, मृत्तिका निपततु ते वाणिज्ये। अरे परस्वापहारिन् भज्यन्तां ते यन्त्रोपस्काराः। म्रियेतां बलीवर्दौ! मृत्युमुखं द्रक्ष्यसि। एष हसन् किं ब्रवीषि, "ध्वंसस्व अपुनर्निवर्तनाय" इति। अहो चोरस्यापि चोरः! ईदृशैः खलु धूर्तकैर्दुःसञ्चरो हीनप्रभावाणां संसारवर्त्मा। भवतु यथालाभपरितोषिणा भवितव्यम्। (परिक्रामति)।

अहो नु खलु भोः किमिदं कष्टात् कष्टतरं मयोपार्जितम्। एष तैलपूर्णः कलशः गत्युद्घातवशात् अकृत्यकारिणं मामङ्कयन्निव, झलज्झलायमानतैलबिन्दुवर्षैः स्नपयति। न च प्लवङ्गमेन मया सुलभा समविक्षेपसरला मानुषाणां गतिः। दुर्वहश्चायं भारः। कुतः खल्वात्मानं क्लेशयामि? तदस्मिन् वृक्षोपान्ते क्षणमेतमवतार्य विश्रमसुखमनुभवामि। (विश्रम्य पुरः सदृष्टिक्षेपम्) अदूरे चायमुटजः। किमत्र यः कश्चिद् वसति, उत आवासयामि? (विलोक्य) अये एषा कापि बहिरुद्ग्रीविकां कुर्वती जरती किमप्यन्तर्घुरघुरायते, किमपि परिभ्रान्तेव दुःखमास्ते। भवतु सम्बोधयाम्येनाम्। (उपसृत्य) मातः, कीदृशी वार्ता? किं विषण्णेव दृश्यसे? किं ब्रवीषि "अहं किलापूपिकी। प्रत्यग्रनिष्पादितैः काम्यैरपूपैर्वृत्तिं सम्पादयामि। तस्या ममाद्य चुल्लीं प्रज्वाल्य सज्जीकृत्य च पिष्टं चक्रिका निष्पादयितुं तैलभाण्डमाहरन्त्या हस्तात् सहसा भ्रष्टं भग्नं भाण्डं विनष्टाखिलतैलं जातम्" इति। अहो दैवनिर्घातः! जननि, मा शुचः। अस्ति मत्निकटे प्रभतं प्रत्यग्रं तैलम्।

आदत्स्व, निर्वर्तय चक्रिकाः । किं भणसि, "आयुष्मान् भूयाः, भद्राणि पश्य" इति । प्रतिगृहीतास्ते आशिषः । परोपकारपरायणं मे जन्माद्यैव कृतार्थं भवति । एतत्तैलभाण्डम्, स्वीकरोत्वत्तिका (दत्त्वा विश्राम्यति) ।

(विलोक्य) अहो परःशताश्चक्रिका मुहूर्त्तमात्रेणानया निष्पादिताः । अयि मातः, किं तैलं शिष्यते उत पिष्टम् ? किं ब्रवीषि, "पिष्टमेव शिष्यते, कुतस्तैलम्" इति । किं सर्वं मम तैलं त्वयाऽस्यामायसफलकायामाहुतीकृतम् ? कच्चिदपूपान्येव मह्यं दास्यसि ? किमाह भवती "एतानि मे विक्रेयाणि" इति । हुं ! एवं नु ! कस्य तैलमुपयुज्यते ? का त्वमेता विक्रेष्यसे ? अहो कालस्य कौटिल्यं, यत्परद्रव्येणात्मभरणम् । अयि दुराशापिशाचग्रस्ते, दुष्टजरति, अपेहि । निष्क्राम ! उत्सर ! पलायस्व ! अहमस्योटजस्याधिपतिरन्यथा नखदंष्ट्राविपाटितविकीर्णां त्वां वृकवायसेभ्यो बलिं कल्पयिष्यामि । ही ही ही विद्रुतेयमापूपिकी विक्लवं परिदेवयन्ती । (विहस्य) अहो बत जरत्यामपि मया सुभटायितम् । (अन्तः प्रविश्य) किमिदं भूगृहमिवाल्पानिलप्रचारं विरलरविरश्मि सङ्कटावकाशं दुरावसथमतिमहता प्रयासेन मया सम्पादितमस्ति । तत्तूर्णं पिष्टापूपजातमभ्यवहार्य स्वजातिसमुचितं शाखानिलयमपाश्रये । अहो उत्सेधवानपूपराशिः । किं भुनजै अथवा अतिथीनन्वेषै ? नैकाकिना किल स्वादु भोक्तव्यम् (द्वारमासाद्य) कः कोऽत्र भोः स्वागतमतिथिभ्यः ! (दृष्ट्वा) अये एते पञ्चषा इतोमुखमुपसर्पन्ति नूनं सम्भावयिष्यन्ति मदाह्वानम् । एते किल माङ्गलिकवाद्यसंमेलकर्तारः । तेन हि सफलं मे सुव्रतम् । अयि भोः अलं शङ्कया । स्वगृहमेतदतिथीनाम् । आगच्छत । निषीदत । पवित्रीकुरुत मन्निकेतनम् । धन्योऽस्मीदानीं भवतामतिथीनां लाभात् । किं ब्रूथ, "कुत्र सापूपिकी जरती" इति । अलं विचारेण । अयमस्मि तस्याः पुत्रकृतकः । किं वः

कार्यं तया ? किं ब्रूथ "रे वानरमहत्तर क्षुधिता वयमापूपिकीमन्विष्यामः" इति । बाढं वानरोऽस्मि, तथापि विश्वसित भोः, अहं तस्या अनन्तर आपूपिकः संवृत्तः । किन्तु न मया अपूपानि विक्रीयन्ते, तैरतिथिव्रातमाराध्य धर्मार्जनमिष्यते । तेन हि स्वागतं वः ! गृज्जाः पिष्टापूपचक्रिकाः, निषेवध्वं यथेच्छम् । किं ब्रूथ, "प्रियं नः" इति । तेन ह्यादद्धम्, अत्त, जक्षित, खादत, भुङ्ग्ध्वम्, ग्रसध्वम्, अश्नीत, निगिरत, अभ्यवहरत, भक्षयत, गृह्णीत, गृह्णीत, पुनर्गृह्णीत । (अपवार्य) अये अहमपि क्षुधितः । (प्रकाशम्) किं भोस्तृप्ताः स्थ ? किं ब्रूथ, "अहो सौष्ठवम् ! अहो स्वादुता ! अहो पाकसंयोगः ! पुनः पुनर्ददातु भवान्" इति । अये दास्याःपुत्राः, किं पुनः पुनर्ददामि ? नावशेपयथ मह्यमेकामप्यपूपिकाम् ? अहमपि क्षुधितः । ननु भवन्तो भणथ, 'भाव कुतस्त्वमपि नाश्नासि' इति । अहो नु भोः,घस्मराः, उदरम्भरयः, स्वार्थपराः, बडवाविशिष्टोदराः, वराकाः, किं पुनर्दद्याम् ? इदं वो दद्याम्, काष्ठं दद्याम्, अङ्गारं दद्याम्, गोमयपिण्डं दद्याम्, सम्मार्जनीं दद्याम्, चपेटां दद्याम्, गलहस्तिकां दद्याम्! अपेत! विद्रवत! नश्यत ! ध्वंसध्वम्! पलायध्वम्! ह ह ह हा हा हा प्रनष्टमेतैर्महाशिभिः! अहो नु खलु भोः! के वकभीमकुण्डोदराणामेते ?

( निपुणमपूपभाण्डं निर्वर्ण्य ) यत्सत्यं समग्रमेवापूपकूटं निःशपतामनेष्यन् , यद्यहमत्यन्तलोपात् प्रागेव नावारयिष्यम् । दिष्ट्या स्तोकमवशिष्टम् । ( उपविश्याभ्यवहार्य ) धावद्भिराकीर्णानि शकलान्यप्यद्य बहुमन्तव्यानि । ( उच्चित्य भुक्त्वा ) श्रान्तोऽस्मि भोः अनेन मानुषसंसर्गदौर्गत्येन । ( दृष्ट्वा ) अये किमिदम् ! परित्यज्य खलु धावितं तैरेनं मर्दलम् । अस्ति मे कुतूहलमस्मिन् । विश्रमहेतोः सङ्गीतकं सेवे । कुत्र विश्रमोऽस्माकं मुक्त्वा तरुशिखरम् ? तदादाय मर्दलमस्य महान्यग्रोधस्य स्कन्धे सुखासीना भवामि । (तथा कृत्वा ) अये अदूरे

च मे सगोत्राः। त्वरयति मामुत्कण्ठा मानुषेष्वोजायितं मे सगोत्रेषु प्रख्यापयितुम्, यथा न ते छिन्नपुच्छं मामुपहसेयुः। तद्वादयामि मर्दलम्।

टंटं टटंटं टटटं टटंटम्

अये मर्दलशब्दाहूताः मद्वयस्या बान्धवाश्च मामाश्चर्यविस्फारितदृशः परिवृण्वन्ति, तदेवमभिव्याहराम्येनान्। (सावष्टम्भगम्भीरम्) अयि भोः हनूमदन्ववायवारिनिधिपारिजाता रामदेवपादानुध्यातारः परबल-विजेतारः शाखासहस्रनिलया वनालयाः, अद्य मानुषवर्गसंसर्गं दैवगत्या समधिगत्य तद्विश्वासहेतोः परित्यक्तपुच्छभारोऽहम् वानरत्वान्नरत्वमु-पारूढः गूढचारः सन् सङ्गीतकभङ्गिं शिक्षितवानस्मि। श्रूयतामवसरप्राप्तं किमपि गीतवस्तु। किं ब्रूथ भोः पुच्छमास्फोटयन्तः किलकिलारावैः कोलाहलं कुर्वन्तश्च "भ्रातः शृणुमः शृणुमः" इति। तेन हि दृढमात्म-निग्रहेण साधितस्पन्दविरहाः किलकिलां बलान्मुद्रयन्तः शृणुत। (गायति)

वालं विहाय च्छुरिकोपलब्धा
निस्त्रिंशमूल्यं पिटको गृहीतः।
पिटस्य नाशे वृषभावुपात्तौ
तयोः प्रहाणेन घटः सतैलः॥
टं टं टटं टं टटटं टटं टं
टं टटं टं टटटं टटं टम्॥

---

*Musical Notes.*

**पापाम रीगारि रीसा ; ;**
**मामाम मामाम गागारि सरिगा॥**

**स्वरविशेष-सूची—**

**शुद्धर्षभः प्रथमः साधारणगान्धारः अनन्तरगान्धाराः शुद्धमध्यमः।**

तैलव्ययेनाप्तमपूपजातं
दत्त्वा तदर्थिष्वथ मर्दलोऽयम् ।
न वानरो मार्दलिको न भूयात्
टंटं टटंटं टटटं टटं टम् ।।

अये, शाखाडोलान्दोलनमपि विस्मृत्य विस्मयपरवशाः सारस्यभूमानमनुभवन्तः शृण्वन्ति मां सुहृदः । तदिदमपरं गीतवस्तु—

जेता बली राजतेऽन्धे
लोके तमुच्छिद्य धूर्तः समिन्धे ।
सर्वः परद्रव्यलोलः
पूर्वं भवेच्चारुसंलापशीलः ।
टंटं ट टंटं टटंटं
टं टटं टंटटंटंट टंटम् ।।

दीनेषु दैन्यं निविष्टं
स्यात्साहसे श्रीर्हि सर्वत्र दृष्टम् ।
स्वार्थं स्वयं चेन्न मन्ता
कस्येतरस्य प्रसज्येत चिन्ता ।।

टंटंटटंटंटटंटं
टंटंटटंटंटटंटंटटंटम् ।।

मूढा निरस्यानृशंस्यं
सत्यं दयां पापचिन्तामवश्यम् ।
स्वार्थे स्वयं व्याप्रियध्वं
स्वेष्टं परस्माद् यथेच्छं हरध्वम् ।।

टंटंटटंटटंटं
टंटंटटंटंटटंटंटटंटम् ।।

लोकं विगाह्याविलाम्भः-
कासारकल्पं विनिर्णीतदम्भः ।
श्रीमन्महालिंगनामा
कविर्व्याख्यदेवं* गभीरार्थधामा ।
टंटंटटंटंटटंटं
टंटंटटंटंटटंटंटटंटम् ।

अहो आनन्दमन्थराः सगन्धा मन्मर्दलटङ्कारानुहरणस्फोटितशाखाशतविधूतफलपर्णनिचया लोलवालहस्तावष्टब्धतरुस्कन्धविगलत्कलेबरविवशान्दोलनकन्दलितहेलासमुल्लासाः किं ब्रूथ। "सखे निर्भरमाराधिता वयं तव गीतमधुना मत्ता इवेदानीं विभ्रमामः" इति। अहो भोः कृतार्थोऽस्मि। एवं च भोः सुहृदः प्रियबान्धवाः किं वो भूयः प्रियमुपहरामि ? किं ब्रूथ "किमतः परमपि प्रियं यदास्माकीनस्त्वं मानुषकल्पः कलाशिक्षया कायलक्षणेन च नित्यमेव नो गोष्ठीमुकुटमणिर्जातः" इति। अत्युदारमभिनन्दनम्, अनुगृहीतोऽस्मि भोः। तथापीदमस्तु भरतवाक्यम्।

येषां न लक्ष्म त्रुटितं न येषां
क्रियान्तरायः करणप्रणाशः ।
आधारमुन्मृज्य न भुज्यते यै-
र्ये निग्रहस्थानविदः परेषाम् ॥
लग्नं न यैर्दुर्जनवागुरासु
लग्नैश्च वात्मोद्ध्रियते कथञ्चित् ।
आर्तानुकम्पाकृत आतिथेया
ये ये च ते सन्त्विह संप्रहृष्टाः ॥

इति निष्क्रान्तः

* "व्याख्यत्तदेवं" इति पाठान्तरम् ।

# प्रत्याख्येयानि वार्त्तिकानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

१। इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च।

कस्य वा न विदितं वैयाकरणस्य "इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च" इति सहसुपा-सूत्रगतं द्वैतीयीकं वार्त्तिकम् ? तच्च भाष्यकृता व्याख्यातम्—इवेन सह समासो विभक्त्यलोपः पूर्वपद-प्रकृतिस्वरत्वञ्च वक्तव्यमिति। "कुगतिप्रादयः" इतिसूत्रस्य [२।२।१८] भाष्येऽपि वार्त्तिकमुदाहरणद्वितयञ्च सन्दृश्यते। काशिकायां सह सुपेति सूत्रे वार्त्तिकमिदं नोपलभ्यते, कुगतिप्रादय इति सूत्रे पुनर्दृश्यते—"इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम्। वाससा इव।" इति। व्याख्यातञ्चेदं काशिकाविवरणपञ्जिकायाम्—" 'सर्वधातुभ्योऽसुन्' इत्यनुवर्तमाने "वसेर्णिच्च" [उ०४।२२३] इत्य-सुन्प्रत्ययान्तो वासस्शब्दो व्युत्पादितः। वस्त्रशब्दोऽप्यौणादिकष्ट्रन्-प्रत्ययान्तः, तेन द्वावप्येतौ 'ञ्नित्यादिर्नित्यम्'[६।१।१९७] इत्याद्युदात्तौ।" इति। पदमञ्जर्य्यामपि दृश्यते—वसेर्णिच्च इत्यसुन्प्रत्ययान्तो वासःशब्दः, वस्त्रशब्दष्ट्रन्-प्रत्ययान्तः, द्वावपि नित्त्वादाद्युदात्तौ* इति। अत एव "वाससी इव" "वस्त्रे इव" इति जिनेन्द्रबुद्धिहरदत्तसम्मतः काशिकपाठ इति प्रतिभाति। परं भाष्यगतमुदाहरणद्वितयमेव समीचीनतरम्, आद्युदात्तत्वस्यान्त्यस्वरितत्वस्य च द्विविधस्य स्वरस्य प्रदर्शनात्।

यथास्माभिर्दृष्टं तथा प्राचीनेन केनापि टीकाकृतात्र समासस्वीकारे बीजं न विचारितम्। समासे ऐकपद्याद्विभक्तिलोपः सञ्जायते ऐकस्वर्यं

---

* मुद्रितायां पदमञ्जर्यां "नित्याद्युदात्तौ" इति पाठः, स च स्पष्टमेव प्रामादिकः।

च सङ्घटते, अत्र पुनरन्तरेणापि समासमुभयमपि तत् सुघटम्, इवशब्दस्य सर्वानुदात्तत्वात्, समासेऽपि विभक्त्यलोपस्य पूर्वपदप्रकृतिस्वरत्वस्य च विधानात्। यदि पूर्वपदस्योत्तरपदस्य च यथायथमवस्थानं तर्हि समासस्वीकारपुरःसरं विभक्त्यलोपविधानं पूर्वपदप्रकृतिस्वरविधानं च शिरोवेष्टनपूर्वकनासिकाप्रदर्शनन्यायं संस्मारयति।

मैत्रेयरक्षितेन तन्त्रप्रदीप उक्तम्—इवेन* समासवचनं विभक्त्यलोपश्चेति समासाश्रितस्य लुकः प्रत्यासत्त्यायं निषेधः इतीवाद्† अव्ययाल्लुग् भवत्येव। उत्तरपदप्राधान्यात् तत्पुरुषस्य समासे कृते इवान्तस्याव्ययत्वमिति समुदायादपि सोर्लुक्। स चाप्यत्रार्थो वस्त्वन्तरमुपमेय इति वक्ष्यते। समासत्वे चात्र पूर्वपदप्रकृतिस्वरे सति विशेषणस्य समासस्यानुदात्तः प्रयोजनम्। इति।

व्याख्यातञ्चेदं तन्त्रप्रदीपप्रभायाम्—"इवेन समासवचनं विभक्त्यलोप इत्युक्तम्। यद्येवम् इवशब्दात् सोर्लुगभावे विभक्तेः श्रवणं प्राप्नोतीत्यत आह—स चात्रेत्यादि। यदि विभक्त्यलोपस्तदा समासेन किं प्रयोजनम्? अन्तोदात्तार्थमिति चेत्, न, पूर्वपदप्रकृतिस्वरस्योच्यमानत्वात् इत्यत आह—समासत्वे चात्रेत्यादि। यदि समासत्वादेव पूर्वपदव्यवहारस्तदैव पूर्वपदप्रकृतिस्वर इति" इति।

एतत्तु सर्वथा चिन्त्यमेव। मा भूत् समासः मा च भूत् पूर्वपदव्यवहारः, किं नश्छिन्नं तावता? पृथक्पदत्वेऽपि सुतरां विभक्तिश्च स्वरश्च सिध्यतः, इवशब्दस्य स्वत एव सर्वानुदात्तत्वात् "अनुदात्तं पदमेकवर्जम्" इति परिभाषामन्तरेणैव तस्य निघातः सिद्ध एव।

सृष्टिधरेण भाषावृत्त्यर्थविवृतावन्यथैव समासविधानं समर्थितम्।

---

* हस्तलिखितपुस्तके 'इतरेण' इति पाठः।

† इतरात् इति हस्तलिखितपुस्तकपाठः।

तथाहि "कुगतिप्रादयः" इतिसूत्रविवृतिविवृतिः—"इवेन सह नित्यसमासो विभक्त्यलोपश्चेति गणसूत्रम् । चन्द्र इव । वाससी इव । उत्तरपदार्थस्य प्राधान्यादिवान्तस्याव्ययत्वमिति समुदायादपि सुपो लुक् । इन्द्र इव चासौ राजा चेति विशेषणसमासे इन्द्रइवराजः । राजाहःसखिभ्यष्टच् इति टच् । इति ।" एतदप्यभित्तिचित्रायितम्, एतादृशस्य समासस्यैवानभिधानात् ।

हेमचन्द्रेण "नाम नाम्नैकार्थ्ये समासो बहुलम्" [ ३।१।१८ ] इति सूत्रस्य बृहद्वृत्तावुक्तम्—तथा कन्ये इव, दम्पती इव, वाससी इव, रोदसी इवेत्यादिष्विवेनालुप्समासः, ऐकपद्यं च समासफलम् । इति ।

कातन्त्रपरिशिष्टकृता "इवेनालोपश्च स्यादेः" [समास १०५] इति सूत्रं निर्माय वृत्तावुक्तम्—इवेन सहोपमानस्य तत्पुरुषो भवति, पूर्वस्य स्यादेर्लोपश्च न भवति । अग्निरिव, वायुरिव, परमोच्चैरितिवदव्ययम् । कुङिव सुगणिव पचनिव उत्तरपदे नित्यत्वाद् द्विर्न स्यात्, समासे सति तद्धितान्तो वृत्यन्तश्च(?) स्यात्, अग्निरिवपाशम्, वायुरिवपाशम्, अग्निरिवसखः, वायुरिवसखः, अग्निरिवमन्यः, वायुरिवमन्यः, अग्निरिवगुः, वायुरिवगुः, अग्निरिवराजः, वायुरिवराजः । समासान्तोऽत् स्यात् । तत् कथं वाक्यमेवेदमिति मत्वा चान्द्रेण प्रत्याख्यातमिदम् । इति ।

अत्र गोपीचन्द्रटीका समुदायेऽव्ययार्थप्राधान्यादव्ययोऽयं समुदाय इत्याह—परमेति । समासप्रयोजनमाह—उत्तरेति । "ङणनानामुत्तरपदे वा द्वित्वम्" इत्युक्तमेव ।

भट्टोजिदीक्षितेन सह सुपेति सूत्रस्य कौस्तुभ उक्तम्—इवेन समास इत्यपि सुप् सुपेत्यनेन सिद्धमित्युक्तम् । युक्तं चैतत् । अन्यथा वार्त्तिकरीत्या नित्यसमासतापत्तौ...जीमूतस्येवेत्यादौ तैत्तिरीयाणां पदद्वयत्वेन पाठासङ्गतिप्रसङ्गाच्च । अत एव "उद्बाहुरिव" [रघु० १।४]

इत्यादौ व्यस्तव्यवहितप्रयोगोऽपि सङ्गच्छते। यथोत्तरं मुनीनां प्रामाण्यात्। ..."वागर्थाविव" [ रघु० १।१ ] इत्यादाविवशब्दस्तु समस्तः पृथग्वा। "उद्बाहुरिव वामनः" "कचाचितौ विष्वगिवागजौ गजौ" [ किरात १।३६ ] इत्यादौ पृथगेवेति तत्त्वम्। यत्तु कश्चिदिवेन समासश्छान्दस इत्याह, तन्निर्मूलं तैत्तिरीयपृथक्पाठविरुद्धं च, इवसमासे समासगां श्रौतीमुपमामुदाहरतामालङ्कारिकाणां प्रतिकूलं च। किञ्च, "हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्" "अद्वैतमप्यनुभवामि करस्य बिल्वतुल्यं शरीरम्" "अहिनिर्ल्वयनीव वीक्षे" इत्यादयः समस्तप्रयोगा "न ह्यस्ति प्रथमान्तेनैव" इत्यन्यपदार्थसूत्रस्थभाष्यसम्मताः। अत एव "अग्निरिवराजो" "वायुरिवपाशः" इत्यादि परिशिष्टोदाहरणमपि सङ्गच्छत इत्यास्तां तावत्। ( पृ: ५८५ ) इति। ( क्रमशः )

## "उत्तिष्ठत जाग्रत"

[ श्री जी. बी. पलसुले ]

'मिथ्या माया भ्रमो जीवनं'
मा गासीरिति दीनं गानम्।
मृतायतेऽसौ यस्तन्द्रयते
वस्तुरूपमपि बहु वञ्चयते ॥१॥

सदेव सौम्याऽऽवेहि जीवनं
तथास्य मरणं नान्त्यं शरणम्।
'मृदेव जीवो मृदं प्रयाति'
आत्मानं तन् नाभिप्रैति ॥२॥

कर्म स्वं स्वं समाचरेम
दिवसे दिवसे पुरः सरेम।
इतीह सृष्टाः, सुखं न भोक्तुं
जगदसारतां न वा शोचितुम् ॥३॥

इयं यामिनी क्षणस्थायिनी
यत्र नाटकं दीर्घदशाङ्कम् ।
हृदि यः स्पन्दो यदप्यमन्दः
स महायात्रापटहो मन्द्रः ॥४॥
जगन्नाम्नि विस्तृतरणाजिरे
घोरेऽस्मिन् संसारसङ्गरे ।
जय तरसाऽरीन् भव वीरस्त्वं
परोत्सार्यमेषो मा भूस्त्वम् ॥५॥
अनागते वा समतीते वा
मा भज काले मुदं शुचं वा ।
वर्तमानमात्रमाद्रियस्व
श्रीशसाक्षिकं कर्म कुरुष्व ॥६॥
जीवितक्रमा महाजनानां
कुर्वन्त्येवं सदा स्मारणम् ।
शक्यं जीवितमुच्चैः कर्तुं
पदचिह्नानि च परिरक्षयितुम् ॥७॥
कालवालुकातले विशाले
विलोक्य यानि च भविष्यकाले ।
भवाब्धिपथिको भग्ननौरपि
धृतिं धारयेदसहायोऽपि ॥८॥
उत्थानरतो भव तस्मात् त्वं
भावि भवत्विति निर्भीकत्वम् ।
भजस्व, शीलय तथाऽखण्डितां
कर्मशीलतां, फले धीरताम् ॥९॥

---

Cf. व्याकरणं नामेयमुत्तरा विद्या। सोऽसौ छन्दःशास्त्रेष्वभिविनीत उपलब्ध्याधिगन्तुमुत्सहते। महाभाष्य १।२।३२

स्थानानि कण्ठादीन्यष्टौ, करणमाभ्यन्तरप्रयत्नः, अनुप्रदानं बाह्यप्रयत्नः। नागेशः। यदुपक्रम्यते तत् स्थानम्। येनोपक्रम्यते तत् करणम्। "Two organs are always concerned in the production of a sound, and by their contact or approximation the sound receives its character: of these, the more immovable one is called the sthāna, or place of production, and it is from this that the sound derives its class designation; the more movable or active one is called the *karaṇa* or instrument of production." WHITNEY.

अनुप्रदानात् संसर्गात् स्थानात् करणविन्ययात्।
जायते वर्णवैशेष्यं परिमाणाच्च पञ्चमात्॥ तै० प्रा० २३।२

करणविन्ययात् = करणविन्यासात्।

[ *Grammar—its method—only correct words are to be taught* ]

शब्दानुशासनमिदानीं कर्त्तव्यम्। तत् कथं कर्त्तव्यम्—किं शब्दोपदेशः कर्त्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति?

अन्यतरोपदेशेन कृतं स्यात्। तद् यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते। 'पञ्च पञ्चनखा भक्ष्याः' इत्युक्ते गम्यत एतद्—अतोऽन्येऽभक्ष्या इति। अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः, तद् यथा 'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकरः'* इत्युक्ते गम्यत एतद् आरण्यो भक्ष्य इति। एवमिहापि। यदि तावच्छब्दोपदेशः क्रियते गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद्—गाव्यादयोऽपशब्दा इति।

* ननु च भो य एव ग्रामस्तन्नगरम्। कथं ज्ञायते? लोकतः। तद् यथाभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर इत्युक्ते सुतरां नागरोऽपि न भक्ष्यते। महाभाष्यम् ७।३।१४

अथाप्यपशब्दोपदेशः क्रियते गाव्यादिषूपदिष्टेषु गम्यत एतद् गौरित्येष शब्द इति।

किं पुनरत्र ज्यायः?

लघुत्वाच्छब्दोपदेशः। लघीयाञ्छब्दोपदेशो गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद् यथा गौरित्यस्य शब्दस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवति।

Words have now to be taught. How is that to be done? Are the correct words to be taught or the incorrect ones or both?

Our purpose will be served by the teaching of either. Thus by the restriction of food fit to be eaten is implied the prohibition of food not fit to be eaten. When we say "five five-nailed animals are fit to be eaten", it is implied that five-nailed animals other than these are not fit to be eaten. Or by the prohibition of food not fit to be eaten is implied the restriction of food fit to be eaten. Thus, when we say, the domestic fowl should not be eaten, the domestic pig should not be eaten, it is implied that the wild variety of these two animals is fit for food. The same is the case here also. If the correct words are taught, when the word "gauḥ" is taught it is implied that "gāvī" etc. are corruptions. If again, the corrupt words are taught, when "gāvī" etc. have been taught, it is implied that "gauḥ" is the correct form.

Now, which of these two alternatives is preferable? Instruction on correct words is to be preferred on the ground of succinctness. Instruction on correct words is more succinct. Instruction on incorrect words is more prolix, for each correct word has many corrupt forms. Thus "gāvī,"

"goṇī," "gotā," "gopotalikā" etc. are corruptions of the correct word "gauḥ." Moreover, [by the instruction on correct words] there will also be the direct exposition of the (words) required.

पञ्च पञ्चनखा भक्ष्याः—This is the stock example of what मीमांसक's term परिसंख्या. Injunctions have been divided into three classes, viz., विधि, नियम and परिसंख्या. The distinction between these is set forth in the following Karikā :

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

That which enjoins something not at all known from other sources is a विधि (i.e. अपूर्व-विधि) e.g., व्रीहीन् प्रोक्षति. But for this injunction the sprinkling of water over the wheat could not have been known at all. This injunction tells us for the first time that in the Dars'a-Pūrṇamāsa sacrifices wheat has to be sprinkled with water.

That which restricts us to one of two or more possible alternatives competing for the mastery is known as नियमविधि e. g., व्रीहीनवहन्ति. What is wanted, here, is clearly the separation of the chaff from the grains of wheat. Now this can be done in three ways—first, by अवघात *i.e.* pounding with the pestle in the mortar, secondly by मर्द्दन or rubbing together with force, and thirdly by नखविदलन or peeling off with nails. In this case any one of these three alternatives is possible but not more than one. The injunction व्रीहीन् अवहन्ति restricts us to अवघात i.e. pounding by means of pestle and mortar. Hence it is a नियम.

A Parisaṃkhyā is an injunction which restricts us to one of two or more possible things which may take place simultaneously and which are known independently of the present injunction ; e.g. पञ्च पञ्चनखा भक्ष्याः. Man naturally wants

to eat the five animals शशक, शल्लक etc. with five nails as well as other animals with five nails and it is possible to eat both kinds of animals at one sitting. The injunction **पञ्च पञ्चनखा भक्ष्याः** restricts us to only five particular species of animals with five nails thereby forbidding the eating of other animals with five nails. We must note in this connexion that this injunction does not *enjoin* the eating of the five animals with five nails—one may eat them or not just as one pleases, but *forbids* the eating of all other animals with five nails.

We should note here that since in both **नियम** and **परिसंख्या** there is the common element of restriction to one out of many possible alternatives, the terms are often used interchangeably. Thus in grammar a **परिसंख्या** includes cases which strictly speaking come under **नियम**. As Panḍitarāja Jagannātha points out : नियमोऽप्यस्मिन् दर्शने [ i. e. अलङ्कारशास्त्रे ] निरुक्तलक्षणाक्रान्तत्वात् [ "सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिद्विशेषाद्व्यावृत्तिः परिसंख्या" ] परिसंख्यैव, पाक्षिकप्राप्तियुगपत्प्राप्तिरूपस्यावान्तरविशेषस्याविवक्षणात् । अत एव वैयाकरणानां मते परिसंख्यापि नियमशब्देनोच्यते । तथाहि—"कृत्तद्धितसमासाश्च" [ १।२।४६ ] इत्यत्र समासग्रहणं नियमार्थमिति हि तेषां सिद्धान्तः । तत्र हि समासे पाक्षिक्याः प्रातिपदिकसंज्ञायाः प्राप्तेरभावात् कथं नाम पराभिमतनियम उपपद्यते । युगपद्धि समास-समासेतरपदसङ्घातयोः "अर्थवत्—" [ १।२।४५ ] सूत्रं प्राप्तमिति परिसंख्या भवितुमर्हति । पूर्वतन्त्रे तु नियमपरिसंख्ययोर्भेदेन परिभाषणम् । यदाहुः [ तन्त्रवार्त्तिके ]—

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्ते परिसंख्येति गीयते ॥

विधिः—स्वर्गकामो यजेत इत्यादिः । यागादेः प्रकारान्तरेणाप्राप्तेः । नियमः—व्रीहीनवहन्ति, समे देशे यजेत इत्यादिः । पुरोडाशनिर्माणफलोपधायकतावच्छेदककोटिप्रविष्टाया वितुषतायाः सम्पादकत्वेनावहननस्य प्राप्तेर्नखविदलनसमवधानकालावृत्तित्वेन, यागाधिकरणतया समदेशप्राप्ते विषमदेशसमवधानकालावृत्तित्वेन च पाक्षिकत्वात् । परिसंख्या—इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानी-

मावत्ते [ तै० सं० ५।१।२।१ ] पञ्च पञ्चनखा भक्ष्याः [ महाभारत, शान्तिपर्व १४१।७० ] इत्यादि । रशनाग्रहणलिङ्गेनाश्वाभिधानीगर्दभाभिधान्योरादानस्य युगपत् प्राप्तत्वात् ।

पञ्च पञ्चनखा भक्ष्याः—The quotation is from Mah.bh rata, S'āntiparvan, 141, 70. The stanza runs thus :

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः ।
यथा शास्त्रं प्रमाणं ते माभक्ष्ये मानसं कृथाः ॥

With this we may compare Manu V. 17–18:

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान् ।
भक्ष्येष्वपि समुद्दिष्टान् सर्वान् पञ्चनखांस्तथा ॥
श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः ॥

[ननु च श्वावित्प्रभृतीनां पञ्चनखानां भक्ष्यत्ववचनादन्येषामभक्ष्यतासिद्धः सर्वान् पञ्चनखानिति प्रतिषेधवचनमनर्थकम् । नैष दोषः । सर्वशब्देन प्रतिषेधे स्पष्टा प्रतिपत्तिर्भवति । भक्ष्यविशेषनिर्देशेन तदन्येषां याभक्ष्यता-प्रतिपत्तिः सानुमानिकी प्रतिपत्तिः । गौरवं हि तथा स्यात् । मेधातिथिः । ]

Baudhāyana says : भक्ष्याः श्वाविद्-गोधा शश-शल्यक-कच्छप-खड्गाः खड्गवर्जाः पञ्चनखाः । i. 5. 131.

Gautama says : पञ्चनखाश्चाशल्यक-शश-श्वाविद्-गोधा-खड्ग-कच्छपाः । काक-कङ्क-गृध्र-श्येना जलजा रक्तपादतुण्डा ग्राम्य-कुक्कुट-शूकराः २८।२७, २९

The five five-nailed animals are : शशक (hare), शल्लक (porcupine), गोधा (Iguana), खड्ग (rhinoceros) and कूर्म (tortoise).

A poet has composed the following Samasyā-p rana stanza:

दूति किं तेन पापेन शास्त्रातिक्रमकारिणा ।
पञ्च पञ्चनखा भक्ष्याः षष्ठी त्वं येन भक्षिता ॥

सुभाषितावलिः १४२९

This is explained by

बहुनात्र किमुक्तेन इति सत्कार्यसिद्धये।
स्वमांसान्यपि दत्तानि वस्तुष्वन्येषु का कथा ॥
सुभाषितावलिः १४३५

Manu also mentions 'domestic fowl' (ग्राम्यकुक्कुट) in the list of animals not fit to be eaten : कलविङ्कं प्लवं हंसं चक्राङ्गं ग्राम्यकुक्कुटम् V. 12. Medhātithi says : ग्राम्यग्रहणादारण्याभ्यनुज्ञानम्। कुतः पुनरारण्यकस्याभक्ष्यताशङ्का ? स्मृत्यन्तरे हि "कुक्कुटो विकिराणाम्" [गौ० ध० सू०] इति पठ्यते, अतश्चाविशेषेणाभक्ष्यता प्राप्ता, वचनेन तस्य सामान्यप्रतिषेधस्य विशिष्टविषयता प्रज्ञायते। ननु विकल्पः कस्मान्न भवति, अनेन शास्त्रेणास्याभ्यनुज्ञानात्, शास्त्रान्तरेण चाविशेषेण तस्यापि प्रतिषेधात्। नायं विकल्पस्य विषयः। विरोधे हि तुल्यबलानां विकल्पः, न चात्र विरोधोऽस्ति। न ह्यनयोः स्मृत्योः शास्त्रभेदोऽपि, सामान्यस्य विशेष उपसंहर्तुं न्याय्यत्वात्, शाखान्तरतस्तृतीयस्याप्येकशास्त्रस्य दर्शितत्वात्।

[ *Grammar—its method—impossibility of studying each separate word and form* ]

अथैतस्मिञ्शब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः—गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः ?

नेत्याह। अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः। एवं हि श्रूयते—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं* प्रोवाच नान्तं जगाम।" बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगाम, किं पुनरद्यत्वे यः सर्वथा चिरं जीवति स वर्षशतं जीवति। चतुर्भिश्च प्रकारैर्विद्यो-

* "रूढिर्योगमपहरति" इति न्यायेन रूढ्या यौगिकार्थस्य निगरणान्नात्र पौनरुक्त्यम्। Cf. सिद्धशब्दस्य कः पदार्थः [ पस्पशा ], गन्धवहः सुगन्धः [ भट्टि २।१० ], गणानां त्वा गणपतिं हवामहे [ ऋ० सं० २।२३।२ ]

पयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति ।* तत्र चास्यागमकालेनैवायुः कृत्स्नं पयु पयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ।

Now (it being settled that the correct words are to be taught) in this exposition of correct words, are all the individual words to be stated for a knowledge of the correct words, are correct words like "gauḥ", "as'vaḥ", "puruṣaḥ", "hastī", "s'akuniḥ," "mṛgaḥ", "Brāhmaṇah" etc. to be read ?

No, says the author, this reading of each single word is not the means to the acquisition of correct words. The tradition goes thus: Bṛhaspati spoke to Indra for a thousand divine years the complete collection of individual words, yet he could not come to the end (of the collection). With a teacher of the erudition of Bṛhaspati and a scholar of the calibre of Indra and the period of study extending over a thousand divine years, the end could not be reached, not to speak of the present day when he who lives the utmost length of life lives for a hundred years. Learning is harnessed to the needs of life in four different ways : at the time of its acquisition (from the preceptor), at the time of svādhyāya, at the time of teaching and at the time of employing it in sacrifices. And in the case of the reading of individual words, the whole span of life will be spent at

---

* अधीतिबोधाचरणप्रचारणैर्दशाश्चतस्रः प्रणयन्नुपाधिभिः ।
चतुर्दशत्वं कृतवान् कुतः स्वयं न वेद्मि विद्यासु चतुर्दशस्वयम् ॥

Why should I not know how Nala himself imparted *caturdas'atva* ( the state of having four stages ) to the *catur-das'a* ( fourteen ) branches of knowledge by creating four stages ( *catur-das'a* ) by means of the four attributes—study, understanding, practice and teaching ? *Naiṣadha* i.4.

the time of acquisition. Hence the reading of individual words is not a means to the acquisition of words.

शब्दानां शब्दपारायणम्—Such expressions are fairly common in early literature. Bhartṛhari says: रूढिशब्दोऽयं कस्यचिद् ग्रन्थस्य वाचकः। यथा शिरोरोगः कुक्षिं बाधते इति। शिरोरोगशब्दः कुक्षिरोगशब्दः स्वव्याधिविशेषस्य रूढिः। स शिरः कृत्स्नं कृत्स्नं च कुक्षिं बाधते इति। एवं शब्दपारायणं नाम ग्रन्थः। Kaiyaṭa says: शब्दानामिति। शब्दपारायणशब्दो योगरूढः शास्त्रविशेषे। तत्र प्रतिपदोक्तानामिति विशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः। Anna bhaṭṭa explains: ननु शब्दपारायणशब्दो यौगिको रूढो वा? आद्ये शब्दानामिति व्यर्थम्, समासेनैव प्राप्तत्वात्; द्वितीये शब्दपारायणमिति व्यर्थम्, 'प्रतिपदोक्तान् प्रोवाच' इत्येव वक्तव्यत्वात्, अत आह—शब्देति। केवलयौगिकत्वे शब्दप्रतिपादकग्रन्थमात्रस्य तच्छब्दवाच्यत्वं स्यात्, अतो रूढिरप्यङ्गीकृता। तत्र शब्दपारायणं प्रोवाच इत्येव विवक्षितम्। तत्र प्रतिपदोक्तत्वाप्रतीतेस्तदर्थं प्रतिपदोक्तानाम् इति विशेषणम्। तावतैव समासावयवशब्दविशेषणत्वप्रतीतौ स्पष्टप्रतिपत्तये शब्दानाम् इत्युपात्तम्, शब्दानां प्रतिपदोपदेशकग्रन्थविशेषमध्यापयामासेति समुदायतात्पर्यम्।

Indra is regarded as the author of the earliest treatise on grammar. We find in the Taittirīya Saṁhitā [vi. 4. 7.3] वाग् वै पराच्यव्याकृतावदत्। ते देवा इन्द्रमब्रुवन्—"इमां नो वाचं व्याकुरु" इति। सोऽब्रवीत्—"वरं वृणै। मह्यं चैवैष वायवे च सह गृह्यातै" इति। तस्मादैन्द्रवायवः सह गृह्यते। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते। Sāyaṇa explains: "अग्निमीळे पुरोहितम्" [ऋ० सं० १।१।१] इत्यादि वाक् [वै] पूर्वस्मिन् काले पराची समुद्रादिध्वनिवदेकात्मिका सती अव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रन्थरहितासीत्। तदानीं देवैः प्रार्थित इन्द्र एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टस्तामखण्डां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत्। तस्मादियं वागिदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यत इत्यर्थः।

The legend of Indra and Bṛhaspati reminds one of the story of Bharadvaja in TB. iii. 10. 11. 3-5: भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्णिं स्थविरं शयानमिन्द्र उपव्रज्योवाच—भरद्वाज, यत्ते

चतुर्थमायुर्दद्याम्, किमेनेन कुर्या इति। ब्रह्मचर्यमेवैनेन चरेयमिति होवाच। तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार। तेषां हैकैकस्मान्मुष्टिनाददे। स होवाच भरद्वाजेत्यामन्त्र्य। वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः। अथ त इतरदननूक्तमेव। एहीमं विद्धि। अयं वै सर्वविद्येति। तस्मै हैतमग्निं सावित्रमुवाच। तं स विदित्वामृतो भूत्वा स्वर्गं लोकमियाय। आदित्यस्य सायुज्यम्। Sāyaṇa explains: पुरा कदाचिद्भरद्वाजाख्यो महर्षिः सर्वेषां वेदानामध्ययने कृतप्रयत्न इन्द्रं प्रसाद्य तत्प्रसादाच्छतसंवत्सरपरिमितानि त्रीण्यायूंषि लब्ध्वा तैरायुर्भिर्ब्रह्मचर्यमनुवास वेदाध्ययनमुद्दिश्य गुरुकुले वासं कृतवान्। शतत्रयस्यान्ते जीर्णशरीरं वृद्धमशक्तत्वेन शयानं तं भरद्वाजं प्रतीन्द्र उपेत्योवाच। यच्चतुर्थमायुस्तुभ्यं दद्यामेतेनायुषा किं कुर्याः कं पुरुषार्थं साधयसीति? स च वेदाध्ययनमेव करिष्यामीत्युवाच। ततः सर्ववेदाध्ययनकृतयत्नं तं भरद्वाजमुद्दिश्य सर्वाध्ययनस्याशक्यत्वं बोधयितुमृग्यजुःसामवेदानां त्रयाणां स्वकीययोगसामर्थ्येन पर्वताकारत्वं सम्पाद्य गिरित्रयरूपान् पूर्वमविज्ञातानेव वेदानस्मै दर्शयामास। ततस्तेषां पर्वतानां मध्ये एकैकस्मात् पर्वतान्मुष्टिना पांसूनाददे। आदायैवमुवाच—हे भरद्वाज, एते त्रयः पर्वता वेदा एव। तत्रैकैकः पांसुरेको वेदस्तस्मादनन्ता वेदाः, तेषां मध्ये त्वमेतैस्त्रिभिरायुर्भिरेतन्मुष्टित्रयपरिमितं वेदजातं गुरूपदेशमन्वधीतवानसि। अथानन्तरं तवेतरद्वेदजातमनधीतमेव। तस्मात् सर्ववेदाध्ययनमशक्यमेव।

Similarly Haradatta says under Gautama Dharma-sūtra 1.9.62: आनन्त्यादाचाराणां प्रतिपदपाठो न शक्यः।

**दिव्यं वर्षसहस्रम्**—One human year corresponds to one divine day and night, so a thousand divine years would be equivalent to 365,000 human years. **दैवे रात्र्यहनी वर्षम्**—Manu i.67. Commentators hasten to point out that this ākhyāyikā is not to be taken literally but should be regarded as an *arthavāda* showing the extreme difficulty, if not absolute impossibility, of acquiring a highly inflected language by going through each single form as it occurs.

ऋषयोऽप्युपदेशानां नान्तं यान्ति पृथक्त्वशः।
लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः॥ महाभारतम्।

अपशब्दा हि प्रतिदेशं प्रतिगृहं प्रतिपुरुषं प्रत्यवस्यं भिन्नाश्चानवस्थिताश्च। न ते लक्षणेनानुगन्तुं शक्यन्ते। Haradatta, p. 10

[ *Grammar—its method—rules, general and special* ]

कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ?

किञ्चित् सामान्यविशेषवल्लक्षणं प्रवर्त्त्यम्। येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन्।

किं पुनस्तत् ?

उत्सर्गापवादौ। कश्चिदुत्सर्गः कर्तव्यः कश्चिदपवादः।

कथंजातीयकः* पुनरुत्सर्गः कर्तव्यः कथंजातीयकोऽपवादः ?

सामान्येनोत्सर्गः कर्तव्यः। तद् यथा—"कर्मण्यण्" [ ३।२।१ ]। तस्य विशेषेणापवादः। तद् यथा—"आतोऽनुपसर्गे" कः [३।२।३]।

How are then the correct words to be acquired ?

Some work containing general rules and exceptions has to be composed so that men may acquire vast collections of words with slight effort.

What, again, is that ?

General rule and its exception. Some general rule has to be framed and some exception.

What kind of general rule is to be framed and what kind of exception ?

Some rule should be framed in a general way, e. g., a root preceded by an object admits the suffix *aṇ* and its exception in a special way, e. g., the primary suffix *ka* is added to a root ending in *ā*, provided the root is preceded by an upasarga.

Mâdhava explains this very lucidly in his Pāṇini-dars'ana :

तस्माच्छब्दानुशिष्टिः संस्कारपदवेदनीया शब्दानुशासनस्य प्रयोजनम्। नन्वेवमप्य-

---

* प्रकारमात्रे थमुः तद्धति जातीयर् इत्यत्र जातीयरैव निर्वाहेऽपि सामान्यो-पक्रमाच्छिंशपा वृक्ष इतिवत् प्रयोगः। छाया।

भिमतं प्रयोजनं न लभ्यते, तदुपायाभावात् । अथ प्रतिपदपाठ एवाभ्युपाय इति मन्येथास्तर्हि स ह्यनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठो भवेत् । शब्दापशब्दभेदेनानन्त्याच्छब्दानाम् । एवं हि समाम्नायते—बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदपाठविहितानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम । बृहस्पतिश्च प्रवक्ता, इन्द्रोऽध्येता, दिव्यं वर्षसहस्रमध्ययनकालः, न च पारावाप्तिरभूत्, किमुताद्य, यश्चिरं जीवति स वर्षशतं जीवति । अधीतिबोधाचरणप्रचारणैश्चतुर्भिरुपायैर्विद्योपयुक्ता भवति । तत्राध्ययनकालेनैव सर्वमायुरुपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठ इति प्रयोजनं न सिध्येदिति चेत्, मैवम् । शब्दप्रतिपत्तेः प्रतिपदपाठसाध्यत्वानङ्गीकारात्, प्रकृत्यादिविभागकल्पनावत्सु लक्ष्येषु सामान्यविशेषरूपाणां लक्षणानां पर्जन्यवत् सकृदेव प्रवृत्तौ बहूनां शब्दानामनुशासनोपलम्भाच्च । तथाहि "कर्मण्यण्" इत्येकेन सामान्यरूपेण लक्षणेन कर्मोपपदाद्धातुमात्रादण्प्रत्यये कृते कुम्भकारः काण्डलाव इत्यादीनां बहूनां शब्दानामनुशासनमुपलभ्यते । एवम् "आतोऽनुपसर्गे कः" इत्येकेन विशेषलक्षणेनाकारान्ताद्धातोः कप्रत्यये कृते धान्यदो धनद इत्यादीनां बहूनां शब्दानामनुशासनमुपलभ्यते । बृहस्पतिरिन्द्रायेति प्रतिपदपाठस्याशक्यत्वप्रतिपादनपरोऽर्थवादः ।

"In the same way the end of the exposition of words is instruction concerning words *i. e.*, the propriety of speech. "But," an objector may say, "will not the desired end be still unattained for want of the true means to it? Nor can it be said that reading of the words one by one is the true means; for this cannot be a means for the understanding of words, since their number is infinite, so divided into proper and improper words. Thus there is a tradition that Bṛhaspati for a thousand divine years taught to Indra the study of words as used in their individual forms when the Veda is read word by word, and still he came not to the end. Here the teacher was Bṛhaspáti, the pupil was Indra, and the time of study a thousand years of the gods; and yet the termination was not reached,—how much less, then, in our day, when a man who lives ever so long lives for a hundred years? Learning is

rendered efficient by four appropriate means,—reading understanding, practising, and handing on to others; but in the proposed way life would only suffice for the bare time of reading; therefore the reading word by word is not a means for the knowledge of words, and consequently, as we said at first, the desired end is not established." We reply, however, that it was never conceded that the knowledge of words was to be attained by this reading word by word. And again since general and special rules apply at once to many examples, when these are divided into the artificial parts, called roots, etc., (just as one cloud rains over many spots of ground); in this way we can easily comprehend an exposition of many words. Thus, for instance, by the general rule iii, 2, 1, *karmaṇi*, the affix *aṇ* is enjoined after a root when the object is in composition with it; and by this rule we learn many words, as *kumbhakārah*, "a potter", *kaṇḍalāvah*, "a cutter of stems", etc. But the supplementary special rule (iii. 2. 3), *āto'nupasarge kah*, directing that the affix *ka* is to be used after a root that ends in long ā when there is no *upasarga*, enables us to get instruction on many words like *dhānyadah* "giver of paddy", *dhanadah* "giver of wealth" etc. "Bṛhaspatirindrāya" etc. is an arthavāda establishing the impossibility of reading word by word."

[ *Meaning of words—genus or individual* ]

किं पुनराकृतिः पदार्थ आहोस्विद् द्रव्यम् ? उभयमित्याह ।
कथं ज्ञायते ?

उभयथा ह्याचार्येण सूत्राणि पठितानि* । आकृतिं पदार्थं मत्वा—"जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" [१।२।५८] इत्युच्यते,

* क्वचिज्जातिः क्वचिद्व्यक्तिः पाणिनेस्तूभयं मतम् ।

द्रव्यं पदार्थं मत्वा "सरूपाणाम्—"[ १।२।६४ ] इत्यकशेष आरभ्यते ।

Does a word denote a genus or an individual ?

Both says the grammarian.

How is this known ? Because the author has framed his rules in both ways. He says "jātyākhyāyām ekasmin bahuvacanam anyatarasyām," regarding the meaning of a word as genus; taking the meaning as individual the ekas'eṣa rule "sarūpāṇām ekas'eṣa ekavibhaktau" is commenced.

When Pāṇini lays down that to denote a class the plural may be optionally used for the singular, he is naturally thinking of the meaning of a word as genus, for if the word denotes individuals, then it will be naturally used in the plural and no useful purpose is served by prescribing the plural in the place of the singular. On the other hand, when the great grammarian says that of words having the same form, only one remains when a single case-ending follows, he is evidently espousing the Vyakti-theory, for if the word denotes the genus, naturally one would suffice to express the whole sense and there is no reason why Pāṇini should go out of his way to make provision for what is known to everybody. व्यक्तौ पदार्थे सम्पन्ना व्रीहय इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थं तत् स्यादिति भावः । आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसम्भवो व्यक्तिपक्ष एवेति भावः । नागेशः ।

Mādhava summarises the views of Vyāḍi and Vājapyāyana in his Sarvadars'anasaṁgraha thus :

जातिशब्दार्थवादिनो वाजप्यायनस्य मते गवादयः शब्दा भिन्नद्रव्यसमवेतजातिमभिदधति । तस्यामवगाह्यमानायां तत्सम्बन्धाद् द्रव्यमवगम्यते । शुक्लादयः शब्दा गुणसमवेतां जातिमाचक्षते । गुणे तत्सम्बन्धात् प्रत्ययः । द्रव्ये सम्बन्धिसम्बन्धात् । संज्ञाशब्दानाम् उत्पत्तिप्रभृत्या विनाशाच्छैशवकौमारयौवनाद्यवस्थाभेदेऽपि स एवायमित्यभिन्नप्रत्ययबलात् सिद्धा देवदत्तत्वादिजातिरभ्युपगन्तव्या ।

क्रियास्वपि जातिरालक्ष्यते । सैव धातुवाच्या, पचतीत्यादावनुवृत्तप्रत्ययस्य प्रादुर्भावात् । द्रव्यपदार्थवादिव्याड़िनये शब्दस्य व्यक्तिरेवाभिधेयतया प्रतिभासते, जातिस्तूपलक्षणतयेति नानन्त्यादिदोषावकाशः । पाणिन्याचार्यस्योभयं मतम् । यतो जातिपदार्थमभ्युपगम्य "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" [ १।२।५८ ] इत्यादिव्यवहारः। द्रव्यपदार्थमङ्गीकृत्य "सरूपाणामेकशेष एकविभक्तौ" [ १।२।६४ ] इत्यादिः । व्याकरणस्य सर्वपार्षदत्वान्मतद्वयाभ्युपगमे न कश्चिद्विरोधः ।

"According to the opinion of Vājapyāyana, who maintains that all words mean a genus, words like "cow," etc., denote a genus which resides by intimate relation in different substances ; and when this genus is apprehended, through its connection with it we apprehend the particular substance in which it resides. Words like "white" etc. denote a genus which similarly resides in qualities ; through the connection with the genus we apprehend the quality, and through the connection with the quality we apprehend the individual substance. So in the case of words expressing particular names, in consequence of the recognition that "this is the same person from his first coming into existence to his final destruction, in spite of the differences produced by the various states of childhood, youth, adolescence, etc.," we must accept a fixed genus as Devadatta-hood, etc. [as directly denoted by them].

So, too, in words expressing "action" a genus is denoted ; this is the root-meaning, as in *paṭhati*, "he reads", etc., since we find here a meaning common to all who read.

In the doctrine of Vyāḍi, who maintained that words meant individual things [and not classes or genera], the individual thing is put forward as that which is primarily denoted, while the genus is implied [as a characteristic mark]; and he thus avoids the alleged faults of "indefiniteness" and "wandering away from its proper subject."

Both views are allowed by the great teacher Pāṇini: since in 1. 2. 58 he accepts the theory that a word means the genus, where he says that "when the singular is used to express the class, the plural may be optionally used" [as in the sentence, "A Brahman is to be honoured" which may equally run, "Brahmans are to be honoured]; while in 1. 2. 64 he accepts the theory that a word means the individual thing, where he says, "In any individual case there is but one retained of things similar in form" [*i. e.*, the dual means Rāma and Rāma, and the plural means Rāma and Rāma and Rāma; but we retain only one, adding a dual or plural affix]. Grammar, in fact, being adapted to all assemblies, can accept both theories without being compromised. Therefore both theories are in a sense true; but the real fact is that all words ultimately mean the Supreme Brahman". COWELL.

व्रीहीन् अवहन्ति, पशुमालभेत, गाम् आनय, ब्राह्मणो न हन्तव्यः इत्यादिप्रयोगेषु किं व्यक्तिः शब्दार्थ उताकृतिरिति? व्यक्तिरिति तावत् प्राप्तम्। कुतः? अवहननादिभिः क्रियाभिर्व्यक्तेरन्वेतुं योग्यत्वात्। न ह्याकृतिरवहन्तुम् आलब्धुम् आनेतुं हन्तुं वा योग्या। ननु आनन्त्यव्यभिचाराभ्यां न व्यक्तौ व्युत्पत्तिः सम्भवति। अनन्ता हि गोव्यक्तयः। अतीतानागतानाम् अनेकदेशवर्तिनां गवाम् इयत्ताया अभावात्। किञ्च शुक्लव्यक्तौ व्युत्पन्नो गोशब्दः कृष्णव्यक्तौ प्रयुज्यमानः स्वार्थं व्यभिचरेत्। तत्र कथं व्युत्पत्तिरिति चेत्। एवं व्युत्पत्तिकाले सा व्यक्तिराकृत्योपलक्ष्यतामिति प्राप्ते ब्रूमः, अन्वयव्यतिरेकाभ्याम् आकृतेः शक्तिगृहणनिमित्तत्वाच्छब्दार्थत्वं तस्या एवोचितम्। किञ्च गोशब्दे उच्चारिते व्यक्तिवादिनः संशयो भवेत्। तस्मादाकृतेरेवाभिधेयत्वम्। यद्याकृतावत्रहननादिक्रिया न पर्यवस्येत् तर्हि व्यक्तिस्तत्रोपलक्षणीया। किञ्च "श्येनचितं चिन्वीत" इत्यादावाकृतेरेव सादृश्यप्रतियोगिकतया कार्यारम्भो दृश्यते। तस्मात् आकृतिः शब्दार्थः। जैमिनीयन्यायमालाविस्तरः।

[ *Eternality of sounds* ]

किं पुनर्नित्यः शब्द आहोस्वित् कार्य्यः?

संग्रह एतत् प्राधान्येन परीक्षितम्—नित्यो वा स्यात् कार्य्यो वेति। तत्रोक्ता दोषाः प्रयोजनान्यप्युक्तानि। तत्र त्वेष निर्णयः—यद्येव नित्यः अथापि कार्य्यः, उभयथापि लक्षणं प्रवर्त्त्यम् इति।

Then again, is sound eternal or artificial? The question as to whether sound is eternal or artificial has been threshed out in the *Samgraha*. There the defects of the latter view have been pointed out and the reason for the acceptance of the view have been stated. The conclusion there arrived at is that even though sound is eternal, it is artificial and rules of grammar are to be framed or applied both ways.

कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्?

[ सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः, यथा लौकिकवैदिकेषु*। ]

सिद्धे शब्दार्थसम्बन्धे*—

सिद्धे शब्देऽर्थे सम्बन्धे चेति।

अथ सिद्धशब्दस्य कः पदार्थः?

नित्यपर्यायवाची सिद्धशब्दः।

कथं ज्ञायते?

यत् कूटस्थेष्वविचालिषु भावेषु वर्तते; तद् यथा सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति।

ननु च भोः कार्येष्वपि वर्तते; तद् यथा सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति। यावता कार्येष्वपि वर्तते, तत्र कुत एतन्नित्यपर्यायवाचिनो ग्रहणम्, न पुनः कार्ये यः सिद्धशब्द इति।

संग्रहे तावत् कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति। इहापि तदेव।

7 5

*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*

श्रीशिवः शरणम्

षष्ठ-वर्षे ] **Special Dewali Number** चतुर्थी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

## Special Articles in this number.

S'aṅkarācārya's unpublished writings.

Mahābhāṣya with English Translation, notes, extracts from various commentaries including the hitherto-unpublished Bhāṣya-pradīpikā of Bhartṛhari (pp. 49-64).

Kālidāsa and Bhavabhūti—a critical and comparative study.

A second Bhrāja Stanza.

Critical observations on the text of the Mahābhāṣya.

An interesting Sanskrit drama.

**इवेन सह समासः**—a critical study.

Vol. V of the Mañjūṣa contains 300+32+32 pages including "The S'iva sūtras and the Sanskrit alphabet" "Mahābhāṣya" "Critical studies on the text of S'āyaṇa's commentary on the Rigveda" etc. etc. Rs. 6/8/-

*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign—Rupees Nine.

The Madhuravāṇī (Bagalcott) writes: स्वागतं मञ्जूषायै। कल्कत्तानगरतः शब्दाब्धिलब्धवैदग्ध्यस्य कवितावनितास्वयंवरवृतवरस्य पण्डितप्रवरस्य श्रीक्षितीशचन्द्रचट्टोपाध्यायस्य सम्पादकत्वे प्रतिमासं नियतमाविष्क्रियमाणा मञ्जूषानामिका पत्रिका शिञ्जानमञ्जरीमञ्जुलपदैः गीतगुञ्जारवैश्च रञ्जयति रसिकपुञ्जम्। क्वचित् महाभाष्य-शब्देन्दुशेखरादिगत-सूक्ष्मतमविषयसमीक्षणसंरम्भेण महामहापण्डितपुण्डरीकाणामपि शिरःकण्डूतिम् उपजनयति। कदाचित् कुशलग्रामवृद्धेव सरसकथाकथनेन कौतुकमुत्पादयति। कुत्रचिच्च प्राचीन-सरस-सुन्दर-सुभाषितानाम् आंग्लानुवादान् प्रकटीकृत्य उपकरोति छात्रवृन्दम्। क्वचिदपि च वेदवेदान्तमन्त्रतन्त्रादीनां भावार्थादिकं जिज्ञासते। मध्ये मध्ये तनुतरविनोदिकथाभिः हास्यलहरीरपि उद्भावयति। तत्र तत्र च शब्दशक्तिप्रकाशेन शब्दशुद्धिविचारैः पुरातनसाहित्यप्रकटीकरणेन च भिन्नभिन्नरुचिमपि वाचककुलं सम्यगाराधयति। प्रायः सर्वत्र सरलतमा सुबोधा च अत्रत्या भाषा विदुषामिव विद्यार्थिनामपि सविशेषं परितोषं जनयति। 'पण्डिता च पतिव्रता' इति ख्यातायाः क्षमादेवीरावमहोदयायाः "परित्यक्ता" इति विचित्रा चैत्राङ्कगता चारुतमकथा चमत्कुरुते सचेतसां चेतांसि हृदयङ्गमया निरूपणभङ्ग्या। तस्मिन्नेव मञ्जूषायाः चैत्राङ्के 'शिवसूत्रस् एण्ड संस्कृत आल्फाबेट्' इति विचारप्रचुरः सम्पादकानाम् आंग्लभाषायां लिखितः विवेचनात्मकः लेखः सर्वेषामपि विपश्चिदपश्चिमानां प्रशंसापात्रं भवतीति निश्चप्रचम्। वयं तु सादरं संसूचयामः "यावच्छक्यं संस्कृतभाषायामेव लेखा लेखनीयाः" येन शुद्धसंस्कृतविदुषामपि उपयोगो भवेत्।

शिञ्जन्मञ्जीरमञ्जूक्तिगुञ्जितैः रसिकरञ्जिनी।
क्षितीशकृतिमञ्जूषा केषामेषा न तोषदा॥

सुवर्णकांक्षिभिः सवर्थैलुब्धैर्मनीषिभिः।
अलङ्कारप्रियैरेषा मञ्जूषा गृह्यतां रसात्॥

उत्कृष्टलेखरत्नानां मञ्जूषैषा विशोभते।
सर्वथा सम्पादेया सर्वैः सहृदयैरपि॥

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

| | | |
|---|---|---|
| December, 1951. | १८७३-शकीय-पौषस्य षष्ठ-वर्षस्य चतुर्थी संख्या | Vol. VI. No. 4. |

श्रीमच्छङ्कराचार्यविरचितं

## श्रीरामलक्ष्मणाष्टकम्

श्रीगणेशाय नमः ॥ श्रीरामचन्द्राय नमः ॥

कमललोचनौ काञ्चनाम्बरौ कवचभूषणौ कार्मुकान्वितौ ।
कलुषसंहरौ कामितप्रदौ रहसि नौमि तौ रामलक्ष्मणौ ॥१॥
मकरकुण्डलौ मुनिसुसेवितौ मणिकिरीटिनौ मानुषोत्तमौ ।
मनुकुलेश्वरौ मञ्जुभाषिणौ रहसि नौमि तौ रामलक्ष्मणौ ॥२॥
रणकुतूहलौ राक्षसान्तकौ रतिविहारिणौ रत्नभूषणौ ।
रविकुलोद्भवौ राजपुङ्गवौ रहसि नौमि तौ रामलक्ष्मणौ ॥३॥
पवनजानुगौ पादचारिणौ पटुशिलीमुखौ पावनांघ्रिकौ ।
परमसात्त्विकौ भक्तवत्सलौ रहसि नौमि तौ रामलक्ष्मणौ ॥४॥
वनविहारिणौ वल्कलाम्बरौ वनफलाशनौ वासवस्तुतौ ।
वरगुणाकरौ वानरार्चितौ रहसि नौमि तौ रामलक्ष्मणौ ॥५॥

धृतहेमाचलौ दीर्घदोर्युगौ धृतशिखण्डिनौ दीनरक्षणौ ।
द्विजप्रपूजितौ दिव्यविग्रहौ रहसि नौमि तौ रामलक्ष्मणौ ॥६॥
समरवीरकौ सत्यसागरौ वनजरक्षिनौ साहसान्वितौ ।
सदयमानसौ सर्ववन्दितौ रहसि नौमि तौ रामलक्ष्मणौ ॥७॥
घनतड़िन्निभौ खड्गधारिणौ घनजटाधरौ पण्डितौ बुधौ ।
बहुरविप्रभौ खानलप्रभौ रहसि नौमि तौ रामलक्ष्मणौ ॥८॥
रसगुणास्पदं राघवाष्टकं रहसि यः पठेद्रामभक्तिदम् ।
रहितकल्मषो रामसन्निधौ रविसमप्रभो राजते सदा ॥९॥

**इति श्रीमच्छङ्कराचार्यविरचितं श्रीरामलक्ष्मणाष्टकं स्तोत्रं संपूर्णम् ॥ ( रामचन्द्रेण लिखितम् )**

**राजापुरनगरसंनिकृष्टहर्डोग्रामवास्तव्यवेदमूर्ति-बांटोपाह्वसीतारामतनुजश्रीनारायणभट्टैः १८५३ शके मासोत्तमे मार्गे राजापुरस्थश्रीसंस्कृतपुस्तकसंग्रहालयाय परमप्रेम्णा समुपहारीकृतम् ।**

**तत्प्रतिकृतिरियं राजापुरनिवासिना पाटणकरोपाह्व-श्रीमत्कृष्णतनयेन रघुनाथशर्मणा विनिर्मिता १८७३ शके शुचिकृष्णाद्वादश्यां कलानिधिवासरे ॥**

---

## गीतासारः

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥११।५५

"This verse is the substance of the whole teaching of the *Gita.* We must carry out our duties, directing the spirit to God and with detachment from all interest in the things of the world and free from enmity towards any living being.

Whatever be our vocation and character, whether we are creative thinkers or contemplative poets or humble men and

women with no special gifts, if we possess the one gift of the love of God, we become God's tools, the channels of his love and purpose. When this vast world of living spirits becomes attuned to God and exists only to do His will, the purpose of man is achieved." RADHAKRISHNAN.

---

## आभाणकादि

१। प्रस्तरोऽपि घृष्यमाणः क्षीयते।

निरन्तरनिपतितबिन्दवः सुकठिनमपि शिलाशकलं क्षयमापादयन्ति।

Constant dropping wears the stone.

Little drops pierce the flint upon which they often fall.

(ला) Gutta cavat lapidem non vi sed saepe cadendo.

The drop of rain maketh a hole in the stone, not by violence, but by oft falling.

२। रम्याणां विकृतिरपि श्रियं तनोति।

३। विकृतिः खलु श्रेष्ठानां पापिष्ठत्वाय कल्पते।

(ला) Corruptio optimi pessima est.

Corruption of the best becomes the worst.

"The summer's flower is to the summer sweet,
Though to itself it only live and die;
But if that flower with base infection meet,
The basest weed outbraves his dignity;
For sweetest things turn sourest by their deeds:
Lilies that fester smell far worse than weeds."

SHAKESPEARE, SONNET XCIV.

४। अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः।

(ग्री) Ho bios brakhus, he tekhne: makra. HIPPOCRATES.
(ला) Ars longa, vita brevis.
Art is long, life is short.

५ । (ग्री) He: ge: melaina pinei,
pinei de dendre' aute:n.
pinei thalassa krounous,
ho d' he :lios thalassan.

इयं मही मलिना पिबति
पिबति च वृक्षराजिस्ताम् ।
पिबति सागरो निर्झरान्
स च सूर्यः सागरम् ॥

[The fountains mingle with the river
And the rivers with the ocean,
The winds of heaven mix for ever
With a sweet emotion. SHELLEY.]

---

## सायणभाष्य-पाठविमर्शः

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

'नीचावया अभवद्वृत्रपुत्रा' [ ऋ० सं० १।३२।९ ] इति मन्त्रस्य व्याख्याने दृश्यते—"वृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा नीचावयाः **न्यग्भावं प्राप्ता हता** अभवत् । पुत्रं प्रहाराद्रक्षितु पुत्रदेहस्योपरि तिरश्ची पतितवतीत्यर्थः ।" . . . नीचावयाः वेति खादतीति **वयो** बाहुः । औणादिकः असिप्रत्ययः । न्यञ्चौ वयसौ यस्याः सा नीचावयाः । . . . यद्वा नीचौ निकृष्टौ वयसौ यस्याः सा ।" इति ।

अत्रोत्तरत्र वयस्-शब्दस्य बाहुरित्यर्थस्य प्रदर्शनात् पुत्रं प्रहाराद्रक्षितुं

पुत्रदेहस्योपरि तिरश्ची पतितवती इति तात्पर्यकथनाच्च नीचावयाः-पदस्य 'न्यग्भवनं प्राप्ता हृता' इत्यर्थकल्पनं न समीचीनतया प्रतिभाति। न्यग्भावप्राप्तबाहुरिति वा न्यग्भावप्राप्तहस्तेति वा पाठः शुद्ध इति प्रतीयते। माधवादिग्रन्थेषु च नीचीनबाहुरिति प्रतिशब्दः सन्दृश्यते।

किञ्च 'वेति खादतीति **वयो** बाहुः' इति सर्वेषु पुस्तकेषूपलभ्यमानः पाठः कथमपि न सङ्गच्छते, 'न्यञ्चौ वयसौ यस्याः सा' 'नीचौ . . . वयसौ यस्याः सा' इत्युभयत्र वयःशब्दस्य पुंस्त्वदर्शनात्। अत एव 'वेति खादतीति वया बाहुः' इति पठनीयम्।

अस्यैव सूक्तस्य षष्ठमन्त्रस्य व्याख्यायां दृश्यते—रुजानाः। 'रुजो भङ्गे'। रुजन्ति कूलानीति रुजाना नद्यः। रुजाना नद्यो भवन्ति रुजन्ति कूलानीति यास्कः। व्यत्ययेन शानच्। तुदादिभ्यः शः। **नुमभाव-**श्छान्दसः। . . . **पिपिषे**। पिष्लृ संचूर्णने। व्यत्ययेन **लिट्** इति।

अत्र "नुमभावश्छान्दसः" इति पाठो व्यक्तमेव प्रामादिकः, नुमः प्राप्तेरेवाभावात्। 'आने मुक्' इति मुक् प्राप्तः, स च न दृश्यते, अत एवोक्तं भाष्यकृता—मुगभावश्छान्दसः। इति। अस्यैव सूक्तस्याष्टम-मन्त्रस्य व्याख्यायां दृश्यते—अनित्यमागमशासनमिति वचनान्मुगभाव इति।

'पिपिषेपिष्लृ संचूर्णने। व्यत्ययेन लिट्' इत्यपि पाठोऽशुद्धः। अत्र लिटः प्रयोगः सूत्रानुगत एव, परं पिषधातोः परस्मैपदित्वादत्रात्मने-पदविभक्तिरनुपपन्ना। अत एव 'व्यत्ययेन लिट्' इत्यस्य स्थाने 'व्यत्ययेन तङ्' इति पठनीयम्।

---

# सुपर्णीनिष्क्रयः

[ श्रीअनन्तनारायण-शास्त्री ]

## किञ्चिदिव निवेदनम्

अयि वेदशास्त्रपारदृश्वानो विद्वदपश्चिमाः ! श्रवसि कुरुत मदीयमपि कञ्चिद्वार्तालेशं—यत् अमर्त्यां भाषां मर्त्येष्वपि विस्तारयितु प्रवृत्त्याहमपि सांप्रतं तैत्तिरीयसंहितागतमर्थवादं कञ्चिदाश्रित्य सुपर्णीनिष्क्रयं नाम नाटकं व्यररचम् । कथासारस्त्वयं—काश्यपस्यर्षेर्द्वे भार्ये—कद्रूः सपर्णीति च । ते चात्मरूपयोरस्पर्धेताम् । केनापि पणेन कद्रूरन्यां जिगाय । अमुष्मात् सोमाहृत्या च प्रेष्यतानिस्तारश्चा दर्शितः । सौपर्णयेषु गायत्र्येवामुं गत्वा सोममाहरत् । पूर्वं गतयोर्जगतीत्रिष्टुभोश्चत्वार्यप्यक्षराणि सैव स्वीचकार । अत एव प्राग्गायत्री चतुरक्षरापि तयोरक्षरैश्चतुर्भिश्चाष्टाक्षरा सती सर्वेषु प्रथितास्ते । अत एव छन्दःसु गायत्र्येव श्रेष्ठेति सर्वविदामाशयः । अस्मिंश्च तत्र तत्र धर्मन्यायादयः सामान्या अपि विषयास्तत्रभवतां समेषां विदुषां मुदमावहेयुरिति विश्वसिमि । दोषज्ञानामपि गुणमात्रश्लाघाशीलानां कलाविदां तादृशानां परमाशयमनुपमा आशिषश्चाहमाकाङ्क्षामि ।

### पात्राणि

कश्यपः—वृद्धतापसः, गुरुः ।

शिष्याः—काश्यपशिष्याः हारीत-कालापात्रेयाद्याः ।

वैनतेयः—गरुड़ः ।

काद्रवेयाः—कद्रूसुताः तूल-वितूल-लोहिताद्या रसावर्तिनः ।

कद्रूः—काश्यपपत्नी ।

सुपर्णी—काश्यपपत्नी ।

गायत्रीत्रिष्टुब्जगत्यः—छन्दांसि सुपर्णीतनयाः ॥

शुभं भवतु [ क्रमशः ]

## द्वितीयो भ्राजाख्यः श्लोकः

[ श्रीरामशंकर-भट्टाचार्यः ]

अशेषशेमुषीसम्पन्नो भगवान् पतञ्जलि र्व्याकरणशास्त्रप्रयोजन-कथनकाले प्रसङ्गादेकं श्लोकं पपाठ। यथा—

यस्तु प्रयुङ्क्ते कुशलो विशेषे
शब्दान् यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः॥

[ पस्पशाह्निक पृ० ३३ निर्णयसागरः ]

भ्राजाख्योऽयं श्लोक इत्यपि भगवतोक्तम्। इमे श्लोकाः कात्यायन-प्रणीता इति कैयटहरदत्तादयः।

पतञ्जलिना प्रमाणत्वेन उद्धृता इमे श्लोका अवश्यं प्रमाणभूता इति कथयितुं शक्यते। परन्तु हा कष्टम्! कात्यायनप्रणीतमिदं ग्रन्थरत्नं सर्वथा लुप्तमेव। प्रचलितेषु ग्रन्थेषु अस्य वचांस्यपि न उद्धृतानीति दृश्यते।

अपरः कश्चिद् भ्राजाख्यः श्लोकोऽस्माभिरुपलब्धः। तथाहि ३।१।१ सूत्रव्याख्याने कैयट एकं श्लोकमुदाहृतवान् :—

"अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः।
अनुपाधिरतोऽन्यः स्याच्छ्लाघादिविशेषणं यद्वत्॥"

न्यायवार्त्तिकतात्पर्यटीकायामिदं कात्यायनवचनम् इत्यभिहितम् —तथाच स्मरति भगवान् कात्यायनः 'तदन्तवाच्यः समानशब्दोयम्' इति। [ (द्रष्टव्यं पाठान्तरम्)—२अ. २आ. ६० सु० पृ० ४७६ चौखम्बा संस्करणम्। ]

नैयायिकसम्प्रदाये कश्चिदपि कात्यायननामधेयो विद्वान् नास्ति।

अतोऽयं वैयाकरणः कात्यायन इति तर्क-लाघवतः स्वीकार्यम्। किञ्च अस्मिन् श्लोके य उपाधिशब्दो व्यवहृतः, स तु न अनुमानखण्डव्यवहृत उपाधिशब्दः, प्रत्युत शब्दखण्डव्यवहृत एव। अत्र यस्मिन्नर्थे उपाधिशब्दो व्यवहृतस्तस्मिन्नर्थे वैयाकरणानां व्यवहारः पुष्कलो, न नैयायिकानाम्। अपि च अत्र यः 'श्लाघादि'शब्दः पठितः, स तु 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५।१।१४४) इति सूत्रपठितं श्लाघाशब्दं साक्षात् लक्षयति। अपि च नेदं वचनं श्लोकवार्त्तिकभूतम्, अतः परिशेषात् श्लोकोऽयं भ्राजाख्य इत्येवाभ्युपेयम्।

यदीदं निश्चितं स्यात्, तर्हि इदमपि स्वीकरणीयं यत् कैयटेन उद्धृतानां बहूनां श्लोकानां मध्ये कतिपये भ्राजाख्या एव।

---

## महाभाष्य-पाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

"मतुवसो रु सम्बुद्धौ छन्दसि" [ ८।३।१ ] इति सूत्रस्य भाष्ये दृश्यते—

"विभाषा भवद्भगवदघवतामोच्चावस्य।

छन्दसि भाषायाञ्च भवत् भगवत् अघवत् इत्येतेषां विभाषा रुर्वक्तव्यः, ओच्चावस्य वक्तव्यः। भोः भवन्। भगोः भगवन्। अघोः अघवन्निति।

सम्बुद्धावित्युच्यते तत्रेदं न सिध्यति—भो ब्राह्मणा इति। तथा विभक्तौ लिङ्गविशिष्टग्रहणं नेतीह न प्राप्नोति—भो ब्राह्मणि।

नैष दोषः। अव्ययमेष भोः-शब्दो नैषा भवतः **प्रकृतिः।**" इति।

अत्रान्तिमं पदं प्रकृतिरिति केषुचित् पुस्तकेषु प्रवृत्तिरिति

चापरेषु। संक्षिप्तसारव्याकरणस्य वृत्तौ प्रकृतिरित्येव पाठ उपलभ्यते। तथाहि "भवदादेर्वा वतोरुस्" इति सूत्रस्य ( ६।१० ) वृत्तिः--हे भोः हे भवन् हे भगोः हे भगवन् हे अघोः हे अघवन्। अव्ययोऽपि भोः-शब्दोऽस्ति। तेन भो ब्राह्मणि, भो देवदत्तयज्ञदत्तविष्णुमित्राः। तथाच भाष्यम्, अव्ययमेष भोः-शब्दो नैषा भवतः प्रकृतिरिति।

व्याख्यातञ्चेदं गोयीचन्द्रेण—अव्ययोऽपीत्यादि। यदि भोः-शब्दोऽयं भवत एव प्रकृतिः स्यात्, तदा देवदत्तादीनां बहूनामेव विशेषणं भोः-शब्दो न स्यात्। . . . नैषा भवतः प्रकृतिरित्यत्र तु प्रकृतिविशेषणत्वादेषत्यस्य स्त्रीलिङ्गता।

अत्र च वंशीवदनकृता टिप्पनी—"एषा प्रकृतिः सुप्प्रकृतिर्नाम इति यावत्, न भवत्सम्बन्धिनी। जन्यजनकभावसम्बन्धे षष्ठी" इति।

उद्द्योते द्विविधोऽपि पाठो व्याख्यातः। "एषा प्रकृतिः। अव्ययत्वे सुप उत्पत्तेरस्य प्रकृतित्वव्यवहारः। सा च न भवतः न भवच्छब्दजन्येत्यर्थः। प्रवृत्तिरिति पाठे प्रयोग इत्यर्थः" इति।

सर्वमिदं व्याख्यानं क्लिष्टतया नः प्रतिभाति। नैषा भवतः प्रसूतिरिति वा सम्बुद्धिरिति वात्र शुद्धः पाठ इति प्रतीयते। अत एव कैयटे नात्र किमपि न विलिखितम्। अत्र कल्पनालाघवात् प्रसूतिरित्येव पाठो ग्राह्य इति नो बुद्धिः। किं वात्र विदुषां मतम् ?

---

## प्रकृष्टम् उत्तरम्।

दारुणोऽयं निदाघः। पिपासार्ताः प्राणिनोऽनवरतं पानीयं पिबन्तः कथमपि तृप्तिं नाधिगच्छन्ति। अवसरे चास्मिन् यादवमहोदयस्य सलिलकलशः पत्न्याः पाणितः स्खलितश्चूर्णतामभजत्। अनन्यशरणेन यादवेन प्रतिवेशिनो माधवस्य सकाशात् कलशः कश्चिद् ऋणरूपेण स्वीकृतः, परेद्यवि च प्रातः प्रत्यर्पितः। माधवमहोदयः कलशं सच्छिद्रं

वीक्ष्य कदाचिद् यादवमुक्तवान्, अये किमिति प्रत्यग्रो मे कलशो भवता भग्नः, इदानीमत्र छिद्राणि दृश्यन्त इति। व्यवहाराजीवेन यादवमहोदयेन प्रत्युक्तम्, वयस्य, मा मैवम्। प्रथमतस्तावदभग्न एव कलशो मया प्रत्यर्पितः। किञ्च, यदा मया गृहीतो भवतः कलश-स्तदैवात्र छिद्राण्यासन्। किञ्च, मया भवतः कलशो लेशतोऽपि न गृहीतः इति।

---

## विधवाया धवः

खृस्तीयानां धर्ममन्दिरम्। उपाचार्येण भाषणं प्रदीयते। आचार्येण तूष्णीमवस्थीयते। नागरिकाः सर्वेऽवहिताः शृण्वन्ति।

भद्राः, अद्य तावद्विवाहमधिकृत्य किञ्चिदुच्यते। स्वविधवाया या भ्रातृव्या ( cousin ) तस्याः पाणिपीड़नं प्रतिषिद्धमेवास्मच्छास्त्रेषु।

आचार्यः। न हि न हि, स्वविधवाया या स्वसा सा न परिणेतव्येत्येव शास्त्राणामाशयः।

उपाचार्यः। आर्य, मृष्यताम् मे निर्बन्धः। न खलु मयोच्छास्त्रं किमप्यालप्यते। स्वविधवाया या भ्रातृव्या ( cousin ) सा कथमपि न परिणेतुं शक्यते धार्मिकैः।

आचार्यः। अये भ्रान्तोऽसि। पुनरप्यनुशीलय शास्त्राणि। स्वविधववायाः स्वसैव न परिणेया।

उपाचार्यः। आर्य, यस्य पत्नी विधवा स परलोकं प्रस्थितः। कथं स परिणयेत्।

---

## समीचीनं प्रशंसापत्रम्

गृहिणी। मासमेकं त्वयास्मद्गृहे प्रेष्यभावेनावस्थीयते। तव पाटवेन वयं तथा सन्तुष्टा यथेदृशं दासीरत्नमत्र ग्रामे निगूढं रक्षितुं नेच्छामः। पत्तनं गत्वा तत्र स्वेन भासा जगदुद्भासय।

निरक्षरा दासी । तर्हि कृपया प्रशंसापत्रमेकं प्रदीयताम् ।

गृहिण्या विलिखितम्—

सप्रमोदं मया प्रशस्तिपत्रमिदं प्रेष्यायै प्रदीयते। अनया किल पत्रवाहिकया नियोज्यभावेनावस्थितमस्मद्भवने वर्षमेकमेकादशमासोनम्। अवसरे चास्मिन्नुपलब्धवत्यहमिमां श्रमशीलां—बहिर्द्वारे, मिताचारिणीं—प्रभुकर्मणि, अवहितां—स्वात्मनि, जागरूकाम्—अपदेशेषु, प्रेमप्रवणां—तरुणपण्यविक्रयिषु, साधुशीलां च—सर्वेषु महार्घेषु वस्तुषु तालकबद्धेषु । इति ।

---

# पुत्रशब्दस्य निर्वचनम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

सहृदयाः, बाल्यादारभ्य श्रूयतेऽस्माभिः [ महाभारत १।७१।३९]

पुन्नाम्नो नरकाद् यस्मात् त्रायते पितरं सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ मनु ९।१३९

इति । अतः प्रतीयते पुदुपपदात् त्रायतेः कप्रत्ययेन पुत्रशब्दो निष्पन्नः, द्वितकारकश्चायम् । रामायणे [ २।१०७।१२ ] पुनर्दृश्यते—

पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः पितॄन् यः पाति सर्वतः ॥

इति । अतश्च प्रतीयते पुदुपपदाच्च पित्रुपपदाच्च त्रायतेः कप्रत्ययेन पुत्रशब्दस्य निष्पत्तिरिति। महर्षिणा यास्केनापि निरुक्तम्—पुत्रः पुरु त्रायते, निपरणाद्वा । पुन्नरकं ततस्त्रायत इति वा (निरुक्त २।११) इति । व्याख्यातञ्चेदं दुर्गाचार्येण—पुरु त्रायते बह्वपि यत् पित्रा पापं कृतं भवति ततोऽयं त्रायत इति पुत्रः । निपरणाद्वा निपृणाति निददाति ह्यसौ पिण्डान् पितृभ्य इति पुत्रः। अथवा पुत् इति

नरकस्थानमुच्यते, ततस्त्रायत इति वा पुत्र इति। महाभाष्ये च दृश्यते—यदि पुनाति प्रीणातीति वा पुत्रः, दुहितर्यप्येतद् भवति [ १।२।६८ ] इति। उणादिसूत्रेऽपि पुनातेः पुत्रशब्दो व्युत्पादितः। तथाच सूत्रम्—पूञो ह्रस्वश्च [ ४।१७३, दशपादी ८।८७ ]। पूञो धातोः क्त्रप्रत्ययो भवति ह्रस्वश्च धातोः। पुनातीति पुत्रः सुतः। इति।

भाषातत्त्वविदां मतेन प्रजननार्थकपुधातोः क्त्रप्रत्ययेन पुत्रशब्दो निष्पन्नः। अयमेवावेस्तायां पुथ्रूपेण लाटिन-भाषायां च puklum-रूपेणोपलभ्यते। पुमानप्यस्मादेव धातोर्निष्पद्यते। यो जनयति स पुमान्, यश्च जन्यते स पुत्र इति। ग्रीक्-pais (*pawis) शब्दे, लाटिन puer शब्दे, आङ्ल-puberty शब्दे चायमेव धातुर्दरीदृश्यते। मन्ये प्राचीनानामप्येतदेवाभिप्रेतमासीत्। अत एव मेधातिथिना पुन्नाम्न इति श्लोकव्याख्यानावसर उपोद्घातरूपेणोक्तम्—अपत्योत्पादन-विधिशेषोऽयमर्थवाद इति।

---

## विचित्रो विवेकः

[ श्रीउपेन्द्रनाथ-गङ्गोपाध्यायः ]

( १ )

प्रातःसन्ध्यां नारायणपूजां च विनिर्वर्त्य गृह्यां गां वत्सांश्च स्वेन हस्तेन किञ्चिद् भोजयित्वा यावद् गौरीकान्तः प्रातराशाय समुद्यत-स्तावद् दौहित्रेण कृष्णचन्द्रेण समागत्योक्तम् "मातामह, धर्माधिकरणाद् राष्ट्रियः समागतः, भवन्तमाह्वयति" इति।

गौरीकान्तस्तावदासनं परिग्रहीतुमुपक्रमते स्म। स ऋजु दण्डाय-मानः सविस्मयमुवाच "धर्माधिकरणाद्राष्ट्रियः समागतः? किमिति? कथं वा राष्ट्रियः समागतः" इति।

प्रत्यग्रनियुक्तः प्रेष्यश्चिन्ताख्यः कृष्णस्य पृष्ठतः समागत्य स्थितः, कृष्णस्य वचनं संशोध्य तेनोक्तम्, "आर्य, न खलु राष्ट्रियः, रक्षिक एव" इति।

"रक्षिकः इति ? रक्षिकस्तावत् कः पदार्थः ?"

इदानीं चिन्ता स्ववचनं संशोध्य प्रोवाच, "आर्य, आह्वायकः" इति।

तच्छ्रुत्वा गौरीकान्तस्य मुखमण्डले समुद्वेगस्य छायापातः समजनि। आह्वायकस्य समागमन-कारणानुमाने लेशतोऽपि तस्य विलम्बो नाभूत्। तथापि मथुरचट्टोपाध्यायस्य यो व्यवहारः प्रचलितस्तद्गत-साक्षिसमाह्वानस्याह्वायकोऽपि कदापि स्यात्। अपि नाम तदेव स्यात्। तर्हि सर्वं शुभम्। बहिर्भवनं गन्तुं गौरीकान्तः पादौ प्रसारितवान्।

खाद्यं सन्नह्य गृहिणी गिरिजाया सविध एव प्रतीक्षमाणा स्थिता। प्रस्थानोद्यतं पतिमाक्षिप्योक्तवती, मा तावत्। न गन्तव्यम्। सत्वरं भुक्त्वा गन्तव्यम्। सकृद् गतस्तत्रैव कदाचित् कार्यवशान्निरुद्धः स्याः, शीघ्रं प्रत्यागन्तुं न प्रभविष्यसीति।

गृहिणीं प्रति दृष्टिं पातयित्वा मृदु विहस्य गौरीकान्तेनोक्तम्, आह्वायकश्चेद् बहिरपेक्षेत त्वदीयं खाद्यं न हि रोचिष्यते। प्रथमतस्तावद्व्यापारस्यामुष्य निष्पत्तिः करणीया। इत्युक्त्वासौ प्रस्थितः।

गिरिजाया भोज्यादिकं परिरक्षन्ती तत्र निषण्णासीत्। क्षणादूर्ध्वं प्रत्यावृत्यासनं परिगृह्य गम्भीराननेन गौरीकान्तेनोक्तम्, आह्वायकं विसर्ज्यागतोऽस्मि, तथापि भोज्यं ते नैव स्वादु स्यात्। न खलु शुभोऽयं वृत्तान्त इति।

उद्विग्नवदनेन गिरिजायापृच्छत्, किमिति ? कस्तावद्वृत्तान्त इति।

"पितुर्ऋणपत्रमधिकृत्य प्रियमित्रेण धर्माधिकरणेऽभियुक्तम् ।
आह्वानपत्रं प्रदाय गतः ।"

चिन्ताचितानना गिरिजायावदत्, कस्तावदभियुक्त इति ।

गौरीकान्तोऽवदत्, मां वर्जयित्वा को वापरोऽभियोक्ष्येत ? पिता चेदभियोक्तुमिष्येत तर्हि स्वर्गं गत्वाह्वानपत्रं प्रदेयं स्यात् । नैव प्रबभूव रावणः स्वर्गसोपानं निःशेषेण निर्मापयितुमिति ।

किञ्चिदिव विलज्जमानया गिरिजाययोक्तम्—नहि नहि, न खलु पितरमभिप्रेत्य वच्मि । देवरोऽप्यभियुक्तो न वेत्येव पृच्छामीति ।

सलिलपात्रं गभीरमाचम्य गौरीकान्तोऽवदत्, कथम्, कथं बोमाकान्तोऽभियोक्ष्येत ? को वा तस्यापराधः ? वित्तनावोऽधस्तात् सुबृहन्ति छिद्राणि प्रादुर्भवन्तीति दृष्ट्वा स तावद् गृहपतेर्जीवितकाल एव पृथक् संवृत्तः इति ।

पित्रास्य जीर्णपूगवाणिज्यस्य प्रभूतां समुन्नतिं विधायैकदा पित्रा सूर्यकान्तमुखोपाध्यायेन बहुमूल्यसम्पत् समार्जिता । परं पञ्चकन्यानां विवाहार्थं कृतस्यर्णस्य ताड़नेनैकशस्तस्याः सम्पदस्तानंशान् विलुप्यमानान् दृष्ट्वा दूरदर्शिनोमाकान्तेन स्वात्मानं ततोऽपसार्य सुदृढ़े क्षेत्रे समाश्रयो बद्धः । इति ।

गिरिजायावदत्, पितुर्जीवितकाल एव देवरः पृथक् संवृत्तः, जानाम्येवैतत् । तथापि 'पितृणम्' इति व्यपदिश्यते ननु । इति ।

गिरिजायाया वचनेन कृतं गौरीकान्तस्य वदनमण्डले स्मितेन पदम् । धीरं शिरः सञ्चाल्य तेनोक्तम्—तत्तु न सम्भवति । पितृणं तावत् फलस्यास्थि । यस्य सस्यं तस्यास्थि । सस्यं चेन्न लभ्यते, अस्थ्नो दायो नास्ति । इति ।

गिरिजाया सकौतुकमपृच्छत्, किं तावत् सस्यमिति व्यपदिशसि ? इति ।

गौरीकान्तोऽवदत्, सस्यं व्यपदिशामि धनधान्यं, शस्यं वदामि सम्पदम्। अपि न श्रुतं भवत्या जनप्रवादः, जनोऽसौ सर्वथा सस्यसम्पन्न इति, तस्य सविशेषा धनसम्पत्तिर्वर्तते इति तस्यार्थः। इति।

एतस्य किमप्युत्तरमदत्त्वा गिरिजायावदत्, भवता वा कीदृग्विधा धनसम्पत्तिः समासादिता। शृणोमि तावत्। इति।

गौरीकान्तोऽवदत्, तुच्छं यदेव किञ्चिल्लब्धम् स एव दाय इत्युच्यते। तस्यैव च दायस्य कृते पितृणधुरा मया वोढव्या इति।

'कियतोऽर्थस्य कृतेऽभियुक्तम्?'

"मूलं वृद्धिं चाहृत्य सार्धसहस्रत्रयदेशीयं स्यात्।"

तच्छ्रुत्वा गिरिजायाया ललाटे चिन्तारेखाः प्रादुर्भूताः। सावदत्, इदानीं क उपाय इति।

"साम्प्रत्यं तु कोऽप्युपायो नैव नयनपथमवतरति।"

"स चेन्नावतरेत् तर्हि मदीयानि भूषणानि विक्रीयाभियोगान्मोचयात्मानम्।"

गिरिजायाया वचनं श्रुत्वा पुनरपि गौरीकान्तस्य वदनसरसिजे प्रादुर्भूतो हासः। सोऽवदत्, ममैव तावत् पितृणम्, परं श्वशुरर्णमिति कोऽपि शब्दो नास्ति, तत् किमिति भूषणानि त्वदीयानि विक्रेष्ये? पितृणतः समुद्धार्यान्ततो मां पत्न्यृणे निपातयितुमिच्छसि वा? इति।

"परमेतस्य पत्न्यृणस्य कृते न खलु त्वं धर्माधिकरणेऽभियोक्ष्यसे न वाह्वानं ते समागमिष्यति।"

गौरीकान्तेन स्वगतमुक्तम्, न खलु धर्माधिकरणमेवैकं भयस्थानं विभावयामि इति। प्रकाशमवदत्, अन्ततो गत्वा तव भूषणानि वर्तन्त एव, ततः पूर्वं द्रक्ष्यामि तावद् यदि कस्यापि सकाशादर्थमिमं संगृह्य "प्रियमित्र"स्याभियोगादात्मानं मोचयितुं प्रभवेयं वा न वेति।

परं प्रतिभुवमन्तरेणैतावतोऽर्थस्य प्रदाता "प्रियमित्र"सब्रह्मचारी कोऽप्यस्मिन्नगरे वर्तत इति न सम्भावयामि। इति।

गिरिजायाबदत्, तर्हि सकृद्व्यवहाराजीवस्य भवनं गत्वा दृश्यताम् इति।

प्रातराशस्तावत् सम्पन्नः। उत्थायासनस्योपरि दण्डायमानो दरसमुच्छ्रितकण्ठं गौरीकान्तोऽवदत्, व्यवहाराजीवस्य भवनमिति? किमर्थम्?" इति।

मन्त्रणार्थम्।

मन्त्रणार्थमिति? व्यवहाराजीवस्तावद् दुर्मन्त्रणामेव प्रदास्यति। व्यवहाराजीवस्य मन्त्रणेनैकमेव व्यवहाराजीवं वर्जयित्वापरस्य कस्याप्युपकारः कदापि प्रत्यक्षीकृतो वा?

न खलु विषयेऽस्मिन् गिरिजायायाः कोऽपि स्वानुभव आसीत्, अतः सा तूष्णीं स्थिता।

गौरीकान्तोऽवदत्, अर्थं संगृह्य "प्रियमित्र"स्य व्यवहारजीवेनत्र तं धर्माधिकरणे प्रदापयिष्यामीति।

गिरिजायावदत्, भवतु, स एव प्रयासस्तर्ह्यास्थीयतामिति। (क्रमशः)

---

## व्याकरण-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( पूर्वतोऽनुवृत्तः )

सरस्वतीकण्ठाभरणस्य "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" इति सूत्रं व्याचक्षाणेन दण्डनाथेनापि विस्पष्टमेवोक्तम्—क्रोधः कोप एव। द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते। ततः सामान्येन विशेषणं "यं प्रति कोपः" इति। देवदत्ताय कुप्यति क्रुध्यति वा। इति।

यस्मै कोप इत्यनुक्त्वा "यं प्रति कोपः" इति कथमुक्तम् इत्यत्र हेमचन्द्रेण समाहितम्—

यं प्रति किम् ? यस्मिन्नित्युच्यमाने कर्तुरपि स्यात्। मैत्रेण क्रुध्यते। इति। व्याख्यातञ्चैतत् लघुन्यासे—न केवलं विषयसप्तम्यां यं प्रति कोपस्तस्य सम्प्रदानत्वम्। आधारमात्रेण कर्तुरपि स्यादित्यर्थः इति।

वोपदेवेन यस्म दित्सासूयाक्रोधेर्ष्येत्यादिसूत्रस्य [२९५] वृत्तौ, स्मराद् गोपीगणोऽसूयति कुप्यतीर्ष्यति यस्मै इत्युदाहृतम्।

संक्षिप्तसारस्य "क्रुधद्रुहेर्ष्यासूयार्थानां यत्रार्थः कोपे" इति सूत्रस्य टीकायां गोयीचन्द्रेणोक्तम्—क्रोधस्तावत् कोप एव, द्रोहादयोऽपि कोपप्रभवत्वादेव कोपार्था इति।

मैत्रेयरक्षितेन तन्त्रप्रदीप उक्तम्—यं प्रति कोप इति निर्देशात् कर्मप्रवचनीयविभक्तिः कारकविषयेऽपि क्वचित् प्रवर्तत इत्यनुमीयत इति।

( क्रमशः )

## भारविः सारविद्यः

[ श्रीमहालिङ्गशास्त्री ]

अथ गच्छति काले कश्चन गायको राजसभामुपासदत्। तं च, काकीपुरेश्वरं पल्लवसिंहविष्णुं प्रतियियासुमवगत्य भारविः सिंहविष्णुनामांकितां नरहरिप्रशस्तिमेकां संग्रथ्य तस्मै प्रादात्। अगायदेतद् गीतवस्तु स च सिंहविष्णोः पुरस्तात्—

दनुजपति-हृदय-भूधर-विभेदविज्ञात-शक्तिनखकुलिशम्।
जगदुदयहेतु-विष्णोरवतु वपुर्नारसिंहं वः॥ इति॥

केनेयमत्युदारार्था निर्मितेति कुतूहलात्।
अनुयुक्तोऽथ गन्धर्वः कीर्तयामास भारविम्॥

अथ च सिंहविष्णुः बहुशः संप्रार्थ्य दुर्विनीतमकाशादानीय भारविं वसुभारैः समाराध्य निकट एव निवासयामास। स च सुहृष्टः भूपालमनघर्भूषयामास सुभाषितैः। तदानीं भारविः विंशतिवर्षदेशीयो राजाभवदिति अनुमीयते।

वृद्धपरम्पराऽऽगतमिदमपरं भारविचरितम्—स किल बाल्य एव काव्यकरणकृती प्रथामवाप। सर्वत्र जगत्यभ्यर्च्यमाणस्य तस्य गुणैरसन्तुष्यन्निव दूषणपरोऽभवत् तस्य पिता। तमेवंविधमसोढा भारविः क्रूरां बुद्धिमास्थाय महत्या शिलया सह पितुः शयनीयस्योपरि समारुह्यावसरप्रेक्षी तस्थौ। अथ शिशयिषुः पिता वृत्तान्तमभ्यूह्य श्लोकमेनमपठत्—

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥ इति।

तद्वचो विमृश्य सहसा सञ्जातपश्चात्तापः पितुश्चरणयोः पतित्वा भारविः स्वापराधक्षमापणमन्वतिष्ठत्। इति।

किरातार्जुनीये दृश्यते चैतत्पद्यं द्वितीयसर्गे युधिष्ठिरकृते भीमोपसान्त्वने।

अन्यविधयाऽपि चैतच्छ्लोकघटको वृत्तान्तो निगद्यते। यथा अनेन किल भारविकृतेन श्लोकेन सपदि स्मृतिमारूढेन कोऽपि भूपतिः अविवेकमूलतो निजभार्यापुत्रवधोद्यमाद् विरतो महतीं प्रीतिमवाप इति। शोकानुभवसारभूतोऽयं श्लोकः कुमारिलभट्टशिष्येण गुरुरितिविख्यातेन प्रभाकरमिश्रेण स्वीयायां शाबरभाष्यव्याख्यायां बृहत्यामुदाहृतो दृश्यते।

**जीवनकाल-निर्णयः**

ऐतिहासिकैरप्युपपन्नया रीत्या भारवेर्जीवनकालः क्रैस्तवसप्तमशतकात् प्राचीन इति सूपपादम्। तथाहि—

(१) चतुस्त्रिंशदधिकषट्शतीव्यवस्थितः शिलालेखः कोऽपि भारविं विख्यातं कविमाख्याति। यथा—

"येनायोजि न वेश्म स्थिरमर्थविधौ विवेकिना जिनवेश्म।

स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः॥

(२) अन्यस्मिन् शासनलेखे निर्दिष्टमस्ति यद्भारवेः काव्ये पञ्चदशसर्गस्य शब्दचित्रदुरवगाहस्य दुर्विनीतो नाम राजा व्याख्यां विरचयामास इति। दुर्विनीतस्य राज्यकालः षष्ठशतकस्य पार्यन्तिकदशकेष्विति तज्ज्ञैरुपपाद्यते।

(३) अवन्तिसुन्दरीकथाऽनुसारेण भारवेरादर्ता सिंहविष्णुः अपि पूर्वोक्तकालीन एवेति अनुमन्यन्ते ऐतिहासिकाः।

एवं च सप्तमशतकप्रान्तभाजा प्रभाकरेण भारविवचःस्मरणमपि उपपद्यते।

दुर्विनीतो गंगवंश्यः भारवेरादर्ता व्याख्याता च तत्काव्यैकदेशस्य। एवं षष्ठशतकस्योत्तरार्धे भारविः भुवनतले व्यलासीदिति सुकरं वक्तुम्।

**भारवेरावासभूतो देशः**

स च दक्षिणदेशमलञ्चकार, यतः पल्लवगंगवंश्यनरनाथयोः अभ्यर्हणभागभूत्। स्मरति च सह्यमहीभृतम् अष्टादशे सर्गे—

उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः।

भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः॥

**भारवेः काव्यपद्धतिः**

आदितः प्रभृति साहित्यमहाध्वनि प्रसारितदृशामयं हि सहसा शब्दचित्रेष्वाविष्कृतान्यादृशपक्षपातः पुरः परिवर्तते। अस्य खलु पूर्व कालिदासाश्वघोषमेण्ठप्रवरसेनकुमारदासादयो भट्टिश्च वाचं पन्थानमन्वरुध्यन्त तं निजेन वैलक्षण्येनातिशिशयिषुरिव भारविः

प्रस्थानान्तरेषु कौशलमाविष्करोति। शब्दचित्रभूयिष्ठं निबध्नाति सर्गमेकम्। वर्णनास्वधिकमभिरमते। कथावस्तुपरिमितमुपादाय काव्यपद्धतिविशेषितं ननु पण्डितमनोरममापादयति। विचित्रेषु वृत्तेषु पक्षपाती भवति। बन्धविशेषान् सप्रयत्नं प्रयुङ्क्ते। एवमादि नूतनलक्ष्मान्वितं काव्यमुपनिबध्नन्नसौ किं दाक्षिणात्यसाहित्यसमय-संश्लेषमात्मनो निरन्तरमवगमयति? दृश्यन्ते खल्वीदृश्यो रीतयः द्राविडादिप्रबन्धेषु। अर्वाचीना एते सुतरां बन्धयमकानु-प्रासैकाक्षरद्व्यक्षरादिवैचित्र्यपरायणाः प्रतिलभ्यन्ते। प्राक्तनी चैतेषामेव प्राया रीतिरिति अभ्यूह्यम्। गैर्वाण्यां रीतिरपीदृशी अत्यन्तं सुकरेति निदर्शयितुमिव कांचित्कं प्रयत्नमेवंरूपमुररीचकार भारवि-रिति शक्यमवगन्तुम्। भारविस्तदनन्तराणां महाकाव्यपद्धतिप्रवर्तको जातः। दण्डिनः सर्गबन्धलक्षणाख्यानं प्रायः स्वपितामहकृतिमना-मनिर्देशेन प्रमाणयति। तस्य च काव्यादर्शे अतिविस्तृतः तदितर-काव्यलक्षणकारैरदर्शितया रीत्या, प्रपञ्चितोदाहरणसन्दोहः शब्द-चित्राध्यायो दृश्यते।

---

# प्रत्याख्येयानि वार्त्तिकानि

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

( २ )

लघुशब्देन्दुशेखरे नागेशभट्टेनोक्तम्—"हरीतकीं भुङ्क्ष्व राजन् मातेव हितकारिणीम्" इत्यसाध्वेव। 'तिङ्समानाधिकरणे प्रथमा' 'अनभिहिते प्रथमा' इति वार्त्तिकस्वारस्येन प्रथमायास्तत्र तत्र कारक-विभक्तित्वोक्तिपरभाष्येण च क्रियायोग एव प्रथमायाः प्रवृत्त्या मातेति प्रथमायां मातृसदृशीमित्यर्थेऽसाधुत्वादित्यन्यत्र विस्तरः। एतद्योग-विभागसिद्धसमासस्य विशेषसंज्ञा न सन्त्येव, तत्तदधिकारेष्वपाठात्।

जीमूतेस्येवेति। अत्र यथार्थत्वादिप्रयुक्तोऽव्ययीभावस्तु न, "तत्र तस्येव" [ ५।१।११६ ] इति निर्देशात्। इति।

निपातार्थनिरूपणप्रकरणे लघमञ्जूषायां चोक्तम्—'मातेव हितकारिणीम्' इत्यादौ त्विवस्य सादृश्यवाचकता। इवशब्दार्थ-सादृश्ये च मातुरन्वय इति प्रातिपदिकार्थे प्रथमैव। न च षष्ठ्यापत्तिः, प्रतियोगिविशिष्टसादृश्यवत इवार्थत्वेन तदेकदेशे प्रतियोगिनि मातु-रभेदेनान्वयात् षष्ठ्यप्राप्तेरिति कश्चित्।

असाध्वेवेदम्। क्रियान्वय एव प्रथमायाः साधुत्वात्। अत एव 'तिङ्समानाधिकरणे प्रथमा' 'अभिहिते प्रथमा' इति च वार्त्तिकम्, प्रथमायाः कारकविभक्तिपरं भाष्यं च सङ्गच्छत इत्यन्ये (पृ: ६५७) इति। व्याख्यातञ्चेदं कुञ्चिकायाम्—कारकविभक्तितव परमिति। पुत्रेण सहागतः पितेत्यत्रोपपदविभक्तिरिति न्यायेन प्रथमासिद्धावप्रथमाग्रहणं न कर्तव्यमिति भाष्यकृतोक्तत्वात्। वस्तुतस्तु इति न्यायेनेत्यस्य इति रीत्या इत्यर्थः, यथा हि तत्रान्तरङ्ग-त्वात् प्रबलत्वं तथा प्रथमाया अपीत्यर्थः। इति।

(क्रमशः)

---

# कालिदास-भवभूती

[ स्वर्गत-द्विजेन्द्रलाल-रायः ]

## प्रथमः परिच्छेदः

### आख्यानवस्तु

अभिज्ञानशकुन्तलं खलु कालिदासस्य श्रेष्ठं नाटकम्, बहूनामेव च मतेन तस्य श्रेष्ठो लेखः। तथाचाभियुक्ताः स्मरन्ति—"कालिदासस्य सर्वस्वमभिज्ञानशकुन्तलम्" इति। एवमेवोत्तररामचरितं भवभूतेः श्रेष्ठः

प्रबन्धः। अनयोः कव्योस्तारतम्यविचारोऽनयोर्नाटकयोस्तारतम्यविचारेणैव सेत्स्यति।

अभिज्ञानशकुन्तलस्याख्यानवस्तु कालिदासेन महाभारते वर्णिताच्छकुन्तलोपाख्यानाद् गृहीतम्। पद्मपुराणस्य स्वर्गखण्डेऽपि शकुन्तलोपाख्यानं विवृतं वर्तते, तेन चोपाख्यानेन शकुन्तलानाटकस्य समधिकं सादृश्यं सन्दृश्यते। परं पद्मपुराणमभिज्ञानशकुन्तलातोऽर्वाचीनमिति कालिदासस्य शकुन्तलाया एव काव्यरूपेण विपरिणाम इति च बहव आशेरते। अत एव पद्मपुराणोपवर्णितमुपाख्यानमेव नाटकस्यास्य मूलमिति वक्तुं नोत्सहे।

महाभारतोपवर्णितस्य शकुन्तलोपाख्यानस्यायं तावत् सारः—

शकुन्तला किल महर्षेर्विश्वामित्रस्याप्सरसो मेनकायाश्च सन्ततिः। अरण्ये परिवर्जिता सती महर्षिणा कण्वेन लालिताभूत्। यौवनपदवीमनुप्रपन्नामावेकदा नृपतिना दुष्यन्तेन मृगयां गतेन यदृच्छया कण्वाश्रमं प्राप्तेन सन्दृष्टा। शकुन्तलाया रूपेण मुग्धो नरपतिर्गान्धर्वेण विधिना तामुपयम्यैकको राजधानीं प्रत्याववृते।

महर्षिः कण्वस्तदाश्रमे नासीत्। आश्रमं प्रत्यावृत्तेन तेन ध्यानबलेन सर्वं विज्ञातम्, क्षत्रियाणां गान्धर्वविवाह एव श्रेष्ठ इति विवाहोऽसावनुमोदितः। ततश्च कण्वाश्रमे शकुन्तलया कुमार एकः प्रसूतः। महर्षिश्च सुतसमभिव्याहृतां शकुन्तलां राजसदनं प्रेषितवान्।

सभायां समुपस्थितां शकुन्तलां प्रत्यभिज्ञातुमशक्नुवन् दुष्यन्तस्तां प्रत्याचख्यौ। ततश्च दैववाणीप्रत्ययेन तां परिजग्राह। वस्तुतस्तु विवाहवृत्तान्तो राज्ञः स्मृतिपथ एव स्थितः, केवलं लोकलज्जाभयेन प्रथमतस्तेन शकुन्तला न स्वीकृता। उपाख्यानमिदं कालिदासेन स्वीये रूपक इत्थं सन्निवेशितम्—

प्रथमोऽङ्कः

मृगयां गतस्य दुष्यन्तस्य कण्वाश्रमप्राप्तिः। दुष्यन्तस्य शकुन्तलायाश्च परस्परं परिचयश्च प्रेम च। शकुन्तलायाः सहचर्योरनसूयाप्रियंवदयोस्तत्रोत्साहनम्।

द्वितीयोऽङ्कः

दुष्यन्तवयस्यौ। राज्ञो मृगयायामनुत्साहः, वयस्येन च साकं शकुन्तलागतः संलापः। राजानं मृगयायां प्रवर्तयितुं सेनापतेर्विफलमभ्यर्थनम्। तापसयोः प्रवेशः, रक्षोविघ्नप्रतिकरणार्थं च निर्बन्धः। मात्रादेशव्यपदेशेन दुष्यन्तेन वयस्यस्य विसर्जनं, पुनश्च राज्ञस्तपोवनप्रवेशः।

तृतीयोऽङ्कः

दुष्यन्तशकुन्तलयोः परस्परं प्रेमनिवेदनम्, गान्धर्वविवाहप्रस्तावश्च। सहचर्योस्तत्र साहायकम्।

चतुर्थोऽङ्कः

दूरे विरहिणी शकुन्तला। अनसूयाप्रियंवदयोः संलापः। शकुन्तलायाः पुरतो दुर्वाससः प्रवेशोऽभिशापश्च। आश्रमे कण्वस्य प्रत्यावर्त्तनम्, गौतम्या तापसद्वयेन च साकं शकुन्तलायाः पतिगृहे सम्प्रेषणम्।

(अस्मिन्नेवाङ्के विजानीमो यदामन्त्रणात् पूर्वं राज्ञा शकुन्तलाया अभिज्ञानमङ्गुरीयकमेकं प्रदत्तमिति।)

पञ्चमोऽङ्कः

राजसभायां नृपतिर्दुष्यन्तः। गौतम्या तापसाभ्यां च सह शकुन्तलायाः प्रवेशः प्रत्याख्यानम् अन्तर्धानञ्च।

अङ्कावतारः

धीवरनागरिकौ रक्षिणौ च। अङ्गुरीयकस्योद्धरणम्।

षष्ठोऽङ्कः

विरहिणो नृपतेर्विप्रलापः । स्वर्गादिन्द्रस्यामन्त्रणाधिगमः ।

सप्तमोऽङ्कः

स्वर्गात् प्रत्यावर्तमानस्य दुष्यन्तस्य हेमकूटपर्वतप्राप्तिः । आत्मजसन्दर्शनं शकुन्तलया च साकं पुनर्मेलनम् ।

एतस्माच्च प्रतीयते वस्तुविषये महाभारतान्नाटकस्य विशेषतः किमपि वैषम्यं नास्ति । कालिदासेन केवलं मूलमुपाख्यानं पल्लवितम् । प्रधानवैलक्षण्यानि त्विमानि—(१) महाभारतानुसारेण महर्षेराश्रम एव शकुन्तलायास्तनयः समजनि, कालिदासस्य नाटके तस्याः प्रत्याख्यानत ऊर्ध्वं तनयो भूमिष्ठ इति । (२) महाभारते प्रत्याख्याता शकुन्तला तस्यामेव सभायां प्रतिगृहीता, नाटके पुनर्विच्छेदादनन्तरं स्थानान्तरे मेलनं सञ्जातम् । (३) सर्वतो गुरुतरं वैलक्षण्यम्—अभिज्ञानं दुर्वाससः शापश्च ।

यथा कालिदासेनाख्यानवस्तु महाभारताद् गृहीतं तथैव भवभूतिनाख्यानवस्तु वाल्मीकिरामायणतः स्वीकृतम् । रामायणस्योपाख्यानं त्वीदृशम्—रामो लङ्काजयादूर्ध्वमयोध्यामध्यासीनो राजकार्यं करोति । प्रकृतयः सीतायाश्चारित्रमधिकृत्य कुत्साकीर्त्तनमकुर्वत । रामो वंशगौरवसंरक्षणार्थं तपोवनदर्शनव्यपदेशेन सीतां वनवासाय प्रेषितवान् । सीता च वाल्मीकेस्तपोवने कुशलवनामानौ यमजौ प्रासोष्ट। ततश्च रामोऽश्वमेधं क्रतुमाजहार । स च तपोनिरतं शूद्रकमवधीत् । ततश्चाश्वमेधयज्ञे निमन्त्रितो वाल्मीकिः कुशेन लवेन च साकं रामस्य सभां समाजगाम । तत्र च कुशलवौ वाल्मीकिविरचितं रामायणं जगौ । रामस्तौ प्रत्यभिजज्ञौ, सीतायाः पुनर्ग्रहणाभिलाषं च व्यक्तीचकार । परं सीतयाग्निपरीक्षयात्मनो विशुद्धिः प्रमापयितव्येति तेन निर्बद्धम् । क्रोधेन दुःखेन च सीता भूगर्भं प्रविष्टवती ।

भवभूतिना स्वीये रूपक उपाख्यानमित्थं सन्निवेशितम्—

प्रथमोऽङ्कः

अन्तःपुरे सीता रामश्च। अष्टावक्रमुनेः प्रवेशः। तस्य सविधे प्रजारञ्जनार्थं जानकीमपि परित्यजेयमिति रामस्य प्रतिज्ञा। आलेख्यं पश्यन्त्या सीतया तपोवनदर्शनाभिलाषप्रकटनम्। दुर्मुखस्य प्रवेशः, सीतायाश्चारित्रमधिकृत्यापवादविज्ञापनम्। रामस्य सीतानिर्वासन-सङ्कल्पः। ( मशः)

# रसमञ्जरी

[ श्रीक्षितीशचन्द्रचट्टोपाध्यायः ]

[ राजकीयसंस्कृतमहाविद्यालयस्य प्रधानशिक्षको बहिर्द्वारप्रकोष्ठे समासीनो वृत्तान्तपत्रं वाचयति। ततः प्रविशति कश्चिच्छीर्णकायः प्रतिभाप्रदीप्तवदनमण्डलः पुरुषः। ]

पुरुषः। आर्य, नमो भवते।

शिक्षकः। ब्राह्मणाय नमः। उच्यतां किमर्थमागतो भवान्।

पुरुषः। भवतां विद्यालये प्रधानसंस्कृताध्यापकस्य पदं शून्यं वर्तते इति जनमुखादुपश्रुत्यागतोऽस्मि।

शिक्षकः। भवतैव काम्यते पदं ननु ?

पुरुषः। आर्य, अथ किम्।

शिक्षकः। प्रधानपण्डितस्य पदे यः कोऽपि नियोक्तुं न शक्यते। भवता कानि शास्त्राणि तावदधीतानि ?

पुरुषः। आर्य ! अधिकशास्त्राध्ययनेन मोह एवाभिवर्धते। भवता तु पण्डितोऽपेक्ष्यते। पण्डा वेदोज्ज्वला बुद्धिर्यस्य स एव पण्डितो ननु। मम तु वेदोज्ज्वला बुद्धिः समधिका वर्तते। परीक्षितु-मर्हति भवान्।

शिक्षकः । भवतु पश्यामि । भाषायां संस्कृत-शिक्षको गुरुरिति व्यपदिश्यते । गुरुशब्दस्य का व्युत्पत्तिः ?

पुरुषः । 'गौरिव रौतीति गुरुः । अत एव यथा भगवती गौः पूज्यते एवं गुरुरपि पूजास्थानम् । एवमेव गवाभिसम्बन्धाद् गुणशब्दः संप्रवृत्तः । अत एव गुणाः पूजास्थानं गुणिष्विति कविवर्योक्तिः सङ्गच्छते ।

शिक्षकः । अहो भवतः प्रज्ञाप्रकर्षः ! अपरं किमपि प्रष्टुमिच्छामि ।

पुरुषः । आर्य, अलं सङ्कोचेन । स्वच्छन्दं पृच्छ्यताम् ।

शिक्षकः । पुरतः किं वा दृश्यते ?

पुरुषः । आर्य, घटिकायन्त्रम् ।

शिक्षकः । किमिति घटिकायन्त्रमिदमहोरात्रं ध्वनति ?

पुरुषः । अलभ्यो यदायुःपल. स्वर्णभारै-

रहो तस्य दण्डो वृथा याति यामः ।

दिनञ्च त्रियामा प्रमादान्नराणा-

मितीवानिशं घोषयन्ती घटीयम् ॥*

शिक्षकः । अहो श्लाघनीया भवतः प्रतिभा । यन्त्रे यत् pendulum वर्तते, संस्कृतभाषया तत् कथं वर्णनीयम् ?

पुरुषः । आर्य, पिण्डलम्बशब्दस्यैवापभ्रंशः pendulum इति । भारतभूमिरेव प्रसूतिः सर्वेषां यन्त्राणाम् । ( दूरे धूमशकटस्य शब्दः श्रूयते ) ।

शिक्षकः । Petroleum-साहाय्येनैव धूमशकटः प्रचलति । अपि नाम petroleum-शब्दोऽपि संस्कृत एव ।

पुरुषः । कः सन्देहः ? 'पार्थिवतैलम्' इति समस्तपदस्यैवापभ्रंशः petroleum इति । एवमेव कीटाशनशब्दापभ्रंशः kerosene इति ।

---

* महाराजकृष्णचन्द्रेण पृष्टस्य बाणेश्वरविद्यालङ्कारस्यायं श्लोक इति प्रसिद्धिः ।

शिक्षकः । साधु, साधु । भद्र, Puja vacation इदानीं प्रत्यासीदति । कच्चित् vacation-शब्दोऽपि संस्कृत एव ।

पुरुषः । अवश्यमेव । 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति वचनेन अवकाशनशब्दस्याकारलोपे वकाशनशब्दो निष्पन्नः । तस्यैव प्राकृतं रूपं vacation इति ।

शिक्षकः । आर्या भवतां पाटवदर्शनेनातिमात्रं प्रीतोऽस्मि । यथा भवतामेवात्र पदे नियोगः स्यात् तथा प्रयतिष्ये । पण्डिताः प्रायेण गतानुगतिका एव भवन्ति । स्वतन्त्रमतीनां भवतामध्यापनेन छात्राणामज्ञानतिमिरं दूरमपसरेदिति मे द्रढीयान् प्रत्ययः ।

पुरुषः । आर्य, अनुगृहीतोऽस्मि ।

---

# समालोचनम्

**The Divine Songs of Zarathushtra**—A Philological study of the Gathas of Zarathushtra, containing the Text with Literal Translation into English, a free English rendering and full critical and grammatical notes Metrical Index and Glossary by IRACH J. S. TARAPOREWALA, B. A., PH. D., Barrister-at-Law, Professor of Comparative Philology, University of Calcutta (1917-1929), Principal, M. F. Cama Athornan Institute, Andheri, Bombay (1930-1940), Director, Deccan College, Post-Graduate and Research Institute, Poona (1940-1941). Obtainable from D. B. Taraporewala Sons & Co. Ld., Treasure House of Books, 210 Hornby Road, Bombay 1. Royal 8vo. xlii & 1166. *Price Rupees Twenty-five only.*

अवितथं खलूक्तमभियुक्तैः—नीचैर्गच्छत्युपरि च दशा चक्रनेमि-

क्रमेणेति । ये तावत् पारसीकाः प्राचीनभूमण्डले शाकद्वीपमधितिष्ठन्नस्त्रिभुवननिवासिनां वन्दनीया आसन्, यैश्च—

सूर्यं ध्यायन्ति ये वै हुतवहमनिलं वायुमाकाशमाद्यं
तोयं स(त्)पञ्चतत्त्वं त्रिभुवनमदनं न्यासमन्त्रैस्त्रिसन्ध्यम् ।
श्रीहोर्मज्दं सुरेशं बहुगुणगरिमाणं तमेवं कृपालुं
गौरा धीराः सुवीरा बहुबलनिलयास्ते वयं पारसीकाः ॥
स्नाने ध्याने सुपाठे हुतवहहवने प्राशनोत्सर्गकाले
शास्त्रोक्तं सप्तमौनं निदधति नृवराः सर्वदा सर्वदा नः ।
नानाधूपैः सुपुष्पैर्वरफलबहुलैः पूजयन्तीह धेनुं
गौरा धीराः सुवीरा बहुबलनिलयास्ते वयं पारसीकाः ॥
रम्यं वस्त्रं पवित्रं कवचगुणमयं कञ्चुकं ये धरन्ति
मुक्तामूर्णासिकुश्तीमहिमुखसमताबन्धनं चैव कटग्राम् ।
मूर्धानं वस्त्रगुप्तं पटयुगलतले रक्षणं कुर्वते ये
गौरा धीराः सुवीरा बहुबलनिलयास्ते वयं पारसीकाः ॥

इत्यादिभिः पद्यरत्नैः स्वगुणगणः संसूच्यते, यैः किल दुर्धर्षतमा ग्रीक्वीरा अपि दासभावमनीयन्त तेऽपि वीरप्रवराः कालचक्रस्यावर्तनेन मोहमदीयैर्विजिता भृशमशरणाः स्वधर्मं परित्यक्तवन्तः, तेषां धर्मग्रन्थाश्च विजेतृभिरङ्गारशेषतां नीताः । अत एव Moulton महोदयेनोक्तम्—

Alexander's destructiveness, if not purely mythical, was accidental : he was the last man to burn a literature of set purpose. It was otherwise with the Moslem invasion of the seventh century. When the choice was between death with the Avesta and life with the Koran, the palpable inferiority of the latter was easily overlooked. The faithful remnant who in the next century took refuge on the

hospitable shores ot India, to find there a liberty of conscience which Mahommedan Persia denied them, brought with them only fragments of the litertaure that Sassanian piety had so laboriously gathered. Altogether, Prof. Williams Jackson calculates, about two-thirds of the Avesta have disappeared since the last Zoroastrian monarch sat on the Persian throne.*

इदानीं भारतवर्षेऽदूरलक्षाः पारसीकाः प्रतिवसन्ति। एषु च बहवो धनिकधुरीणा वाणिज्यनिष्णाताः स्वप्रावीण्येन पाश्चात्त्यवणिक्प्रवरानपि ह्रेपयन्ति। ये च पारसीकेषु पण्डितप्रकाण्डाश्च धार्मिकधुरन्धराश्च तेष्वेवायमन्यतमस्तारापुरओयाला-महोदयः। प्राच्य-पाश्चात्त्यविविधभाषापारदृश्वना महात्मनानेन सुबहूनि वर्षाणि तपस्तप्त्वा गाथाविषयकं सुमनोरममिदं पुस्तकं प्रणीतम्। अत्र च प्रथमतो भूमिकायां व्याख्यानशैलीमधिकृत्य अधिकपञ्चाशानि पृष्ठानि विनियुक्तानि। न खल्वत्र पाश्चात्त्येषु श्रद्धाजाड्येन तेषामेव सरणिः सर्वत्रानुस्रियते ग्रन्थकारेण, परं धर्मग्रन्थेऽस्मिन् श्रेष्ठैरेव तत्त्वैरुपनिबद्धैर्भवितव्यम्, अत एव सति सम्भवे मूलानुसार्याध्यात्मिक एवार्थः स्वीकरणीयः इति मतमवलम्ब्य कालक्रमेण सुतरामेव दुर्बोधतामापन्नानां गाथानां परमरहस्योद्घाटने प्रयतितम्। अस्य च व्याख्यानस्य मूलसूत्राणि ग्रन्थकृता भूमिकायां सन्निविष्टानि, तानि च यथा—

1. The Gāthās must be judged *by themselves and in the light of their own contents.* In other words it would not be correct to understand a word from the Gāthās in the sense it has acquired in later Zoroastrian Literature.

2. *The nearest to the Gāthās, both in language and*

---

* Early Religious Poetry of Persia by J. H. Moulton, pp 13-14.

*spirit, stands the Vedic Literature of India. Hence at every step I have compared Vedic words, idioms and ideas.*

3. The Gāthās, as the very name implies, are chants. The verification of the Gāthās, as also that of the Vedas, follows the invariable rule that "a unit of verse is also a unit of sense". I have rigorously observed this rule. The point has been missed by practically every one of the previous translators. As regards the Gāthā meter I have worked it out in my own way, guided almost entirely by my own ear.

All these have been set out in full in this book under the heading "Gāthā meter and Metrical Index"

5. *It is the thought of the Gāthās which is really profound.* My own experience has been that as I advance in years and in knowledge of life, I find deeper and deeper meanings in each verse.

"Veil after veil will lift—but there must be
Veil upon veil behind."

I have striven to go behind the mere words of the text. For each verse I have given first the Text with each word numbered consecutively. After that follows a literal, word for word, translation, in which each word is numbered to correspond with the Text. And after this literal rendering I have added a Free English rendering (in blank verse). In this "Free Rendering" I have striven to reach the *thought* underlying each verse.

6. *The Gāthās are spiritual in the fullest sense of the term.* Therefore it is essential to lift up their Message to spiritual heights and never to understand them at the ordinary earthly level. This was the main reason why no previous rendering of the Gāthās brought solace and inspiration to my soul. All of them have spoken of "cattle" and "fodder" and "pastures" as constituting the main theme

of the *Gāthās.* In the Bible the Lord Jesus Christ is spoken of as the "Good Shepherd" and His Message speaks of "sheep" and "folds". The Lord SHRI KRISHNA has been depicted as the Divine Cow-herd (*Gopāla*), dwelling among pastures and surrounded by cows. And the Lord SHIVA bears the name of *Pashupati* (Lord of Cattle). Like the "sheep" of Jesus, and the "cows" of Krishna, and the "cattle" of Shiva, the "cow" (*Gāv*) of the Gāthās represents Creation and more especially Humanity. And similarly all the other connected words occurring in the Gāthās are to be taken in a higher spiritual sense.

सर्वथा पुस्तकमिदं सर्वाङ्गसुन्दरं सञ्जातम् । न जानीमोऽत्रत्यं कतमं विषयं सविशेषं प्रशंसामः—मूलं वा, भाषान्तरं वा, टीकां वा, छन्दोविचितिं वा शब्दार्थप्रकरणं वा, सुविस्तृतां विषयसूचिं पाठ्य-पुस्तकसूचिं वा । अवश्यं संग्राह्यमिदं पुस्तकं जातिधर्मनिर्विशेषेण सर्वैरेव प्रेक्षावद्भिरिति निर्माय ब्रूमः । अत्र सुबृहतां पत्राणां द्वादशशती विराजते, मुद्रणप्रमादाः पुनः सुविरला एव, मूल्यमप्यस्योप-योगानुपातेनात्यल्पमेव । त्वरन्तां वाचकमहोदया अस्य संग्रहणाय ।

**An Introduction to Comparative Philology**—By the late Dr. Pandurang Damodar Gune, M.A., Ph. D. edited by Prof. N. P. Gune, M. A. Sole Agents: Poona Oriental Book House, 330A Sadashiv Peth, Poona. 2. D. Crown pp. 258 and 67. Price Rs. 12-8.

भारतभूमिरेव शास्त्राणामितरेषामिव भाषातत्त्वस्यापि प्रसूतिः । सुप्राचीने निरुक्तग्रन्थेऽपि दृश्यते—"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते ।···विकारमस्यार्येषु भाषन्ते शव इति । दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु" इति [२।२।८] । महाभाष्येऽपि तेषु तेषु प्रकरणेषु भाषातत्त्वगता बहवो विषया विकीर्णा वर्तन्ते । अधन्यतया पुनरस्माक-मर्वाचीने काले वैयाकरणा लाघवमात्रमाद्रियमाणा भाषारहस्यानि

तृणावज्ञायमवजानन्ति। अपरमपि विषादकारणमस्माकं यद् यदा ग्रीसीयमनीषिभिः साकं भारतीयानां परिचयः समजनि तदा ग्रीसीयैः भारतीयाः बर्बरा इति व्यपदिष्टाः, भारतीयैश्च ते म्लेच्छा इति. एवञ्च मुष्टिमेयैरेव कैश्चिद् ग्रीसीयैर्भारतीयभाषाधिगता, तथाविधैरेव च भारतीयैर्ग्रीसीयभाषेति सुसमृद्धयोरनयोर्भाषयोस्तुलनं न समभवत्। ख्रिस्तीये १७६७ शके Coeurdoux-समाख्येन फरासीयेन वहूनामेव संस्कृतशब्दानां लाटिनशब्दैः सादृश्यं समुपवर्णितम्। ततश्च ख्रिस्तीये १७९६ शके Sir William Jones महोदयेन संस्कृत-ग्रीक-लाटिन-भाषाणां समानमूलकत्वं प्रतिपादितम्। तत आरभ्य पाश्चात्यदेशेषु भाषाणां तुलनं तत्त्वाविष्कारश्चैधमानरयं प्रचलति। अस्मदीये देशे यानि तावद् द्वित्राणि भाषातत्त्वविषयकाणि पुस्तकानि विरचितानि तेष्वेवायमन्यतमो गुणेमहोदयस्य ग्रन्थः। अत्र प्रथमे भागे भाषाया वृद्धिक्षयस्थानगतानि मूलसूत्राणि, द्वितीये भाषावंशावली, तृतीये इन्दो-इराणीया भाषागोष्ठी, चतुर्थे पालिश्चानुशासनिकप्राकृतानि च पञ्चमे नाटकादिषूपलभ्यमानप्राकृतानि साम्प्रतिकहिन्दीवङ्गप्रभृतयो भाषाश्च समुपवर्णिताः। सम्पादकेन संयोजिते प्रथमे परिशिष्टे Hittite भाषा संवर्णिता, द्वितीये परिशिष्टे इन्दो युरोपीयभाषा-भाषिणामभिजनमधिकृत्य विचारः प्रवर्तितः। अन्ते च The Greek Language, Indo-Aryan, Germanic and English, Some ancient and recent Marathi Borrowings समाख्या नातिविस्तृताः प्रबन्धाः सन्निविष्टाः। यद्यपि सर्वत्र ग्रन्थकृद्भिः सहास्माकमैकमत्यं न सम्भवति तथापि पुस्तकमिदमतीवोपादेयं छात्राणां च परमोपकारकमित्यत्र नास्ति संशयः। गुणेमहोदयस्य पुत्रेण पितुर्ग्रन्थं सुसंस्कृत्य प्रकाशयता न केवलं पुत्रकृत्यं सम्यगनुष्ठितं वहूनां प्रभूत उपकारोऽपि विहित इत्यवश्य-मेवाभ्युपगन्तव्यम्।

अथवा सन्त्येकपदान्यवधारणानि। तद् यथा अब्भक्षो वायुभक्ष इति। अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते। एवमिहापि सिद्ध एव न साध्य इति।

अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः—अत्यन्तसिद्धः सिद्ध इति। तद् यथा देवदत्तो दत्तः सत्यभामा भामेति।

अथवा व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणमिति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः।

How have these rules of the venerable Ācārya Pāṇini been framed ?

[*Sound and sense and the relationship subsisting between the two being established as eternal,* the use of words being determined by the sense current in popular speech, the science (of grammar) enjoins restrictions (i. e., the use of correct words to the exclusion of corrupt ones) for religious merit, just as we find in matters worldly and Vedic.* ]

*The sound-sense-relation being established as eternal,*

The sound, the sense and the relationship (between the two) being established as eternal.

Now what is the meaning of the word "siddhaḥ" ?

It is a synonym of "nitya".

How do you know that ?

Since it is used in reference to objects that are unchangeable and immovable, as, for instance, the Heaven is *siddha*, the earth is *siddha*, the sky is *siddha*.

---

* "The connotation of a name is something inherent in the name, something with an existence independent of any human mind knowing and using the name: but that is surely absurd and contrary to all right ideas of the essence of language and human psychology." JESPERSEN, *Philosophy of Grammar,* p. 66.

Excuse me, Sir, it is also used with reference to things artificial, e. g., the rice is *siddha* (boiled), the soup is *siddha* (cooked), the barley is *siddha* ( boiled, prepared ). Since the word is used with reference to artificial things, how is it that "siddha" here is to be taken as the synonym of "nitya" and not as the one which is used in reference to artificial things. Since the word is used in the Saṁgraha as opposed to 'artificial' we conclude that it is used there in the sense of eternal, so also here.

Or, there are single-word restrictions also, *e. g.*, abbhakṣaḥ, vāyubhakṣaḥ. It is implied he lives on water only, he lives on air only. Exactly in the same way here also "siddha" means that which is "siddha" only and not "sādhya" (also .

Or, we are to understand here that the previous member of the compound has been dropped ; thus *siddhah* stands for *atyantasiddhah* absolutely eternal, as "Dattaḥ" stands for "Devadattaḥ" and "Bhāmā" for "Satyabhāmā".

Or, acc. to the dictum, "in cases of doubt the details may be gathered from the explanation and a rule should not be rejected on the ground of ambiguity* we shall explain that the word "siddha" used in this Vārttika is the synonym of "nitya".

कथं पुनरिति। "किमाचार्य एव स्रष्टा शब्दार्थसम्बन्धानाम्, अथ स्मर्ता" इति प्रश्नः। कैयटः। एवं व्याकरणारम्भं समर्थ्य "सिद्धे" इत्यादिकं वार्त्तिकमवतारयितुं "कथम्" इति भाष्यम्। तस्य तात्पर्यमाह—किमिति। स्रष्टा—यथा देवदत्तादिशब्दाः केनचिदर्थविशेषे सङ्केतिताः, यथा केनचिच्छिल्पिना वस्तुविशेषं निर्माय नामविशेषः क्रियते तद्वदित्यर्थः। स्मर्ता—लोकसिद्ध शब्दानाम्। अन्नंभट्टः।

कूटस्थेषु—अविनाशिषु। lit. standing on the top, keeping to the highest position, hence immovable, uniform, unchangeable. कूटमयोघनः ( hammer ), तद्वत तिष्ठन्ति ये तेषु, संसर्गिनाशेऽपि स्वय-

ननष्टेष्वित्यर्थः। नन्वयोघनस्यापि तर्हि नित्यत्वं स्यात्, अत आह—अविनाशिष्विति। भाष्ये द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम्। आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्यस्याभिमतम्। एवं च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमिति भावः। नागेशः।

Saṁgraha is the name of an ancient work on the philosophy of grammar, the authorship of which is ascribed to Vyāḍi. In the Rāmāyaṇa we find:

ससूत्रवृत्त्यर्थपदं महार्थं ससंग्रहं सिध्यति वै कपीन्द्रः।

Bhartṛhari says in his Vākyapadīya ii. 484-488:

प्रायेण संक्षेपरुचीनल्पविद्यापरिग्रहान्।
सम्प्राप्य वैयाकरणान् संग्रहेऽस्तमुपागते॥
कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने॥
अलंध्यगाधे गाम्भीर्यादुत्तान इव सौष्ठवात्।
तस्मिन्नकृतबुद्धीनां नैवावास्थित निश्चयः॥
बैजिसौभरहर्यक्षैः शुष्कतर्कानुसारिभिः।
आर्षे विप्लाविते ग्रन्थे संग्रहप्रतिकञ्चुके॥
यः पतञ्जलिशिष्येभ्यो भ्रष्टो व्याकरणागमः।
काले स दाक्षिणात्येषु ग्रन्थमात्रे व्यवस्थितः॥

[ इह पुरा पाणिनीयेऽस्मिन् व्याकरणे व्याड्युपरचितं ग्रन्थलक्षपरिमाणं संग्रहाभिधानं निबन्धनमासीत्। पुण्यराजः ]।

In the Bhāṣya on ii. 3. 66 we find : शोभना खलु दाक्षायणस्य संग्रहस्य कृतिः।

In the well-known stanza [Mahābhāṣya vii. 4. 92 ]:

किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः।

Saṁgraha does not appear to refer ro this treatise by Vyāḍi.

It is interesting to note in this connexion that both the Vārttikas of Vararuci and the sūtras of Sarvavarman begin with the word *siddha*, the first rule of the Kātantra Vyākaraṇa

being सिद्धो वर्णसमाम्नायः. In the Dhātupāṭha as it has come down to us "siddha" stands at the very end : पुच्छादिषु ..धात्वर्थ इत्येव सिद्धम्. In the Kātantra Vyākaraṇa Vṛddhi stands at the end (आरुत्तरे वृद्धिः). In the *Vājasaneyi Prātis'ākhya* each chapter ends with वृद्धं वृद्धिः.

सिद्धशब्दस्य कः पदार्थः—नावयवार्थः पृच्छ्यते । कस्तर्हि ? समुदायार्थो लौकिकः, सामर्थ्यात् । रूढिशब्दो नित्यवाची सिद्धशब्दः । . . . कदाचिद्धि नित्यशब्दस्तमर्थमाह कदाचित् सिद्धशब्दः । भर्तृहरिः ।

संग्रहे नित्यपर्यायवाची, इहापि तदेव । कुतः ? संग्रहोऽप्यस्यैव शास्त्रस्यैकदेशः । तत्रैकतन्त्रत्वाद् व्याडेश्च प्रामाण्यादिहापि तथैव सिद्धशब्द उपात्तः ।

सन्त्येकपदान्यप्यवधारणानि —शब्दान्तरेणोपात्तस्यानवद्योतितमवधारणमवद्योत्यत एवशब्देन । यदा त्वर्थप्रकरणादेः सोऽर्थोऽभिव्यज्यते तदा एव-शब्दो न श्रूयते इत्यवधारणमेकपदमित्युच्यते । तत्र न कश्चिदपो भक्षयतीत्यब्भक्षः । अप एव यो भक्षयति सः । भर्तृहरिः । एव-शब्दप्रयोगे द्विपदमवधारणम्, द्योतकत्वेनैवशब्दस्यापेक्षणात् । यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदैकपदमित्युच्यते । तत्र सर्व एवापो भक्षयतीत्यब्भक्षश्रुतिः सामर्थ्यान्नियममवगमयत्यप एव भक्षयतीति । इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात् सिद्धशब्दोपादानान्नियमोऽवगम्यते—सिद्ध एवेति । कार्याणां तु पदार्थानां प्रागभावप्रध्वंसाभावयोरपि सत्त्वात् सिद्धता नास्तीति न ते सिद्धा एव । कैयटः ।

यथाभिरूपाय कन्या दातव्येति अभिरूपशब्दस्य प्रकर्षात् प्रवृत्तिरभिरूपतमायेति एवं सिद्धशब्दोऽपि* ... । भर्तृहरिः ।

We find the word नित्य used in the sense of सिद्ध in the Bhāṣya on नित्यवीप्सयोः viii. 1. 4 : इह कस्मान्न भवति–हिमवान् खाण्डवः पारियात्रः समुद्र इति । नैष दोषः । अयं नित्यशब्दोऽस्त्येव कूटस्थेष्वविचालिषु भावेषु वर्तते । तद् यथा–नित्या द्यौः नित्या पृथिवी नित्यमाकाश-

* The reference is to Mahābhāṣya i. 4. 42. : लोके चाभिरूपायोदकमानेयम्, अभिरूपाय कन्या देयेति न चानभिरूपे प्रवृत्तिरस्ति तत्राभिरूपतमायेति गम्यते ।

मिति । अस्त्याभीक्ष्ण्ये वर्तते । तद्यथा—नित्यप्रहसितः नित्यप्रजल्पित इति । Also Bhāṣya on प्लुतावैच इदुतौ viii. 2. 106 : नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः ।

कार्यप्रतिद्वन्द्विभावात्—cf. नित्यो वा स्यात् कार्यो वा (p. 48 ).

अब्भक्ष occurs in Smṛti literature in the sense of 'living entirely on water' :

ब्राह्मणमनृतेनाभिशपेत् पतनीयेनोपपातकेन वा मासमब्भक्षः शुद्धवतीरावर्तयेदश्वमेधावभृथं वा गच्छेत् । वशिष्ठधर्मसूत्रम् ।

अब्भक्षस्तृतीयः स कृच्छ्रातिकृच्छ्रः । गौतमधर्मसूत्र ३।८।२०

अब्भक्षैर्वायुभक्षैश्च शीर्णपर्णाशनैस्तथा । रामायण १।५१।२६

अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा ।
जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसन्धिषु ॥ महा ३।१५९।१६

महापापोपपाताभ्यां योऽभिशंसेन्मृषा परम् ।
अब्भक्षो मासमासीत स पापी नियतेन्द्रियः ॥ याज्ञवल्क्यसंहिता ३।२८५

देवदत्तो दत्तः सत्यभामा भामा—The principle is generally enunciated thus : नामैकदेशग्रहणेन नाममात्रग्रहणम् . Under I. I. 45 Patañjali says : दृश्यन्ते हि वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः पदेषु च पदैकदेशान् । वाक्येषु तावद्वाक्यैकदेशान् : प्रविश पिण्डीम् । प्रविश तर्पणम् । पदेषु पदैकदेशान् । देवदत्तो दत्तः सत्यभामा भामेति । Devadatta means 'given by God' Gk. *theosdotos*. Similarly we have Haradatta and Gaṅgadatta, the a of Gaṅgā being shortened after the analogy of the first two. Bhagadatta occurs in the Mahābhārata. The original meaning of *bhaga* is 'dispenser, distributor, God' (Av. *bagha*, O. Persian *baga* ), so *Bhagadatta* recorded in the Mahābhārata would correspond to Av. *baghadāta*. These words ending in *datta* were often abbreviated into Datta which thus became a surname in Bengal. "Satya-bhāmā" lit. means 'whose wrath is true or genuine'. It may also mean 'of genuine brilliance'. "Bhāma" is a masc. abstract noun, but the fem. form "bhāmā" is used by itself as an abbrevia-

tion of the entire name 'Satya-bhāmā'.* In the Mahābhārata "Satyā" is several times used for "Satyabhāmā" असतस्त्रीणां समाचारं सत्ये मामनुपृच्छसि ३।२३२।१०, निरताहं सदा सत्ये भर्तॄणामुपसेवने ३।२३२।२८, उवाच सत्या सत्कृत्य पाञ्चाली धर्मचारिणीम् ३।२३२।६०. In Bengali Caraṇa is used for Hari-caraṇa, Sārada-caraṇa etc., S'araṇa for Kālī-s'araṇa. The most interesting examples are probably *nibhā* and *nibhānanī*, names of girls fairly common in Bengal. Expressions like पूर्णचन्द्रनिभानना(नी), इन्दुबिम्ब-निभानना(नी) are abbreviated first into निभाननी and then still further abbreviated into निभा after the analogy of विभा, प्रभा etc. Similarly *s'armā* is used for *deva-s'armā* 'one who has God for his protector' (cf. Gk. *Theo-charis*, *Lat. deo gratus*). From Gk. *margarites* 'pearl' we have in English the corruption of the first portion *Mag, Maggie, Meg, etc.* and that of the second portion in German *Gret-chen*. Similarly Dora is used in English for Theodora 'the gift of God' (Cf. Skt. Deva-datta). In Greek also we often find either the first part or the second part of compound names which form the main body used, *e.g., Philios* for *Philo-doros*, *Hippias* for *Hipparkhos*. Bhartṛhari reads: अथवा पूर्वोत्तरपदलोपोऽत्र द्रष्टव्यः and remarks: किं पुनरत्र पूर्वोत्तर-पदलोपोपायः ? न ह्यनुच्चारितस्य देवदत्तशब्दस्य पाणिनिरन्यो वा कश्चित् समर्थो लोपं कर्तुम्। तत्रैके मन्यन्ते। ...समुदायस्मृतिः, तत एवार्थप्रतिपत्ति-रिति। एतदसम्यक्। ...यथा साधनसाध्यमामिक्षासमकालं वाजिनमपि निष्पद्यते, एवं सत्यभामाशब्देन सह सत्यशब्दो भामाशब्दश्च निष्पद्यते। तच्च पाणिनिर्लोप-द्वारेणैव भूतानामनभिनिष्पादिनां साधुत्वमाचष्टे।

किं पुनरनेन वर्ण्येन ? किं न महता कण्ठेन नित्यशब्द एवोपात्तः, यस्मिन्नुपादीयमानेऽसन्देहः स्यात् ?

* I have not come across any instance of the use of "Bhāmā" for "Satyabhāmā" in early Sanskrit literature. स दृष्ट्वा शोभितं बध्वा तां शौरिरिव भामया। कथासरित्सागर ३९।१९७

मङ्गलार्थम् । माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते । मङ्गलादीनि हि शास्त्राणि प्रथन्ते वारपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च सिद्धार्था यथा स्युरिति ।

But why should such an explanation be necessary at all ? Why has not the word "nitya" itself been uttered in a loud voice – the word which when uttered would leave no room for doubt ?

For the sake of auspiciousness. The Ācārya, bent on securing maṅgala (auspiciousness) uses the word Siddha at the beginning for the well-being of the great collection of S'āstras. Works which have auspicious words at the beginning spread far and wide, and the people connected with them become heroes and live long and the readers have their desires fulfilled.

Under i. 1. 1 we find **मङ्गलादीनि हि शास्त्राणि प्रथन्ते, वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि च, अध्येतारश्च वृद्धियुक्ता यथा स्युः ।** Again under 1. 3. 1 we read **माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वकारमादितः प्रयुङ्क्ते । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च, अध्येतारश्च मङ्गलयुक्ता यथा स्युः ।**

**महता कण्ठेन—'बड़ गलाय' इति वङ्गभाषायाम् । "दोषयुक्तवाच्यमुपांशच्यते निर्दुष्टं तूच्चैरिति लोकप्रसिद्धमिति निर्दुष्टतानेन सूचिता ।" छाया ।**

अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते । किं तर्हि ? आभीक्ष्ण्येऽपि वर्तते, यथा नित्यप्रहसितः नित्यप्रजल्पित इति । यावताभीक्ष्ण्येऽपि वर्तते, तत्राप्यनेनैवार्थः स्यात्— व्याख्यानतो विशेषप्रतिपत्ति र्नहि सन्देहादलक्षणमिति । पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति,

शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति। अतः सिद्धशब्द एवोपात्तो न नित्यशब्द इति।

Even this word "nitya" does not necessarily refer to objects which are unchangeable and immovable. What then? It also denotes repetition as for instance, "nityaprahasitaḥ" perpetually laughing, "nityaprajalpitaḥ" perpetually prattling. Since it denotes repetition also, we can have our desired sense with the help of the maxim "in cases of doubt the details may be gathered from the explanation and a rule should not be rejected on the ground of ambiguity". The Ācārya perceives 'the word "siddha" denoting auspiciousness will be used at the beginning and at the same time I shall be able to explain it as synonymous with "nitya". It is for this reason that the word "siddha" has been used in preference to "nitya".

अथ कं पुनः पदार्थं मत्वैष विग्रहः क्रियते—"सिद्धे शब्दे अर्थे सम्बन्धे च" इति?

आकृतिमित्याह।

कुत एतत्?

आकृति र्हि नित्या द्रव्यमनित्यम्।

अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः?

सिद्धे शब्दे अर्थसम्बन्धे चेति। नित्यो ह्यर्थवतामर्थैरभिसम्बन्धः।

Now, with what sense in mind is the expression "siddhe s'abdārthasambandhe" resolved into "siddhe s'abde arthe sambandhe ca".

"Genus" says the writer.

How is this?

For "genus" is eternal, whereas individuals are transitory.

If the words connote individuals how should the expression be resolved ?

"Siddhe s'abde'rthasambandhe ca (when words and their relationship with meaning are established as eternal), for the relation of significant words with their signification is eternal.

अथवा द्रव्य एव पदार्थ एष विग्रहो न्याय्यः—सिद्ध शब्दे अर्थे सम्बन्धे चेति। द्रव्यं हि नित्यमाकृतिरनित्या।

कथं ज्ञायते ?

एवं हि दृश्यते लोके मृत् कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते। तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः* क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते†। पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या

* Cf. S'abara on MS. i. 1. 5 : रुचकः स्वस्तिको वर्धमानक इति हि प्रत्यक्षं दृश्यते।

† Cf S'aṅkara on BAU i. 2. 1 : "घटादिकारणस्याप्यसत्त्वमेव, अनुपमृद्य मृत्पिण्डादिकं घटाद्यनुत्पत्तेरिति चेत्, न, मृदादेः कारणत्वात्। मृत्सुवर्णादि हि तत्र कारणं घटरुचकादे र्न पिण्डाद्याकारविशेषः। तदभावे भावात्। असत्यपि पिण्डाद्याकारविशेषे मृत्सुवर्णादिकारणद्रव्यमात्रादेव घटरुचकादिकार्योत्पत्तिर्दृश्यते। तस्मान्न पिण्डाकारविशेषो घटरुचकादिकारणम्। असति तु मृत्सुवर्णादिद्रव्ये घटरुचकादि र्न जायते इति मृत्सुवर्णादिद्रव्यमेव कारणम्, न तु पिण्डाद्याकारविशेषः...पिण्डादिपूर्वकार्योपमर्दे मृदादिकारणं नोपमृद्यते घटादिकार्यान्तरेऽप्यनुवर्तते।"

नवा कुण्डिका। नवा घटिका। असतश्च विवक्षा यथा। समुद्रः कुण्डिका। विन्ध्यो वर्धितकम्, स्रवति कुण्डिकोदकम्, स्रवति कुण्डिकाया उदकम्, स्रवति कुण्डिकोदकमिति विसृजतीति गम्यते, स्रवति कुण्डिकाया उदकमिति निष्क्रामतीति गम्यते।

युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः । आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव । आकृत्युपमर्देन द्रव्यमेवावशिष्यते ।

Or, only when words are regarded as connoting individuals is the analysis "siddhe s'abde arthe sambandhe ca" correct, for *dravya* or individual is eternal, form or shape non-eternal.

How do you know this?

We find in the world that earth when invested with a certain form turns into a clod, by crushing the clod-form small pots are made, by crushing the pot-form, small pitchers are made. Similarly gold invested with a certain form becomes a lump (or nugget), by crushing the nugget-form rings are made, by crushing the ring-form bracelets are made, by crushing the bracelet-form Svastikas are made. Rolled over into a lump again the nugget becomes a pair of ear-rings of the colour of burning charcoal of Khadira-wood. The form undergoes successive changes; the substance, however, remains the same. On the destruction of the form, the substance alone remains.

आकृतावपि पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे सम्बन्धे चेति ।

ननु चोक्तमाकृतिरनित्येति ।

नैतदस्ति, नित्याकृतिः ।

कथम् ?

न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति, द्रव्यान्तरस्था तूपलभ्यते* ॥

---

* Cf. S'abara i. 1. 13: उपरतयोः संयोगविभागयोः श्रूयते इति चेत्, नैतदेवम् । न नूनमुपरमन्ति संयोगविभागाः ।

अथवा नेदमेव नित्यलक्षणम्—ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्ययोगि यत्तन्नित्यमिति। तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते।

किं पुनस्तत्त्वम्?

तद्भावस्तत्त्वम्। आकृतावपि तत्त्वं न विहन्यते।

Even if the form or genus be regarded as the meaning of words this analysis (siddhe s'abde arthe sambandhe ca) is right.

But you have said, the form is non-eternal?

That is not so. The form is eternal.

How?

It is not dead everywhere merely because it is dead in some substances, but is found inhering in other substances.

Or the definition of "nitya" is not only "that which is constant and immovable, without destruction, development and transformation, without birth, growth and decay", that also is "nitya" in which the essence is not destroyed.

What, again, is "tattva" or essence?

Tattva is that-ness, the essential characteristic or inherent attribute of a thing. In the form also the essence is not destroyed.

**ध्रुवं कूटस्थमिति संसर्गानित्यता** (non-eternality due to association) **परिहृता। अविचालीति परिणामानित्यता** (non-eternality due to transformation) **अनपायेत्यादिना प्रध्वंसानित्यता** (non-eternality due to destruction)।

**ध्रुवम्—स्वाभाविकवस्त्वन्तरसंसर्गरहितम्, कूटस्थम् आगन्तुकेन संसर्गरहितम्, अविचालि अपरिणामि। अपायोपजनविकाररहितमित्यस्यैव व्याख्यानम्—अनुत्पत्ति अवृद्धि अव्यययोगि इति। षड्भावविकारराहित्यं वानेन भाष्येणोच्यते॥**

तत्र अपायो नाशः, उपजनः सत्ता, सम्बन्धः अस्तित्वम्। विकारः परिणामः, उत्पत्ति-वृद्धी प्रसिद्धे। व्ययोऽपक्षय इति। अन्नंभट्टः।

ध्रुवपदस्यैव व्याख्यानं कूटस्थमिति। रूपान्तरापत्तिर्विचालः, यथा पयसो दध्यादिरूपता। अनेन परिणामानित्यता परास्ता। उत्पत्तेः सत्तापर्यन्तत्वात् अनुत्पत्तीत्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ। अवृद्धीत्यनेन तृतीया वृद्धिलक्षणा। अनुपजनेति चतुर्थः परिणामः, अनपायेति पञ्चमः अपचयः, अव्ययेति षष्ठो विनाशः।

The reference is to Nirukta i. 2. 8: षड् भावविकारा भवन्तीति वार्ष्यायणिः—जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति। "Acc. to Vārṣyāyaṇi there are six modifications of *becoming*—genesis, existence, alteration, growth, decay and destruction" Sarup. This passage is quoted by Patañjali in his Bhāṣya on भूवादयो धातवः I. 1. 3.

अथवा किं न एतेन—इदं नित्यम्, इदमनित्यम् इति। यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्दे अर्थे सम्बन्धे चेति।

कथं पुनर्ज्ञायते—सिद्धः शब्दोऽर्थः सम्बन्धश्चेति।

लोकतः। यल्लोके अर्थमर्थमुपादाय* शब्दान् प्रयुञ्जते। नैषां निर्वृत्तौ यत्नं कुर्वन्ति। ये पुनः कार्या भावा निर्वृत्तौ तावत् तेषां यत्नः क्रियते। तद् यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटम्, कार्यमनेन करिष्यामीति, न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान् प्रयुञ्जते।

Or, why should we bother about what is nitya and what is anitya? The analysis "siddhe s'abde arthe sambandhe ca" is made taking what is eternal as the meaning of the word.

---

* Cf. S'abara i. 1. 16: न हि यकारं प्रयुञ्जाना इकारमुपाददते यथा कटं चिकीर्षुर्वीरणानि।

How is one to know that sound and sense and the relationship between the two are eternal ?

*From the world*, for in the world people think of diverse objects and use words to denote them, they make no effort to coin words. In the case of objects, however, which are produced, effort is made to produce them. Thus, for instance, a man who wants to use a jar goes to the potter's and says : Make a jar, I want to use it. But a man who wishes to use words does not go to the grammarian's and say : Make some words, I shall use them. Even without going to the house of a grammarian, he takes the object he needs and uses words.

**प्रयोक्ष्यमाणः**—Future participle Atm. of **प्र-युज्** to employ. This reading is to be preferred to the present participle of the desiderative **प्रयुयुक्षमाणः**, because of the future participle **करिष्यन्** in the previous clause. Atm. acc. to **प्रोपाभ्यां युजेरयज्ञपात्रेषु** and **पूर्ववत् सनः** .

**तावत्येवार्थम्**—**बुद्ध्या वस्तु निरूप्य । कैयटः । तावत्येवेति । वैयाकरणकुलमगत्वैवेत्यर्थः ।**

यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते ?

लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः* ।

लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते । किमिदं धर्मनियम इति । धर्माय नियमो धर्मनियमः । धर्मार्थो वा नियमो धर्मनियमः । धर्मप्रयोजनो वा नियमो धर्मनियमः ।

If then the people be the final court of appeal with respect to them (words), what is the use of grammar ?

*The use of words being determined by the sense current in popular speech, the science of grammar enjoins restrictions (i. e., the use of correct words to the exclusion of corrupt forms) for religious merit.*

What is this "dharma-niyamaḥ" ?

It is (a Tatpuruṣa with the final Dative) "dharmāya niyamaḥ" *i. e.* restriction for religious merit, or it is (a Karmadhāraya belonging to the S'ākapārthivādi group) "dharmārthaḥ niyamaḥ" or (to be more explicit) "dharma-prayojanaḥ niyamaḥ" *i.e*, restriction which has for its object religious merit.

धर्माय नियमः—Similarly, a little later on Patañjali explains वृत्तिसमवायः as वृत्तये समवायः. Following in the foot-steps of Patañjali, S'abarasvāmin explains धर्मजिज्ञासा as धर्माय जिज्ञासा under Mīmāṁsāsūtra i. i. i. Commentators hasten to point out that these are mere explanations and not grammatical dissolutions of the compounds, for acc. to Patañjali Pāṇini's rule चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः allows the dative to be compounded with another inflected word only when there is the relationship of the material and the thing made ( प्रकृतिविकृतिभाव ) between the two. This, they hold, is clear from the fact that Pāṇini includes in his rules the words बलि and रक्षित. What is a present given to the Mahārāja is *for* him, so there is तादर्थ्य present there, consequently the चतुर्थी compound in महाराजबलिः comes under the तदर्थ portion of the rule and it is unnecessary to make a specific mention of बलि in the rule for this purpose ( यो हि महाराजाय बलिः स महाराजार्थो भवति । तत्र तदर्थ इत्येव सिद्धम् । भाष्यम् ). The same remarks apply with greater force to the case of रक्षित also.

I find it difficult to subscribe to this view. I believe Pāṇini thought that in महाराजाय बलिः there is a clear case of सम्प्रदाने चतुर्थी and so also to a certain extent in the case of गोरक्षितम् and अश्वरक्षितम् if they be the examples intended by Pāṇini. It is difficult to accept the view of the commentators

that to make सम्प्रदाने चतुर्थी applicable to such cases the root दा must be present. Pāṇini says nothing of the kind. So we may dismiss the argument of Jinendrabuddhi who says :—

ननु च सम्प्रदाने चतुर्थ्यर्थं बलिरक्षितग्रहणं स्यात् । नैतदस्ति । ददातिकर्मणा ह्यभिप्रेयमाणस्य क्रियया वा सम्प्रदान-संज्ञेष्यते । न चेह ददाति-कर्मणा क्रियया वाभिप्रेयमाणतास्ति । तत् कुतः सम्प्रदाने चतुर्थी ।

We find in the Taittiriya Āraṇyaka : यस्मै भूतानि बलिमावहन्ति (i. 31. 2). Again we find : हिरण्यनाभये वितुदये कौबेरायायं बलिः and सर्वभूताधिपतये नमः where there is hardly any perceptible difference between the dative in connexion with बलिः and that in connexion with नमः .

If as Kaiyaṭa says : विकृतिः प्रकृत्या (i. e. विकृतिश्चतुर्थ्यन्ता प्रकृत्या सह समस्यते ) be the rule of a predecessor of Pāṇini, then it is clear that the चतुर्थी compounds had grown more numerous by the time of Pāṇini who deliberately removed the restriction and thereby extended the scope of the rule. As Kātyāyana points out, even if we accept the view that a word in the dative denoting the thing made is compounded with a समर्थसुबन्त denoting the material, we have to make provision for cases like अश्वाय घासः अश्वघासः, श्वश्र्वै सुरा श्वश्रुसुरम् , हस्तये विधा (= अन्नम्) हस्तिविधा etc. (विकृतिः प्रकृत्येति चेदश्वघासादीनामुपसंख्यानम् २।१।३६।३).

Patañjali, no doubt, says that we should regard अश्वघास etc. as षष्ठी compounds, but there is no reason why we should have recourse to this round-about explanation to make it consistent with our imaginary explanation of Pāṇini's rule.

( "अश्वघासादीनामुपसंख्यानं कर्तव्यमिति । न कर्तव्यम् । अश्वघासादयः षष्ठीसमासा भविष्यन्ति । यद्धि यदर्थं भवति, अयमपि तत्राभिसम्बन्धो भवति—अस्येदमिति । तद् यथा—गुरोरिदं गुर्वर्थमिति । )

Haradatta's remarks in this connexion are interesting. He says : अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति। कश्चिदाह

भवत्येव, तद् यथा—गोग्रासः लीलाम्बुजं क्रीडासरः वासभवनं नाट्यशालेति। अपर आह—रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति,* उभावपि प्रतिब्रूमः। येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु ते नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यताम्। मा कारि ज्ञापनार्थं बलिरक्षितग्रहणम्। ...किञ्चैवं सति, सूत्रमेवैतदनर्थकम्, यूपदार्वादावपि षष्ठीसमास एवास्तु, "चतुर्थी तदर्थ" इत्येतत्तु "षष्ठी तदर्थे" इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम्। तत्रार्थभेदो भवति, षष्ठीसमासे सम्बन्धमात्रं गम्यते चतुर्थीसमासे तु तादर्थ्यं सम्बन्धविशेषः। नैषोऽस्ति विशेषः। आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः। यद्येवं केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते, किं च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यावसायः, सर्वत्रैव तथास्तु नार्थोऽनेन। उच्यते। हितशब्देन तावत् षष्ठीसमासो न भवति तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः, ततश्च "क्ते च" इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं 'गोहितम्' इत्याद्यर्थम्, एवं च 'गोरक्षित'मित्यत्र न स्यात् चतुर्थ्या [षष्ठ्या] असम्भवात्, "षष्ठी तदर्थ" इत्यस्य चाप्रसङ्गः प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः, अर्थशब्देनापि योगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः, बलिसुखग्रहणमपि कर्तव्यम् तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेव सूत्रम्, प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्।

It is also unnecessary for Kumārila Bhaṭṭa श्लोकवार्त्तिकम् १।११८-१२०) to explain away S'abara's धर्माय जिज्ञासा thus :

प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते।
तादर्थ्ये यूपदार्वादौ तेनास्मिन्न समासता॥
स हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः।
धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते॥
प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः।
सामान्यस्य विवक्षायां तादृशः कथ्यते कथम्॥

* The reference here is to Kaiyaṭa who says : रन्धनस्थाल्यादयस्त्वनभिधानान् षष्ठीसमासा न भवन्ति.

*Approved by the Directors of Public Instruction, Madras, Bihar and Mysore.*

श्रीशिवः शरणम्

षष्ठ-वर्षे ] **Usha Memorial Number** [ पञ्चमी संख्या

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

This number is specially dedicated to the memory of Usha Devi, the seven-year-old daughter of the Editor, who was as pure and radiant and beautiful as her name would suggest and whose knowledge of English and Sanskrit attracted the attention of all those who knew her and who left her poor parents several years ago to join her counterpart in heaven. It contains the beautiful *ā no bhadrāh* hymn of the Rigveda with the commentaries of Veṅkaṭamādhava, Skandasvāmin, Mahīdhara and Sāyaṇa and a new comentary by the Editor unfolding the peculiar beauty of each expression of this sublime hymn.

---



*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign—Rupees Nine.

The Madhuravāṇi (Bagalcott) writes: स्वागतं मञ्जूषायै। कल्कत्तानगरतः शब्दाब्धिलब्धवैदग्ध्यस्य कवितावनितास्वयंवरवृतवरस्य पण्डितप्रवरस्य श्रीक्षितीशचन्द्रचट्टोपाध्यायस्य सम्पादकत्वे प्रतिमासं नियतमाविष्क्रियमाणा मञ्जूषानामिका पत्रिका शिञ्जानमञ्जरीमञ्जुलपदैः गीतगुञ्जारवैश्च रञ्जयति रसिकपुञ्जम्। क्वचित् महाभाष्य-शब्देन्दुशेखरादिगत-सूक्ष्मतमविषयसमीक्षणसंरम्भेण महामहापण्डितपुण्डरीकाणामपि शिरःकण्डूतिम् उपजनयति। कदाचित् कुशलग्रामवृद्धेव सरसकथाकथनेन कौतुकमुत्पादयति। कुत्रचिच्च प्राचीन-सरस-सुन्दर-सुभाषितानाम् आंग्लानुवादान् प्रकटीकृत्य उपकरोति छात्रवृन्दम्। क्वचिदपि च वेदवेदान्तमन्त्रतन्त्रादीनां भावार्थादिकं जिज्ञासते। मध्ये मध्ये तनुतरविनोदिकथाभिः हास्यलहरीरपि उद्भावयति। तत्र तत्र च शब्दशक्तिप्रकाशेन शब्दशुद्धिविचारैः पुरातनसाहित्यप्रकटीकरणेन च भिन्नभिन्नरुचिमन्ति वाचककुलं सम्यगाराधयति। प्रायः सर्वत्र सरलतमा सुबोधा च अत्रत्या भाषा विदुषामिव विद्यार्थिनामपि सविशेषं परितोषं जनयति। 'पण्डिता च पतिव्रता' इति ख्यातायाः क्षमादेवीरावमहोदयायाः "परित्यक्ता" इति विचित्रा चैत्राङ्कगता चारुतमकथा चमत्कुरुते सचेतसां चेतांसि हृदयङ्गमया निरूपणभङ्ग्या। तस्मिन्नेव मञ्जूषायाः चैत्राङ्के 'शिवसूत्रस् एण्ड संस्कृत आल्फाबेट्' इति विचारप्रचुरः सम्पादकानाम् आंग्लभाषायां लिखितः विवेचनात्मकः लेखः सर्वेषामपि विपश्चिदपश्चिमानां प्रशंसापात्रं भवतीति निश्चप्रचम्। वयं तु सादरं संसूचयामः "यावच्छक्यं संस्कृतभाषायामेव लेखा लेखनीयाः" येन शुद्धसंस्कृतविदुषामपि उपयोगो भवेत्।

शिञ्जन्मञ्जीरमञ्जूक्तिगुञ्जितै रसिकरञ्जिनी।
क्षितीशकृतिमञ्जूषा केषामेषा न तोषदा॥
सुवर्णाकांक्षिभिः सरसैर्थलुब्धैर्मनीषिभिः।
अलङ्कारप्रियैरेषा मञ्जूषा गृह्यतां रसात्॥
उत्कृष्टलेखरत्नानां मञ्जूषैषा विशोभते।
सर्वथा समुपादेया सर्वैः सहृदयैरपि॥

श्रीः

# आनोभद्रीयं सूक्तम्

( ऋक्संहिता १।८९ )

श्रीक्षितीशचन्द्र-चट्टोपाध्याय-देवशर्मणा

पदपाठ—वेङ्कटमाधवव्याख्यान-स्कन्दस्वामिभाष्य--महीधरभाष्य
सायणभाष्य—काश्यपक्षितीशचन्द्रभाष्यादिभिः संयोजितम्।

श्रीविश्वनाथचट्टोपाध्यायन
८१ नं श्यामवाजार ष्ट्रीट्, कलिकाता-४
वास्तव्येन मञ्जूषायां प्रकाशितम्।
वसन्तपञ्चमी, २००८

## PREFACE

The hymn beginning with *ā no bhadrāh kratavo yantu vis'vatah* is one of the most inspiring hymns in the Vedas. It is presented here with the Padapāṭha of S'ākalya, the earliest and briefest running commentary on the Rigveda, the paraphrase of Veṅkaṭamādhava, the commentary of Skandasvāmin, the fairly elaborate commentary of Mahīdhara and the very elaborate commentary of Sāyaṇa who comes rather late in the list. As Mahīdhara's commentary is based on Uvaṭa's and as Skandasvāmin's Bhāṣya differs but little from Haradatta's Vyākhyā, we have not included the two latter in this book, but have merely given extracts from them. We have added a commentary of our own bringing out the significance of each expression of this sublime hymn. An attempt has also been made to present the correct texts of the commentaries, to trace the quotations contained therein to their sources and to throw light on some obscure points. Some of the grammatical and other peculiarities of the commentaries have been discussed in the notes.

The moral of the hymn may be mentioned here. The devotee must never forget that "it is vanity to wish to live long, and to be careless to live well." Our life must not be swayed by impulses and passions, but we must live a godly life and "endeavour to conquer ourselves, and daily to grow stronger and make a further progress in holiness." (देवानां सख्यमुपसेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ). Enjoyment is not to be shunned, we should enjoy life to its fullest extent, but the enjoyment must be that of the Gods and not that of brutes, it must never transgress *Dharma*, it must always be धर्माविरुद्ध (कुर्वन्नेवेह कर्माणि

जिजीविषेच्छतं समाः—ईशोपनिषद्, धर्मार्थकामाः सममेव सेव्या यो ह्येकसक्तः स जनो जघन्यः—महाभारतम्).

The last stanza in which Aditi is identified not only with all the Gods but with nature as well, with all that has been and shall be born, gives a poetic statement of the pantheistic idea which is characteristic of the Vedas. It reminds one forcibly of the Egyptian Goddess Neith, the Great Mother, at one of whose temples in the ancient city of Sais was inscribed in Greek :

*Ego: eimi pan to gegonos kai on kai esomenon kai ton emon peplon oudeis po: thne:tos apekalupsen.*

'I am all that is and that was andthat shall be, and no mortal hath lifted my veil.'

It is interesting to note in this connexion that though the conception of the Earth as a mother and of Heaven as a father (Skt. *Dyaus pitar*, Gk. *Zeu pater*, Lat. *Ju:piter*) as found in stanza 4 of our hymn (तन्माता पृथिवी तत् पिता द्यौः) is common to Vedic and Greek mythology, the Egyptians regarded the earth as male and the sky as female.

We shall deem our labours amply rewarded if this little book enables our readers to approach the hymn with the reverence due to it, inspires them to live a life of holiness and helps scholars to make a critical and comparative study of the Indian commentaries on the Vedas.

Manjūṣa Office<br>
Calcutta—4<br>
*31st January, 1952*

KSHITISHA CHANDRA CHATTOPADHYAYA

श्रीः

# आनोभद्रीयं सूक्तम्

( ऋक्संहिता १।८९ )

आ नो॑ भ॒द्राः क्रत॑वो यन्तु वि॒श्वतो-

ऽद॑ब्धासो॒ अप॑रीतास उ॒द्भिदः॑ ।

दे॒वा नो॒ यथा॒ सद॒मिद्वृ॒धे अस॒-

न्नप्रा॑युवो रक्षि॒तारो॑ दि॒वेदि॑वे ॥ १ ॥

आ । नः॒ । भ॒द्राः । क्रत॑वः । य॒न्तु॒ । वि॒श्वत॑ः ।

अद॑ब्धासः । अप॑रि॒ऽइतासः । उ॒त्ऽभिद॑ः ।

दे॒वाः । नः॒ । यथा॑ । सद॑म् । इत् । वृ॒धे । अस॑न् ।

अप्र॑ऽआयुवः । र॒क्षि॒तार॑ः । दि॒वेऽदि॑वे ॥ १ ॥

वेङ्कटमाधव-व्याख्यानम् । आयन्तु [ नः ] अस्मान् [ विश्वतः ] सर्वतः [ भद्राः क्रतवः ] भंजनीयानि कर्माणि [ अदब्धासः ] असुरैरहिंसितानि [ अपरीतासः ] अपरिवृतानि च [ उद्भिदः ] फलोद्भेदनानि ।

देवाः यथा [ नः ] अस्माकम् [सदमित् ] सदैव [ वृधे ] वर्धनाय [ असन् ] स्युः [अप्रायुवः] अप्रगच्छन्तः रक्षितारः च [ दिवेदिवे ] अहन्यहनि ॥१॥

काश्यप-क्षितीशचन्द्र-भाष्यम् । आ न इति । **भद्राः** शुभाः कल्याणकरा इति यावत् । **अदब्धासः** अदब्धाः अहिंसिताः, केनापि हिंसितुमशक्याः, विकारहेतुसद्भावेऽप्यविकृताः, समासन्नेऽपि विपत्तिसमयेऽमलिना इत्यर्थः । **अपरीतासः** अपरीताः अपरिगताः केनाप्यतिक्रमितुमशक्याः सर्वातिशायिन्य इति यावत् । **उद्भिदः** सर्वानन्तरायांश्छित्त्वा भित्त्वा च प्रसरणशीलाः अप्रतिहतप्रसरा इति यावत् । **क्रतवः** बुद्धयः **विश्वतः** सर्वतः स्वतः शास्त्राद्यनुशीलनतः जागतभावपर्यवेक्षणतश्च अस्मान् **आयन्तु** आगच्छन्तु प्राप्नुवन्त्वित्यर्थः । बुद्धिरेव परमं बलं मनुजानाम् । अत एव "बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्" इत्युद्घोषयन्ति नीतिशास्त्रविदः । अमीभिः क्रतुभिर्वयमप्यदब्धा अपरीता उद्भिदो भवेमेति ध्वन्यते । उद्भित्त्वं च भक्तैः प्रार्थ्यते देवैश्च प्रसादीक्रियते । तथाच तैत्तिरीयब्राह्मणे [२।४।७।३] श्रूयते—"नृणामह प्रणीरसत् । अग्र उद्भिन्दतामसत्" इति । "अयं .. नृणां मनुष्याणां प्रणीः प्रकर्षेण नेता असत् भवतु । अह अपि च उद्भिन्दताम् विरोधिजनोद्भेदनं कुर्वतां पुरुषाणाम्मध्येऽयमग्र असत् प्रथमप्रवृत्तौ भवतु" इति तद्व्याख्यानम् । **यथा** येन बुद्धिसद्भावेन **देवाः** इन्द्राद्या अस्माभिर्यथाशास्त्रं यागादिभिस्तोषिता वर्द्धिताश्च **सदमित्** सदैव प्रतिपलमेव **वृधे** वर्धनाय सम्पदामिति शेषः । **असन्** भवेयुः, तथा **दिवेदिवे** प्रतिदिनमेव **अप्रायुवः** अनपायिनः अप्रमत्ता इत्यर्थः, अत्यन्तं यत्नवन्त इति यावत् । **रक्षितारः** पालकाः असन्नित्यनुषङ्गः, भवेयुः । देवा नः शुभया बुद्ध्या संयुञ्जन्तु तया च बुद्ध्या समुपेता वयं देवानां पूजनं [illegible]ध्मः, तेन च प्रीतानां देवानां सान्द्रेण प्रसादेन पुत्रपौत्रादिकं [illegible]सम्पदादिकं चानुदिनं नोऽभिवर्धतां संसारसुलभाभ्यश्च विपत्परम्प-

राभ्यः सदैव नस्त्राणमुपजायताम् । कथमर्थकः कथाशब्द इत्थमर्थकश्चेत्थाशब्दो वेदेषूपलभ्यते । एतद्वैपरीत्येन सदार्थकः सदम्-शब्दोऽपि श्रुतिषु श्रूयते ॥ १ ॥

स्कन्दस्वामिभाष्यम् । ...नः अस्मान् भद्राः कल्याणाः क्रतवः यज्ञाः आयन्तु आगच्छन्तु विश्वतः सर्वतः । स्वतः सम्बन्धिनश्च आत्मनः सम्बन्धिनां च पुत्रादीनामस्माकं यज्ञा उपनयन्त्वित्यर्थः । कीदृशाः ? उच्यते । अदब्धासः अहिंसिताः । यज्ञविध्वंसिभी रक्षआदिभिरविगुणा[1] इत्यर्थः । अपरीतासः अपरिगताः । अन्यैरप्राप्तपूर्वा इत्यर्थः । उद्भिदः उद्भिन्नामैकाहः । तत्प्रभृतयः । अथवा उद्भिन्दन्ति फलानीत्युद्भिदः जनयितारः फलानामित्यथः । कथं पुनरायन्तु ? उच्यते । देवाः नः यथा सदम् इत् । सदमिति सदाशब्दपर्यायः । इच्छब्द एवार्थे । सदैव वृधे वर्धनाय असन् भवयुः । अप्रायुवः अप्रमोषितारः आयषः । जीवितस्य चानपहर्तार इत्यर्थः । अथवा प्रायुव इति अयतेर्गतिकर्मण इदं रूपम् । अप्रगन्तारः नित्यसन्निहिता इत्यर्थः । अथवा प्रायुव इति यौते रूपम् । अन्यैरर्थैरप्रश्रिता[2] बुद्धिर्येषां ते अप्रायुवः । अनाक्षिप्तचेतस्का इत्यर्थः । अत्यन्तं यत्नवन्त इत्यर्थः । रक्षितारश्च दिवेदिवे अहन्यहनि ॥१॥

महीधरभाष्यम् । ... क्रतवः यज्ञाः सङ्कल्पा वा नः अस्मान् प्रति आयन्तु आगच्छन्तु । यज्ञकर्तारो वयं भवेमेत्यर्थः । कीदृशाः क्रतवः ? भद्राः भन्दनीयाः । भदि कल्याणे । कल्याणकारिणः । तथा विश्वतः[3] अदब्धासः सर्वतोऽनुपहिंसिताः[4] । निर्विघ्ना इत्यर्थः । अपरीतासः न परीताः

[1] Should we read ०रविहता ?

[2] The correct reading would appear to be **अप्रमिश्रिता,** which is found in Haradatta ; cf. **यु मिश्रणामिश्रणयोः.**

[3] **विश्वतः सर्वतः स्वतः सम्बन्धिनश्च । उवट-हरदत्तौ ।**

[4] **सगुणा इत्यर्थः । हरदत्तः ।**

अपरीताः अपरिगता अज्ञाताः[1] केनचित्। फलानुमेया इत्यर्थः। उद्भिदः उद्भिन्दन्ति प्रकटयन्तीति उद्भिदः उद्भेत्तारः। यज्ञान्तराणां प्रकटीकर्तार इत्यर्थः[2]। किञ्च यथा येन प्रकारेण देवाः नः अस्माकं सदमित् सदैव वृधे वृद्धैः असन् भवन्ति। तथा क्रतव आयन्त्वित्यर्थः। सदमिदित्यव्ययं सदार्थे। कीदृशाः देवाः? अप्रायुवः प्रकर्षेणायुवन्ति प्रमाद्यन्ति ते[3] प्रायुवः। यौतेः क्विप्। तुगभाव आर्षः। न प्रायुवः अनलसाः। अस्माकं वृद्धैः भवन्त्वित्यर्थः। तथा दिवेदिवे अहन्यहनि प्रत्यहं रक्षितारः पालकाः ॥१॥

सायणभाष्यम्। आ नो भद्रा इति दशर्चं पञ्चमं सूक्तं गोतमस्यार्षं वैश्वदेवम्। आदितः पञ्चर्चः सप्तमी च जगत्यः, षष्ठी स्वस्ति न इन्द्रेत्येषा विराट्स्थाना। "नवकौ वैराजस्त्रैष्टुभश्च" [अनु० ९।५] इत्युक्तलक्षणयोगात्। अष्टम्याद्यास्तिस्रस्त्रिष्टुभः। तथा चानुक्रान्तम्। "आ नो दश वैश्वदेवं तु पञ्चाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थाना" इति। अग्निष्टोमे वैश्वदेवशस्त्र उत्तमावजमेतत्सूक्तं वैश्वदेवनिविद्धानीयम्। सा तु प्रकृतौ विकृतौ च वैश्वदेवशस्त्रस्य परिधानीया। तथा च सूत्रितम्। "आ नो भद्राः क्रतवो यन्तु विश्वत इति नव वैश्वदेवम्" [आ० श्रौ० सू० ५।१८] इति। "अदितिर्द्यौरदितिरन्तरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे" [आ० श्रौ० सू० ५।१८] इति च। ब्राह्मणं च भवति। "सदैव पञ्चजनीयया परिदध्यात्" [ऐ० ब्रा० १३।७] इति। महाव्रते निष्केवल्य एतत्सूक्तम्। तथा च पञ्चमारण्यके सूत्रते। "आनोभद्रीयं च तस्य स्थाने" [ऐ० आ० ५।३।२] इति।

1 अन्यैरप्राप्तपूर्वाः। ह०

2 उद्भिद उद्भिन्ना एकाहाहीनप्रभृतयः। अथवा उद्भिन्दन्ति फलानीत्युद्भिदः। जनयितारः क्रतूनामित्यर्थः। ह०

3 Should we read प्रमाद्यन्तीति ?

नोऽस्मान् क्रतवोऽग्निष्टोमादयो महायज्ञा विश्वतः सर्वस्मादपि दिग्भागादायन्तु। आगच्छन्तु। कीदृशाः क्रतवः ? भद्राः। समीचीनफलसाधनत्वेन कल्याणा भजनीया वा। अदब्धासः। असुरैरहिंसिताः। अपरीतासः। शत्रुभिरपरिगताः। अप्रतिरुद्धा इत्यर्थः। उद्भिदः। शत्रूणामुद्भेत्तारः। ईदृशाः क्रतवोऽस्मांस्तथागच्छन्तु। अप्रायुवोऽप्रगच्छन्तः स्वकीयं रक्षितव्यमपरित्यजन्तः अत एव दिवे दिवे प्रतिदिवसं रक्षितारो रक्षां कुर्वन्तः। एवंगुणविशिष्टाः सर्वे देवा नोऽस्माकं सदमित् सदव वृधे वर्धनाय यथा असन् भवेयुस्तथागच्छन्त्विति सम्बन्धः[1]। अदब्धासः। दम्भु दम्भे। दम्भो हिंसा[2]। निष्ठायां "यस्य विभाषा" [७।२।१५] इतीट्प्रतिषेधः। नञ् समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। अपरीतासः। इण् गतौ। पूर्ववत्कर्मणि निष्ठा। उभयत्र "आज्जसेरसुक्" [७।१।५०]। वृधे। वृधु वृद्धौ। सम्पदादिलक्षणो भावे क्विप्।

1 This is found only in a few MSS. and is rather cumbrous. **यथा** might have been placed before **अप्रायुवः**. Max Müller reads : **वृधे वर्धनायासन् भवन्तु**. In that case S. missed **यथा**.

2 In the Dhātupāṭha we find **दम्भु दम्भे** but we are none the wiser for the explanation. The printed Mādhavīya Dhātuvṛtti reads **दम्भु दम्भने** and adds **दम्भो लोकार्जवार्थमेव कर्मानुष्ठानम्**. Probably the correct reading is **दम्भु दम्भे। दम्भो लोकावर्जनार्थमेव कर्मानुष्ठानम्।** Kṣīrasvāmin and Maitreya Rakṣita read **दम्भु दम्भे** but do not vouchsafe any explanation. Bhaṭṭoji reads **दम्भने**. As **दम्भ** is generally used in the sense of 'fraud', 'hypocrisy'*. **दम्भे** in the Dhātupāṭha probably means 'deception'. And *dab* in

---

* Cf. इज्याध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः॥
तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति॥

"सावेकाचः०" [६।१।१६८] इति विभक्तेरुदात्तत्वम् । असन् । अस भुवि । लेटय्रडागमः । "बहुलं छन्दसि" [२।४।७३] इति शपो लुगभावः[1] । तस्याङित्त्वात् "श्नसोरल्लोपः" [६।४।१११] इत्यकारलोपाभावः । अप्रायुवः ।

the Avesta is used in the sense of 'deceiving'. *Davāiθyāo* means 'of the deceiver'. The Greek verb *atembo*: means to maltreat, to afflict, to perplex ; passive with gen., to be bereft or cheated of a thing. In the Nighaṇṭu दभ्नोति is read in the list of गतिकर्मक and वधकर्मक roots. The original meaning of the root, therefore, seems to have been to harm with guile, then on the one hand to kill and on the other to deceive. In RV. i.25.14 :

न यं दिप्सन्ति दिप्सवो न द्रुह्वाणो जनानाम् ।
न देवमभिमातयः ॥

It is just possible that both the senses are present—'whom deceivers do not wish to *deceive*, whom those who hurt people do not *seek to hurt*, the God whom those who lie in wait cannot harm'.

[1] "बहुलं छन्दसि" इति शपो लुगभावः.—In लेट् we get the proper Vikaraṇa. अस् being an अदादि root, the Vikaraṇa is o. But if there be no Vikaraṇa, then अस् will be changed into भू acc. to अस्तेर्भूः ii. 4. 52 before the modal sign of the subjunctive i.e. अट् which is Ārdhadhātuka, being neither तिङ् nor शित्. The easier course would have been to invoke the aid of छन्दस्युभयथा iii. 4. 117. Under RV. i. 9. 5 S. says : अस भुवि । लेट् । तिप् । इतश्च लोप इतीकारलोपः । लेटोऽडाटावित्यडागमः । अदिप्रभृतिभ्यः शपः इति शपो लुक् । आगमा अनुदात्ता इत्यटोऽनुदात्तत्वात् धातुस्वर एव । Here also S. evidently takes the help of छन्दस्युभयथा, otherwise before the अ of अट् the Vikaraṇa could not have been dropped.

असत् is accented in connexion with यथा. यद्धृत्तान्नित्यम् viii. 1.66.

इण् गतौ[1]। अस्मात्प्रपूर्वात् "छन्दसीणः" [उ० १।२] इत्युण्प्रत्ययः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। जसि "जसादिषु छन्दसि वावचनम्" [७।३।१०९।१] इति गुणस्य विकल्पितत्वादभावे[2] तन्वादित्वादुवङ् [६।४।७७।१] ॥ १ ॥

[1] S. follows the Padapāṭha but the change of उ to उव् presents difficulties. Skandasvāmin, Haradatta and others have proposed allternative derivations from *yu* also. Similarly acc. to Western scholars *aprā-yu* 'assiduous' is from *yu* to separate, keep away (Macdonell, *Vedic Grammar*, p. 292, f. n. 13). In that case we may say : अनित्यमागमशासनम् इति तुकोऽभावः। सर्वे विधयश्छन्दसि विकल्प्यन्त इति वा, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति वा अचि श्नुधातुभ्रुवामित्युवङ्, न पुनरोः सुपीति यण्। यद्वा छन्दस्युभयथा [ ६।४।८६ ] इति सूत्रेण सर्वत्रैव छन्दसि इयङुवङो यणश्च विकल्पो भवति. Macdonell has missed *aprāyuvaḥ*. Wackernagel (*Alt-indische Grammatik* Vol III says : Nouns with radical or apparently radical *i* and *u* are declined almost throughout like derivative *i* and *u* stems, occasionally, however, like the radical nouns in *ī/iy*, *ū/uv* ( section 66, b ) ; and from *yu* to drive, move ( *yuyoti* ) he quotes *aṃhoyuvaḥ* 'pressed hard', *aprāyuvaḥ* 'not lazy'.

[2] विकल्पितत्वात्तदभावे is more usual.

देवानां भद्रा सुमतिर्ऋजूयतां

देवानां रातिरभि नो नि वर्तताम्।

देवानां सख्यमुप सेदिमा वयं

देवा न आयुः प्र तिरन्तु जीवसे ॥ २ ॥

देवानाम् । भद्रा । सुऽमतिः । ऋजुऽयताम् ।

देवानाम् । रातिः । अभि । नः । नि । वर्तताम् ।

देवानाम् । सख्यम् । उप । सेदिम । वयम् ।

देवाः । नः । आयुः । प्र । तिरन्तु । जीवसे ॥ २ ॥

वेङ्कटमाधवव्याख्यानम् । देवानां [ भद्रा ] भजनीया सुमतिः [ ऋजूयताम् ] ऋजुमिच्छताम् देवानाम् [ रातिः ] दानम् [ नः ] अस्मान् अभिनिवर्तताम् । देवानाम् सख्यम् [ उपसेदिम ] उपगच्छम वयम् । देवा नः आयुः [ प्रतिरन्तु ] वर्धयन्तु [ जीवसे ] जीवनाय ॥ २ ॥

काश्यपक्षितीशचन्द्रभाष्यम् । देवानामिति । **ऋजूयताम्** आर्जवमाचरताम् ऋजुमार्गेण गच्छतामित्यर्थः । **देवानाम् भद्रा** कल्याणी **सुमतिः** प्रसादाभिमुखी बुद्धिर्मङ्गलं नः कृर्षीतेति शेषः । ऋजूयतां देवानामित्युक्तेर्ऋजूयताम-स्माकमृजुमार्गेणैवान्तरेणैवान्तरायादिकं क्षेमं वितनोत्वित्यर्थः । **देवानां रातिः** दानम् नः अस्मान् **अभि** समन्तात् **नि** नितरां **वर्तताम्** सन्तिष्ठताम् । प्रीता देवाः पुत्रमित्रकलत्रादिभिर्गवाश्वहस्तिहिरण्या-दिभिश्चास्मान् योजयन्तु । **वयम् देवानाम् सख्यम्** मैत्रीम् **उपसेदिम** आसादयम । मानुषा अपि वयं मानुष्यकमतिक्रान्ता देवोचितगुणगण-

सम्पन्ना देवानां सौहृद्यमनुभवेम। **देवाः जीवसे** जीवनाय **नः** अस्माकम् **आयुः** जीवनकालं **प्रतिरन्तु** प्रकर्षेण वर्धयन्तु। यद्वा, **नः** अस्मान् **आयुः** जीवनकालं **प्रतिरन्तु**। अन्तर्भूतण्यर्थोऽत्र तौदादिकस्तॄधातुर्द्रष्टव्यः। प्र-तारयन्तु। जीवनकालस्य देवैर्विहितस्य शतवर्षसम्मितस्य पारं नयन्तु, पूर्णायुषोऽस्मान् विदधत्वित्यर्थः। यद्यप्यायुषो वर्धनं स्वत एव जीवनायैव भवति तथापि जीवसे इत्युक्ते न केवलं वयं लोहकारभस्त्रेव श्वसन्तोऽवतिष्ठेमहि परं शोभनैरुपकरणैरुपेताः शोभनान् भोगान् भुञ्जानाः शोभनानि कर्माण्यनुतिष्ठन्तः परमार्थत एव जीवेमेत्यर्थः॥ २॥

निरुक्तम्। देवानां वयं सुमतौ कल्याण्यां मतौ [ ऋजूयताम् ] ऋजुगामिनाम् ऋतुगामिनामिति वा। देवानां [ रातिः ] दानम् अभि नः निवर्तताम्। देवानां सख्यम् [ उपसेदिम ] उपसीदेम वयम् देवा नः आयुः [ प्रतिरन्तु ] प्रवर्धयन्तु [ जीवसे ] चिरञ्जीवनाय॥ २॥

दुर्गाचार्यभाष्यम्।...य एते देवाः रश्मयः नित्यम् ऋज्वेव मण्डलादनावरणत्वादन्तरिक्षस्य सर्वतो यन्ति। अथवा, ऋजूयताम् ऋतुगामिनाम् ऋतावृतौ यथाकालमस्मान्मण्डलाद् गच्छताम् सुमतिः शोभना मतिः प्रसादाभिमुखी मतिः। सा नः अस्मान् प्रति निवर्तताम् नियमेन वर्तताम्, तत्पूर्विका च रातिः धनलाभोऽस्मान् प्रति नियमेन वर्तताम्। ततश्च तेन धनलाभेन उपजनितसामर्थ्याः सन्तः वयम् तेषामेव देवानां सख्यम् समानख्यानं याज्ञे कर्मणि समानमङ्गभावम् उपसेदिम उपसीदेम उपगच्छेम वयम्[1]। ततश्च तथाभूतानामस्माकम् आयुः ते देवा प्रतिरन्तु प्रवर्धयन्तु जीवसे चिरं जीवनाय—इत्येतदाशास्महे॥ २॥

[1] This **वयम्** is superfluous and ought to be dropped.

महेश्वरव्याख्यानम् । देवानां भद्रा कल्याणी सुमतिः शोभनानुग्राहिका बुद्धिः । कीदृशानां देवानाम् ? ऋजूयताम् ऋजुगामिनां...वा । अभि नः अस्मान् प्रति निवर्ततामिति सम्बन्धः । देवानां रातिः देवानामेव च दानम् अभि नः अस्मान् प्रति निवर्तताम् । देवानामेव च सख्यं स्तुत्यस्तोतृत्वलक्षणं यष्टृयष्टव्यत्वलक्षणं च । उपसेदिम उपसीदेम उपगच्छेम वयमित्याशास्महे । देवा नः अस्माकमायुः प्रतिरन्तु जीवसे । तिरतिर्वृद्ध्यर्थः । प्रवर्धयन्तु चिरं जीवनाय । भाष्ये [ निरुक्ते ] तु "देवानां वयं ... कल्याण्यां मतौ" इति विभक्तिव्यत्ययः, स्यामेति चाध्याहारः ॥ १२।३९

स्कन्दस्वामिभाष्यम् । देवानां भद्रा कल्याणी सुमतिः शोभना परानुग्रहात्मिका बुद्धिः । ऋजूयताम् ऋजवः सदाचारा मनुष्याः । तत्कामिनाम् । किंच देवानां रातिः दानम् अभि नः निवर्तताम् अस्मान् प्रति निवर्तताम् । देवा अस्मभ्यं ददत्वित्यर्थः । किं च देवानां सख्यम् उपसेदिम उपगच्छेम वयमित्याशास्महे । किं च देवा नः आयुः प्रतिरन्तु वर्धयन्तु जीवसे चिरं जीवनाय ॥ २ ॥

महीधरभाष्यम् । भद्रा कल्याणकारिणी देवानां सुमतिः शोभना बुद्धिः नः अस्मान् प्रति अभिनिवर्तताम् अस्मदभिमुखीभवतु । कीदृशानां देवानाम् ? ऋजूयताम् ऋजु अवक्रं यन्ति गच्छन्ति ऋजुयन्तस्तेषाम् । इणः शतृप्रत्ययः [1] । अवक्रगामिनाम् । यद्वा ऋजुम् अवक्रं साधुं यजमानं कामयन्ते ते ऋजूयन्ति । सुप आत्मनः क्यच् । ऋजूयन्ति ते[2] ऋजूयन्तः,

[1] The implication is that it is a *sahasupā* compound and that the lengthening is by the rule **अन्येषामपि दृश्यते**.

[2] **ऋजूयन्ति** has been repeated to show its connexion with **ते.** Should we read **ऋजूयन्तीति** ?

तेषाम्। क्यजन्ताच्छतृ। साधु यजमानं कामयमानानामित्यर्थः। किञ्च देवानां रातिः दानं नः अस्मान् अभिनिवर्तताम्। देवा अस्मभ्यं ददत्वित्यर्थः। देवेभ्यो लब्धदाना वयं देवानां सख्यं मैत्रीम् उपसेदिम प्राप्नुयाम। सदेर्लिटुत्तमबहुत्वे रूपम्। संहितायां दीर्घः। देवाः नः अस्माकं सखीनाम्[1] आयुः जीवसे जीवितुं प्रतिरन्तु प्रवर्धयन्तु ॥२॥

उवटभाष्यम्।… ऋजूयताम् ऋजुगामिनां यद्वा ऋजुकामिनाम्। ऋजुं प्रगुणं यजमानं कर्तुं ये कामयन्ते ते तथोक्ताः। …

सायणभाष्यम्। भद्रा सुखयित्री भजनीया वा देवानां सुमतिः शोभना मतिरनुग्रहात्मिका बुद्धिरस्माकमस्त्विति शेषः। कीदृशानाम्? ऋजूयताम् ऋजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छताम्। तथा देवानां रातिर्दानं नोऽस्मानाभिमुख्येन नितरां वर्तताम्। तदभिमत-फलप्रदानमप्यस्माकं भवत्वित्यर्थः। वयं च तेषां देवानां सख्यं सखित्वं सख्युः कर्म वोपसेदिम। प्राप्नवाम[2]। तादृशा देवा नोऽस्माकमायुर्जीवसे जीवितुं प्रतिरन्तु[3]। वर्धयन्तु। भद्राः। भदि कल्याणे सुखे च।

[1] भक्तानाम्। उवटः।

[2] The printed editions have **प्राप्नुवाम.** This is an interesting instance of contamination, being a blend of **प्राप्नुयाम** and **प्राप्नवाम.** In view of the fact that in the previous and subsequent clauses we have the Imperative, I am inclined to think that **प्राप्नवाम** is the correct reading here. It is a thousand pities that later editors have often blindly followed Max Müller instead of exercising their own judgment.

[3] **तॄ** to cross is both **भ्वादि** and **तुदादि** in the Vedas, and so we can easily have **तिरति** like **किरति.** **प्र-तिरति** means to increase, to prolong. **सावर्णेर्देवाः प्र तिरन्त्वायुः** RV. x. 62. 11, **आप ओषधीः प्र तिरन्तु नो गिरः** RV. x. 66. 10.

"ऋज्रेन्द्राग्र०" [उ० २।३१] इत्यादौ रक्प्रत्ययान्तो निपातितः। ऋजूयताम्। ऋजुमात्मन इच्छति ऋजूयति[1]। "सुप आत्मनः क्यच्" [३।१।८]। तदन्ताल्लटः शतृ[2]। "शतुरनुमः०" [६।१।१७३] इत्यजादिविभक्तेरुदात्तत्वम्। रातिः। रा दाने। "मन्त्रे वृष०" [३।३।९६] इति क्तिन उदात्तत्वम्। सख्यम्। "सख्युर्यः" [५।१।१२६] इति भावे कर्मणि वा यप्रत्ययः[3]। सेदिमा। षद्लृ विशरणगत्यवसादनेषु। "छन्दसि लुङ्लङ्लिटः" [३।४।६] इति वर्तमाने प्रार्थनायां लिट्। सत्वस्या-[4] नैमित्तिकत्वेन लिटि परत आदेशादित्वाभावाद् "अत एकहल्मध्ये०" [६।४।१२०] इत्येत्वाभ्यासलोपौ। "अन्येषामपि दृश्यते" [६।३।१३७] इति संहितायां दीर्घत्वम्। प्रतिरन्तु। प्रपूर्वस्तिरतिर्वर्धनार्थः। तथा च यास्को व्याचख्यौ। "देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयन्तु चिरं जीवनाय" [नि० १२।३९] इति ॥ २ ॥

1 In such cases it is usual to use the number of the word to be explained. See Mahīdhara-bhāṣya. Should we read **ऋजुमात्मन इच्छन्ति ऋजूयन्ति** ?

2 **शतृ** is neut. here. Bengali writers generally use **शता**. It is usual to write **शतृप्रत्ययः** in such cases.

3 Hence S. has said above **सखित्वं सख्युः कर्म वा**.

4 This is based on the Kāśikā: **अनैमित्तिके नत्वसत्वे, तदादिर्लिट्यादेशादिर्न भवति।**

**तान्पूर्वया निविदा हूमहे वयं**

**भगं मित्रमदितिं दक्षमस्रिधम्।**

**अर्यमणं वरुणं सोममश्विना**

**सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥**

**तान् । पूर्वया । निऽविदा । हूमहे । वयम् ।**

**भगम् । मित्रम् । अदितिम् । दक्षम् । अस्निधम् ।**

**अर्यमणम् । वरुणम् । सोमम् । अश्विना ।**

**सरस्वती । नः । सुऽभगा । मयः । करत् ॥ ३ ॥**

वेङ्कटमाधवव्याख्यानम् । तान् पूर्वया [ निविदा ] वाचा [ हूमहे ] ह्वयामः वयम् भगादीन् दक्षं च [ अस्निधम् ] अक्षयम् । सरस्वती च [नः] अस्माकं सुभगा [ मयः ] सुखम् [ करत् ] करोतु ॥३॥

काश्यपक्षितीशचन्द्रभाष्यम् । तानिति । **वयं तान् पूर्वया** प्राचीनेन **निविदा** स्तोत्रविशेषेण **हूमहे** आह्वयामः । यैः किल स्तोत्र-रत्नैः प्राचीनतमा ऋषयो देवानाहूय तेषां प्रसादभाजनताम् अवाप्तवन्त-स्तैरेव स्वतः समयतश्च पूततमैर्वाग्विस्तरैर्वयमपि देवानाहूय तेषामनु-ग्रहपात्रतामासादयेमेति हृदयम् । कानित्यपेक्षायामाह—**भगं** सौभाग्य-देवताम्, **मित्रं** सर्वजगन्मित्रभूतमहरभिमानिनं "यातयज्जनम्" देवम्, **अदितिम्** देवमातरं सर्वेभ्यो बन्धनेभ्यो विमोचिकां विपद्भ्यश्च प्रमोचिकां देवीम् **अस्निधम्** अप्रमाद्यन्तं सदैव कल्याणकरं **दक्षम्** देवानां पितरम्

बलाधिष्ठातारं देवम्, **अर्यमणम्** गोधूलिकालस्याधिष्ठातारं देवम्, **वरुणम्** पापानां शासितारं **सोमं** यज्ञस्य सर्वस्वभूतमोषधिपतिम्, **अश्विना** अश्विनौ विपद्भ्य उत्तारकौ देवभिषजौ। एतान् देवान् श्रद्धाभक्तिपरिपूतचेतसो वयमाह्वयामः, ते नः पापेभ्यः प्रमोचयन्तु, सर्वाण्यागांसि कृतानि वा कारितानि वा सङ्कल्पितानि वा क्षाम्यन्तु, अस्माकं सुखं सौभाग्यं चानुदिनमहर्निशमभिवर्धयन्तु। **सुभगा** सौभाग्योपेता **सरस्वती नः** अस्माकं **मयः** सुखम्। "यद्वै शिवं तन्मयः" इति श्रुतेः। **करत्** करोतु विदधातु। लेटयडागमः। या खलु "वाजेभिर्वाजिनीवती" सर्वासां प्रज्ञानां च ईशाना तस्याः प्रसादेनास्माकं वाक् च प्रज्ञा च सहस्रधारं सत्पथनैव प्रवर्तेताम्, सम्पदां च प्रभवौ भवताम्॥ ३॥

स्कन्दस्वामिभाष्यम्। तान् पूर्वसङ्कल्पितया पूर्वप्रयुक्तया वा निविदा। निविदिति वाङ्नाम। वाचा स्तुतिलक्षणया हूमहे आह्वयामः। कतमांस्तान्? भगं मित्रम् अदितिं दक्षं च। कीदृशम्? अस्रिधम्। "न स्रेधति न व्यथते"[1] [ऋ० सं० ५।५४।७] इति प्रयोगदर्शनात् स्रिधिः क्षयार्थः शोषणार्थो वा। अक्षयमशोषयितारं वा। न च भगादीनेव केवलान्। किं तर्हि? अर्यमणं वरुणं सोमम् अश्विना अश्विनौ च। किं च सरस्वती नः अस्माकं सुभगा सुधना मयः करत् सुखं करोतु॥३॥

महीधरभाष्यम्। पूर्वया प्राचीनया अकृत्रिमया स्वयम्भुवा निविदा वाचा वेदरूपया वयं तान् प्रसिद्धान् देवान् हूमहे आह्वयामः।

[1] The full stanza runs thus :

न स जीयते मरुतो न हन्यते न स्रेधति न व्यथते न रिष्यति।
नास्य राय उपदस्यन्ति नोतय ऋषिं वा यं राजानं वा सुषूदथ॥

The root *sridh* is not read in the Dhātupāṭha. It is cognate with English *slide* and means 'to fail, to err, to blunder'. In Gk. *olisthano*: means 'I glide'.

निविच्छब्दो वाग्वाचकः । तान् कान् ? तत्राह—भगं मित्रम् अदिति देवमातरम् दक्षं प्रजापतिम् अर्यमणं वरुणं सोमम् अश्विना अश्विनौ। अस्रिधमिति भगादीनां विशेषणम्[1] । न स्रेधते च्योतते सोऽस्रित् तम्, अच्युतसद्भावम्। किं च शोभन भगं भाग्यं यस्याः सा सुभगा भजनीया सरस्वती भगादिसहिता नः अस्माकं मयः करत् सुखं करोतु ॥३॥

सायणभाष्यम्। तान्विश्वान्देवान्पूर्वया पूर्वकालीनया[2] नित्यया निविदा वेदात्मिकया वाचा। निविदिति वाङ्नाम। यद्वा निविदा "विश्वे देवाः सोमस्य मत्सन्"[शा० श्रौ० सू० ८।२१।१] इत्यादिकया वैश्वदेव्या निविदा वयं हूमहे। आह्वयामः। देवानिति यत्सामान्येनोक्तं तदेव विव्रियते। भगं भजनीयं द्वादशानामादित्यानामन्यतमम्। मित्रं प्रमीतेस्त्रायकम् अहरभिमानिनं देवम्। "मैत्रं वा अहः" [तै० ब्रा० १।७।१०।१] इति श्रुतेः। अदितिमखण्डनीयामदीनां वा देवमातरम्। दक्षं सर्वस्य जगतो निर्माणे समर्थं प्रजापतिम्। यद्वा प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भम्। "प्राणो वै दक्षः" [तै० सं० २।५।२।४] इति श्रुतेः। अस्रिधं शोषणरहितम्। सर्वदैकरूपेण वर्तमानं मरुद्गणम्। अर्यमणम्। अरीन् मन्देहादीनसुरान्यच्छति नियच्छतीत्यर्यमा सूर्यः। "असौ वा आदित्योऽर्यमा" [तै० सं० २।३।४।१] इति श्रुतेः। तम्। वरुणम्। वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति रात्र्यभिमानी देवो वरुणः। श्रूयते च। "वारुणी रात्रिः" [तै० ब्रा० १।७।१०।१] इति। सोमम्। द्वेधात्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चन्द्रात्मना देवतारूपेण वर्तमानम्। अश्विना। अश्ववन्तौ। यद्वा सर्वं व्याप्नुवन्तौ। तथा

1 दक्षस्यैतद्विशेषणम्। उवटः।

2 This is grammatically indefensible but sanctioned by usage.

च यास्कः। "अश्विनौ यद्व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वै-रश्विनावित्यौर्णवाभः। तत्कावश्विनौ ? द्यावापृथिव्यावित्येकेऽहोरात्रा-वित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः" [नि० १२।१] इति। एवम्भूतान् सर्वान्देवानस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र सम्बन्धः। अस्माभिराहूता सुभगा शोभनधनोपेता सरस्वती नोऽस्मभ्यं मयः सुखं करत् करोतु। हूमहे। ह्वेञो लटि "ह्वः" इत्यनुवृत्तौ "बहुलं छन्दसि" [६।१।३४] इति संप्रसारणम्। परपूर्वत्वे "हलः" [६।४।२] इति दीर्घत्वम्। "बहुलं छन्दसि" [२।४।७३] इति शपो लुक्। अस्रिधम्। स्रिधु शोषणे। सम्पदादिलक्षणो भावे क्विप्। बहुव्रीहौ "नञ्सुभ्याम्" [६।२।१७२] इत्युत्तरपदान्तोदात्तत्वम्। मयस्करत्। करोते-र्लेट्यडागमः। "बहुलं छन्दसि" [२।४।७३] इति विकरणस्य लुक्। "अतः कृकमि०" [८।३।४६] इति विसर्जनीयस्य सत्वम् ॥ ३ ॥

**तन्नो वातो मयोभु वातु भेषजं**

**तन्माता पृथिवी तत्पिता द्यौः।**

**तद्ग्रावाणः सोमसुतो मयोभुव-**

**स्तदश्विना शृणुतं धिष्ण्या युवम् ॥ ४ ॥**

तत्। नः। वातः। मयःऽभु। वातु। भेषजम्।

तत् । माता । पृथिवी । तत् । पिता । द्यौः ।

तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः ।

तत् । अश्विना । श्रृणुतं । धिष्ण्या । युवम् ॥ ४ ॥

वेङ्कटमाधवव्याख्यानम् । तत् नः वातः [मयोभु] सुखस्य भावयितृ आत्मीयं भेषजम् वातु । तत् माता पृथिवी तत् पिता द्यौः । तत् ग्रावाणः [सोमसुतः] सोमस्य सोतारः [मयोभुवः] सुखस्य भावयितारः । तत् [अश्विना] अश्विनौ [युवम्] युवामपि [धिष्ण्या] धिषणार्हौ स्तुत्यर्हौ शृणुतम् ॥४॥

काश्यपक्षितीशचन्द्रभाष्यम् । तदिति । **वातः** सर्वत्र निराबाधं प्रवहन् पवनः **तत्** प्रसिद्धं मयोभु सुखकरं **भेषजम्** औषधं **नः वातु** अस्माकं कृत आनयतु । शिम्बातेत्यादिषु विंशतिसंख्याकेषु सुखनामसु मयःशब्दः पठितः । तस्य भावयितृ मयोभु । तथाच मन्त्रवर्णाः—

वात आ वातु भेषजं शम्भु मयोभु नो हृदे ।
प्र ण आयूंषि तारिषत् ॥ [ ऋ० स० १०।१८६।१]
आ वात वाहि भेषजं वि वात वाहि यद्रपः ।
त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ [ऋ० स० १०।१३७।३]
यददो वात ते गृहे अमृतस्य निधिर्हितः ।
ततो नो देहि जीवसे ॥ [ ऋ० स० १०।१८६।३]

इति । वायुमन्तरेण केनापि प्राणितुं न शक्यते, अत एव वायोर्गृहेऽमृतस्य निधिर्हितः, अत एव वायुरस्मभ्यं शिवङ्करं भेषजं प्रयच्छतु । **माता पृथिवी** सकलजगतः प्रसूतिः पोषयित्री च भूतधात्री धरणिरपि मयोभु

भेषजं नः प्रापयतु। पृथिव्यां प्ररूढा ओषधयः सुलभाः सत्यः सर्वान्नो व्याधीन् विनाशयन्तु। **पिता द्यौः** अपि तत् मयोभु भेषजम् वातु। अस्माकं पालयिता पितापि सुखकरं सूर्यरश्म्यादिकं सर्वरोगविद्रावकं नः प्रेरयतु। **सोमसुतः** सोमाभिषवसम्पादका **मयोभुवः** सुखस्य निवर्तकाः **ग्रावाणः** अपि तत् भेषजं नः वातु। सोमरसस्य पानेन सर्वथा निरामयाश्च सुखभाजश्च वयं भवेम। हे **धिष्ण्या अश्विना** धीमन्तावश्विनौ **युवं** युवां **तत् शृणुतम्** अस्माकमेतत् प्रार्थनमाकर्णयतं चानुमन्येथां च। भवन्तौ खलु देवभिषजौ, अतः सर्वं भेषजं भवदायत्तमेव, भवतोरनुमतिमन्तरेण न हि तत् लब्धुं शक्यम् इति।

ऋग्वेदे द्यौः प्राणिजातस्य पितृत्वेन पृथिवी च मातृत्वेन श्रूयते। तथाच मन्त्रवर्णाः—"द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम्" [ऋ० स० १।१६४।३३], [हे सर्पाः] "द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा" [ऋ० स० १।१९१।६] इत्यादयः।

तैत्तिरीयब्राह्मणेऽयं मन्त्रः परिवर्त्तिताकार उपलभ्यते—

तन्मेऽनुमतिरनुमन्यतां तन्माता पृथिवी तत् पिता द्यौः।

तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं सौभगा युवम्॥

[तै० ब्रा० २।७।१६।३-४] इति॥ ४॥

स्कन्दस्वामिभाष्यम्। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यद् वयमिच्छामः तत् नः अस्मान् प्रति वातः मयोभु[1] वातु भेषजम् औषधम् वातु गमयतु। ददात्वित्यर्थः। तदेव माता पृथिवी। तदेव पिता द्यौः। विवाहकाले "द्यौरहं पृथिवी त्वम्"[2] [अथर्वसंहिता १४।२।७१] इति वरे वध्वां च द्युत्वपृथिवीत्वा-

1 मयोभु सुखस्य भावयितृ। आगामिन्यपि काले सुखकरमित्यर्थः। हरदत्तः।

2 अमोऽहमस्मि सा त्वं सामाहमस्म्यृक् त्वं द्यौरहं पृथिवी त्वम्।
तविह सम्भवाव प्रजामा जनयावहै॥१४।२।७१

ध्यारोपात् सर्वमनुष्याणां च वधूवरमातापितृकत्वात् तद्धर्मेण मातृत्वेन पितृत्वेन च व्यपदेशः पृथिव्या दिवश्चायं—तन्माता पृथिवी तत् पिता द्यौरिति। तदेव ग्रावाणः सोमसुतः सोमाभिषवकारिणः। मयोभुवः यागद्वारेण सुखस्य भावयितारः। तदेव हे अश्विनौ श्रृणुतम्। श्रवणेनात्र तत्पूर्वकं करणं लक्ष्यते—कुरुतम्। हे धिष्ण्यौ धिषणा वाक् तस्याः पुत्रौ। अथवा धीरिति प्रज्ञानाम। ष्णै वेष्टने[1]। धीर्वेष्टयित्री सर्वार्थग्रहणसमर्था ययोः तौ धिष्णौ। धिष्णावेव धिष्ण्यौ। अत्यन्तप्रज्ञावित्यर्थः। युवं युवामपि ॥४॥

महीधरभाष्यम्। वातः पवनः नः अस्माकं भेषजम् औषधं हितं यथा तथा[2] वातु। वा गतिगन्धनयोः। लोट्। प्रवातु। अनुगृह्णात्वित्यर्थः। ददात्विति यावत्। कीदृशं हितम्? मयोभु मयः सुखं भवति यस्मात् तत् मयोभु सुखोत्पादकं हितं ददातु। माता जगन्निर्मात्री पृथिवा तत् हितं वातु। पिता पालकः द्यौः स्वर्गः तत् हितं वातु। सोमं सुन्वन्ति [3] सोमसुतः सोमाभिषवकारिणो ग्रावाणः दृषदः तद् भेषजं वान्तु ददतु। कीदृशा ग्रावाणः? मयोभुवः मयः सुखं भावयन्ति ते मयोभुवः सुखस्य दातारः। हे अश्विना अश्विनौ। युवं युवां तत् वातादिभ्यो भेषजप्रार्थनं श्रृणुतम्। युवामपि हितं दत्तमित्यर्थः। कीदृशौ युवाम्? धिष्ण्या धिष्ण्यौ गृहवद्धारयितारौ[4] ॥ ४ ॥

[1] Skandasvāmin's Bhāṣya of the Madras University reads ष्णौ वेष्टने and Haradatta's Vyākhyā of the Trivandrum University reads षण वेष्टने. Both readings are vicious.

[2] Should we omit यथा तथा?

[3] Acc. to the Kās'ikā सोमे सुञः makes provision for क्विप् to denote past time alone.

[4] 'धिष्ण्या धारयितारौ युवं युवामपि श्रृणुतम्। श्रुत्वा चानुगृह्णीतम्'। उवटः।

सायणभाष्यम्। वातो वायुस्तद्भेषजमौषधं नोऽस्मान्वातु प्रापयतु। यद्भेषजं मयोभु मयसः सुखस्य भावयितृ। माता सर्वेषां जननी पृथिवी भूमिरपि तद्भेषजमस्मान्प्रापयतु। पिता वृष्टिप्रदानेन सर्वेषां रक्षिता द्यौर्द्युलोकोऽपि तद्भेषजमस्मान्प्रापयतु। सोमसुतः सोमाभिषवं कृतवन्तो मयोभुवो मयसो यागफलभूतस्य सुखस्य भावयितारो ग्रावाणोऽभिषवसाधनाः[1] पाषाणाश्च तद्भेषजमस्मान् प्रापयन्तु। हे धिष्ण्या धिषणा बुद्धिः। तदर्हावश्विनौ युवं युवां तद्भेषजं शृणुतम्। आकर्णयतम्। यद्भेषजमस्माभिर्वाय्वादिषु[2] प्रार्थ्यते तद्भेषजं देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः। मयोभु। "ह्रस्वो नपुंसके प्रातिपदिकस्य" [१।२।४७] इति ह्रस्वत्वम्। वातु। वा गतिगन्धनयोः। अन्तर्भावितण्यर्थात्प्रार्थनायां लोट्। सोमसुतः। "सोमे सुञः" [३।२।९०] इति भूते क्विप्। धिष्ण्या। धिषणाशब्दादर्हार्थे "छन्दसि च" [५।१।६७] इति यः। वर्णलोपश्छान्दसः। "सुपां सुलुक्०" [७।१।३९] इत्याकारः ॥ ४ ॥

[1] In classical Sanskrit we generally find साधनम् formed with ल्युट् acc. to कृत्यल्युटो बहुलम् iii. 3. 113 and used exclusively in the neut. Thus Kālidāsa says :

इतिवादिन एवास्य होतुराहुतिसाधनम्।
अनिन्द्या नन्दिनी नाम धेनुराववृते वनात् ॥ रघु० १।८२.

Sometimes the form साधनी is met with, as in या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी, क्षणसम्पदियं सुदुर्लभा प्रतिलब्धा पुरुषार्थसाधनी etc. In the Vedas, however, साधन occurs in the masc. and naturally S. derives it with ल्यु ( साध संसिद्धौ। नन्द्यादित्वात् कर्तरि ल्युः under RV. iii. 27.8). Similarly in the S'ankara-bhāṣya on *Chāndogyopaniṣad* v.3.3 we find आहुतिसाधनाश्चापः.

[2] आधारविवक्षायां सप्तमी।

तमीशानं जगतस्तस्थुषस्पतिं

धियंजिन्वमवसे हूमहे वयम् ।

पूषा नो यथा वेदसामसद्वृधे

रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥

तम् । ईशानम् । जगतः । तस्थुषः । पतिम् ।

धियम्ऽजिन्वम् । अवसे । हूमहे । वयम् ।

पूषा । नः । यथा । वेदसाम् । असत् । वृधे ।

रक्षिता । पायुः । अदब्धः । स्वस्तये ॥ ५ ॥

वेङ्कटमाधवव्याख्यानम् । तम् [ईशानम्] ईश्वरम् [जगतः] जङ्गमस्य [तस्थुषः] स्थावरस्य च [पतिम्] पालयितारम् [धियंजिन्वम्] कर्मणः प्रीणयितारम् [अवसे] रक्षणाय [हूमहे] ह्वयामः वयम् । पूषा [नः] अस्माकम् [वेदसाम्] धनानाम् [असत्] भवति[1] यथा [वृधे] वर्धनाय । रक्षोभ्यो रक्षिता [पायुः] पालकः [अदब्धः] अहिंसितः [स्वस्तये] अविनाशाय ॥५॥

[1] Should we read भवेत् ?

काश्यपक्षितीशचन्द्रभाष्यम्। इदानीं निखिलजगत्परिपोषकः पूषा स्तूयते—तमिति। **जगतः** जङ्गमस्य आमनुष्य-कीटपिपीलक-पर्यन्तस्य **ईशानम्** राजन्तम् **तस्थुषः** स्थावरस्य आपर्वतपादप-मृत्कणपर्यन्तस्य **पतिम्** प्रभुं कर्तुमकर्तुमन्यथा कर्तुं च समर्थम्। तथाच मन्त्रवर्णः—"सूर्य आत्मा जगतस्तस्थुषश्च" [ऋ० स० १।११५।१] इति, "इन्द्रो यातोऽवसितस्य राजा" [ऋ० स० १।३२।१५] इति च। **धियंजिन्वम्** धियं ध्यानं जिन्वति प्रेरयति समुत्तजयतीति धियंजिन्वम्। ध्यानस्य समुत्तेजकं स्तोत्राणां समुत्सारकमिति यावत्। पूषा खलु नैशस्य तमसो निवारणेन बुद्धि-प्रसादं संजनय्य रश्मिनिवहैरखिलं जगदुद्भासयन् जनानां वदनार-विन्दतः स्तोत्ररेणून् समुत्सारयति। तम् पूषणं **वयम् अवसे** रक्षणाय **हूमहे** आह्वयामः। उत्तरार्धेन रक्षणप्रकारं प्रपञ्चयति—पूषेति। **यथा** येनाह्वानेन **पूषा** पोषणाभिमानी देवः। "पुष्यन् क्षितिं पोषयति प्रणुदन् रश्मिभिस्तमः। तेनैनमस्तौत् पूषेति" इति बृहद्देवतायाम् [२।६३]; "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति" इति निरुक्तम् [१२।१७]। अथ यत् यदा रश्मिपोषम् आपूर्णस्तेजसा रश्मीन् सूर्यः पुष्यति बिभर्ति तत् तदैव पूषा भवतीति तद्व्याख्यानम्। **नः** अस्माकं **वेदसाम्** धनानां **वृधे** वर्धनाय **असत्** भवतु। पूष्णः प्रसादेनानुदिनमस्माकं सम्पदः समेधन्ताम्। स च पूषा **रक्षिता** दैवीभ्यो मानुषीभ्यश्च विपद्भ्योऽस्माकं त्राता **अदब्धः** अहिंसितः **पायुः** पशुपुत्रादीनां पालकः **स्वस्तये** शोभनावस्थानाय भवतु। तस्य च सान्द्रयानुकम्पया सदैवास्माकं पशुपुत्रादीनाञ्च रक्षणं भवतु, अस्माकं च सर्वाङ्गीणं कुशलं भवतु।

(ईशानं) जगतः। गतिकर्मणो जौहोत्यादिकगाधातोः शतरि ङीपि रूपम्। "अधीगर्थदयेशां कर्मणि" [२।३।५२] इति कर्मणि

षष्ठी। तथाच मन्त्रान्तरम्—(पूषणम्) "ईशानं राय ईमहे" [ऋ० सं० ६।५४।८] इति। धियंजिन्वम्। जिविः प्रेरणार्थः। तस्मात् खच्। विश्वमिन्वादयोऽप्येवम् ॥ ५ ॥

स्कन्दस्वामिभाष्यम्। तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यमन्येऽपि सर्वं आह्वयन्ति तं पूषणम् ईशानं जगत ईश्वरं जङ्गमस्य,तस्थुषः पतिं स्थावरस्य च स्वामिनम्। धियंजिन्वम्। जिन्वतिः प्रीतिकर्मा। सर्वप्रज्ञानां प्रीणयितारम्। अवसे पालनायात्मनः हूमहे आह्वयामः वयम्। कथं च पुनराह्वयामः ? उच्यते। आहूतः पूषा नः अस्माकं यथा वेदसां धनानां ज्ञानानां वा असत् भवेत्। वृधे वर्धनाय। यथा नो धनवृद्धिकरो ज्ञानवृद्धिकरो वा स्यादित्यर्थः। रक्षिता पायुः पाता च सोमानाम्। अदब्धः अहिंसितः केनचित्। स्वस्तये। स्वस्तीत्यविनाशनाम। अविनाशकरश्च स्यादित्यर्थः ॥५॥

महीधरभाष्यम्। वयं तं प्रसिद्धम् ईशानं रुद्रं हूमहे आह्वयामः। कीदृशं तम् ? जगतः जङ्गमस्य तस्थुषः स्थावरस्य च भूतजातस्य पतिम् पालकम्। धियंजिन्वं धियं बुद्धिं जिन्वति प्रीणातीति धियंजिन्वः तम्। अलुक्। बद्धिसन्तोषकारकम्। जिन्वतिः प्रीणनार्थः। किमर्थं हूमहे ? अवसे अवितुं तर्पयितुम्। तुमर्थे असेप्रत्ययः। यथा यन प्रकारेण पूषा नः अस्माकं वृधे वृद्धैय स्वस्तये कल्याणाय च असत् भवतु तथा हूमहे इत्यर्थः। कीदृशः पूषा ? वेदसां धनानां ज्ञानानां वा रक्षिता रक्षकः। पायुः पालकः पुत्रादीनाम्। अदब्धः अनुपहिंसितः ॥ ५ ॥

सायणभाष्यम्। पूर्वार्धेनेन्द्रः स्तूयते, अपरार्धेन पूषा। ईशानमैश्वर्यवन्तम्। अत एव जगतो जङ्गमस्य प्राणिजातस्य तस्थुषः स्थावरस्य च पतिं स्वामिनं धियंजिन्वं धीभिः कर्मभिः प्रीणयितव्यम्। एवंभूत तमिन्द्रमवसे रक्षणाय वयं हूमहे। आह्वयामः। पूषा नोऽस्माकं

वेदसां धनानां वृधे वर्धनाय रक्षिता यथासत्। येन प्रकारेण भवति। तेनैव प्रकारेणादब्धः केनाप्यहिंसितः पूषा स्वस्तयेऽस्माकमविनाशाय पायुः रक्षिता भवतु। तस्थुषः। तिष्ठतेर्लिटः क्वसुः। षष्ठ्येकवचने "वसोः संप्रसारणम्" [६।४।१३१] इति संप्रसारणम्। "शासिवसिघसीनां च"[1] [८।३।६०] इति षत्वम्। "षष्ठ्याः पतिपुत्र०" [८।३।५३] इति विसर्जनीयस्य सत्वम्। धियंजिन्वम्। जिविः प्रीणनार्थः। "कृत्यल्युटो बहुलम्" [३।३।११३] इति बहुलवचनात्खच्। "इच एकाचोऽम् प्रत्ययवच्च" [६।३।६८] इत्यमागमः। असत्। अस भुवि। लेटग्रडागमः। "बहुलं छन्दसि" [२।४।७३] इति शपो लुगभावः। पायुः। पा रक्षणे "कृवापाजि०" [उ० १।१] इत्युण्। स्वस्तये। सुपूर्वादस्तेर्भावे क्तिन्। "छन्दस्युभयथा" [३।४।११७] इति तस्य सार्वधातुकत्वाद् "अस्तेर्भूः" [२।४।५२] इति भूभावाभाव इति वृत्तावुक्तम्[2] ॥ ५ ॥

[1] The rule for the mutation of the dental sibilant into the cerebral is आदेशप्रत्यययोः viii. 3. 51. Sāyaṇa, however, often quotes शासिवसिघसीनां च in this connexion. The preceding शासि and the following घसि are enough to show that वसि here does not refer to the suffix *kvasu* but to the root *vas*. Further the suffix is always referred to as *vasu* and not *vasi*. But the most important point in this connexion is that in the case of *kvasu* which is a pratyaya the षत्व is already provided for by the rule आदेशप्रत्यययोः, and so no useful purpose would be served by the inclusion of वसि in शासिवसिघसीनां च.

There appears to be some misconception regarding the meaning of the Vārttika इक्श्तिपौ धातुनिर्देशे. Here इक् is evidently the pratyāhāra denoting i, u, ṛ, ḷ—short or long.

[2] The reference is to Kāśikā iii. 4. 117 where we find : स्वस्तये नावमिवारुहेम। क्तिनः [क्तिचः ?] सार्वधातुकत्वादस्ते र्भूभावो न भवति। Cf. Nir. iii.21: अस्तिरभिपूजितः। सु अस्तीति।

परिष्कारः। पूर्वार्धेनेन्द्रः स्तूयतेऽपरार्धेन पूषेति। "इन्द्रो यातोऽवसितस्य राजा" इत्यादिश्रुतेः पूर्वार्धस्येन्द्रदेवताकत्वं भाष्यकारस्याभिमतम्। परं पूष्णोऽपीशानत्वश्रवणात्,

अजाश्वः पशुपा वाजपस्त्यो धियंजिन्वो भुवने विश्वे अर्पितः।
अष्ट्रां पूषा शिथिरामुद्वरीवृजत् सञ्चक्षाणो भुवना देव ईयते ॥

[ ऋ० सं० ६।५८।२ ] इति पूषदेवताकेऽपि मन्त्रे धियंजिन्वविशेषणसन्दर्शनाच्चास्यापि पूषदेवताकत्वमवसीयते ॥ "कृत्यल्युटो बहुलम्" इति सूत्रतः बहुलमिति पदमुत्तरसूत्रेष्वनुवर्तते। तेन सर्वेऽपि कृत्प्रत्यया बाहुल्येन भवन्ति, येषु धातुषु विहितास्ततोऽन्यत्रापि भवन्ति। "नासिकास्तनयोर्ध्माधेटोः" [ ३।२।२९] इति वर्तते। धीविश्वयोर्जिन्वेर्न्वोरपि भवति ॥ ५ ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः
स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः
स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥

स्वस्ति। नः। इन्द्रः। वृद्धऽश्रवाः।

स्वस्ति । नः । पूषा । विश्वऽवेदाः ।

स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः ।

स्वस्ति । नः । बृहस्पतिः । दधातु ॥ ६ ॥

वेङ्कटमाधवव्याख्यानम् । स्वस्ति [ नः ] अस्माकम् इन्द्रः [ वृद्धश्रवाः ] वृद्धान्नः । स्वस्ति नः पूषा [ विश्ववेदाः ] विश्वधनः । स्वस्ति नः तार्क्ष्यः च [ अरिष्टनेमिः ] अहिंसितायुधः । स्वस्ति [ नः ] अस्माकं बृहस्पतिः च दधातु ॥६॥

काश्यपक्षितीशचन्द्रभाष्यम् । स्वस्ति न इति । **वृद्धश्रवाः** विपुलयशाः **इन्द्रः** बलाभिमानी देवः **नः स्वस्ति** कल्याणं **दधातु** प्रसादीकरोतु । पुष्कलकीर्तेरिन्द्रस्य प्रसादेन वयं यशस्विनः परैरनभिभवनीयाश्च भवेमेति हृदयम् । तथाच मन्त्रान्तरम् [ ऋ० सं० ६।४७।११ ]—

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं देवमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥

इति । **विश्ववेदाः** सर्वधनः **पूषा** पोषको देवः नः स्वस्ति दधातु । पूष्णः प्रसादेन वयं पशुपुत्रभूमिहिरण्यरूपां सम्पदमधिगच्छेमेति भावः । **अरिष्टनेमिः** अरिष्टा अहिंसिता नेमिः चक्रधारा यस्य तादृशः **तार्क्ष्यः** दिव्यः अश्वः नः स्वस्ति दधातु । तार्क्ष्यस्य प्रसादेन गमनागमनकाले यानवाहनादीनां विपत्तिर्मा भूदित्यर्थः । तथाच मन्त्रवर्णः [ ऋ० १०।१७८।१ ]-

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥

इति । **बृहस्पतिः** वागधिष्ठात्री देवता नः स्वस्ति दधातु । बृहस्पतेः प्रसादेन वयं वैदुष्यं लभमहि, आर्त्विजीनाश्च स्यामेति भावः । वेदेषु स्वस्तिशब्दः स्त्रियां नपुंसके च वर्तते । अत्र नपुंसकलिङ्गस्य प्रयोगः । विशेषणानां साभिप्रायत्वात् परिकरोऽलङ्कारः । तल्लक्षणमुदाहरणञ्च कुवलयानन्दे—अलङ्कारः परिकरः साभिप्रायविशेषणे । सुधांशुकलितोत्तंसस्तापं हरतु वः शिवः ॥ इति । मन्त्रेऽस्मिन् विराट्स्थाना छन्दः । तल्लक्षणं च ऋक्प्रातिशाख्ये [१६।४४]—

नवको दशको वा स्यादेकोऽनेकोऽपि त्रिष्टुभः ।
एकादशाक्षरश्चापि विराट्स्थाना ह नाम सा ॥ इति ।

व्याख्यातं चोवटेन—"त्रिष्टुभः पाद एकोऽप्यनेकोऽपि नवको वा दशको वा स्यात्, एकादशाक्षरश्चैकोऽप्यनेको वा स्यात्, सा विराट्स्थाना नाम वेदितव्या" इति । प्रकृते मन्त्रे प्रथमद्वितीयौ पादौ नवाक्षरौ, तृतीयो दशाक्षरश्चतुर्थः स्वस्तिगतस्य वकारस्य विश्लेषणेनैकादशाक्षर इति लक्षणसमन्वयः ।

अन्यत्रापि श्रूयते [ऋ० सं० ५।५१।११-१५]—

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥
स्वस्तये वायुमुप ब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।
बृहस्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥
विश्वे देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।
देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥

स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।
स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि ॥

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव ।
पुनर्ददताघ्नता जानता सं गमेमहि ॥ इति ॥ ६ ॥

स्कन्दस्वामिभाष्यम् । दधात्वित्यन्तमाख्यातपदं सर्वत्रैवानुषक्तव्यम् । स्वस्ति नः इन्द्रः दधातु विधत्ताम् । करोत्वित्यर्थः । कीदृशः ? वृद्धश्रवाः प्रवृद्धकीर्त्तिः प्रवृद्धधनः प्रवृद्धान्नो वा । स्वस्ति नः पूषा विश्ववेदाः सर्वज्ञः सर्वधनो वा । स्वस्ति नः तार्क्ष्यः अरिष्टनेमिः । नेमिरिति वज्रनाम । अहिंसितायुधः । स्वस्ति नः बृहस्पतिः दधातु ॥६॥

महीधरभाष्यम् । विराट्स्थाना । आद्यौ पादौ नववर्णौ तृतीयो दशकः, तुर्यो व्यूहेनैकादशकः । "नवकौ वैराजस्त्रैष्टुभश्च" [अनु० ९।५] इति वचनात् । इन्द्रः नः अस्मभ्यं स्वस्ति अविनाशं शुभं दधातु ददातु । कीदृशः ? वृद्धश्रवाः वृद्धं महत् श्रवः कीर्त्तिः यस्य सः । पूषा नः स्वस्ति ददातु । कीदृशः ? विश्ववेदाः विश्वं सर्वं वेदो धनं यस्य, विश्वं वेत्तीति वा विश्ववेदाः । तार्क्ष्यो रथो गरुड़ो वा नः स्वस्ति दधातु[1] । कीदृशः ? अरिष्टनेमिः अरिष्टा अनुपहिंसिता नेमिश्चक्रधारा पक्षो वा यस्य सः । बृहस्पतिर्देवगुरुः नः अस्मभ्यं स्वस्ति ददातु ॥ ६ ॥

उवटभाष्यम् । स्वस्ति स्वस्त्ययनम् ।..दधातु स्थापयतु ।. वृद्धश्रवाः प्रभूतधनः महाशब्दो महाकीर्तिर्वा ।..अरिष्टनेमिः अनुपहिंसितासुः[2] ॥ ६ ॥

सायणभाष्यम् । वृद्धश्रवाः । वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृश इन्द्रो नोऽस्माकम् । स्वस्तीत्यविनाशनाम

[1] Should we read **ददातु** ?

[2] Should we read **अनुपहिंसितायुधः** or does Uvaṭa give merely the *tātparya* ?

[निरु० ३।२१]। स्वस्त्यविनाशं दधातु। विदधातु करोतु। विश्ववेदाः। विश्वानि वेत्तीति विश्ववेदाः[1]। यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य। तादृशः पूषा पोषको देवो नोऽस्माकं स्वस्ति विदधातु। अरिष्टनेमिः। नेमिरित्यायुधनाम। अरिष्टोऽहिंसितो नेमिर्यस्य। यद्वा। रथचक्रस्य धारा नेमिः। यत्सम्बन्धिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः। एवंभूतस्तार्क्ष्यः। तृक्षस्य पुत्रो गरुत्मान् नोऽस्माकं स्वस्त्यविनाशं विदधातु। तथा बृहस्पतिर्बृहतां देवानां पालयिता नोऽस्माकं स्वस्त्यविनाशं विदधातु॥

[1] The first explanation presents difficulties regarding the accent. Since the word is not a Bahuvrīhi compd., *bahuvrīhau vis'vam saṃjñāyām* does not apply and the word will be paroxytone acc. to *gatikārakopapadāt kṛt* vi. 2. 139. In the words of S. there will be *kṛduttarapadaprakṛtisvaratvam*. *Vis'vavid* is an upapada compd. and is always accented on the final member acc. to this rule. Of course, *vyatyaya* is always ready to oblige us, but we should have recourse to *vyatyaya* only when there is no other course open to us. Under AV. i. 32. 4 दिवे च विश्ववेदसे पृथिव्यै चाकरं नमः the printed commentary reads : दिवे उक्तलक्षणाय द्युलोकाय विश्ववेदसे। वेद इति धननाम। विश्वस्य जगतो धनभूताय। वृष्टिप्रदानेन सर्वधनहेतुत्वाद् धनात्मकत्वम्। यद्वा वेद इति ज्ञाननाम। विश्वं विश्वविषयं ज्ञानं यस्याः सा तथोक्ता तस्यै। Here also the first explanation is to be rejected, for in that case the compound will be accented on the final syllable. Again since all the other three epithets are Bahuvrīhis, there is no reason why we should commit *prakramabhaṅga* by taking *vis'vedas* as an upapada compd. It is just possible that विश्वानि वेत्तीति विश्ववेदाः, यद्वा is an ignorant reader's note, for S. takes no note of this explanation while showing the grammatical formation of the compd.

वृद्धश्रवाः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। विश्ववेदाः। विद ज्ञाने। विद्लृ लाभे। आभ्यामसुन्प्रत्ययान्तो वेदस्शब्दः। "बहुव्रीहौ विश्वं संज्ञायाम्" [६।२।१०६] इति पूर्वपदान्तोदात्तत्वम्। तार्क्ष्यः। तृक्षस्यापत्यम्। "गर्गादिभ्यो यञ्" [४।१।१०५]। ञित्त्वा-दाद्युदात्तत्वम्। अरिष्टनेमिः। न रिष्टाऽरिष्टा[1]। अव्ययपूर्वपद-प्रकृतिस्वरत्वम्। अरिष्टा नेमिर्यस्य स तथोक्तः। बृहस्पतिः। "तद्बृहतोः करपत्योः०" [६।१।१५७ गणसूत्र] इति सुट्तलोपौ। "उभे वनस्पत्यादिषु०" [६।२।१४०] इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वर-त्वम्॥६॥

सायणभाष्यम् (तैत्तिरीयारण्यकगतम्)। वृद्धैर्महात्मभिः सदा पुराणेषु श्रूयत इति वृद्धश्रवाः। तादृश इन्द्रः नः अस्माकम् स्वस्ति दधातु अध्ययनश्रवणानुष्ठानार्थं क्षेमं सम्पादयतु। विश्वं वेत्ति जानातीति विश्ववेदाः। तादृशः पूषा अपि नः स्वस्ति दधातु। अरिष्टम्

1 In all the printed editions we find : **अरिष्टोऽहिंसितो नेमिर्यस्य। * * * न रिष्टा अरिष्टा। अरिष्टा नेमिर्यस्य सः।** Even if **नेमिः** had been both neut. and fem., this would have appeared strange, but since the word is exclusively fem. in this sense the first sentence is manifestly incorrect. The correct reading is, of course : **अरिष्टाहिंसिता नेमिर्यस्य सः**

The word **स्वस्ति** is both fem. and neut. So we have **स्वस्तये** in st. 5 and **स्वस्ति** ( neut. Acc. sing. ) in this st.

Yāska while explaining **अतूर्तो राजा श्रवमिच्छमानः** (RV. i.126.1) says : **प्रशंसाम् इच्छमानः। यज्ञसंयोगाद्राजा स्तुतिं लभते।** ( Nir. IX. 10). Again he says : **श्रवः श्रवणीयं यशः** ( Nir. XI. 10 ). In the Nighaṇṭu both **श्रवः** and **यशः** are given under **धननामानि**. As **श्रवः** corresponds exactly to Gk. *kle(w)os* fame, we have taken it in that sense here.

अहिंसा तस्य नेमिस्थानीयः[1] । यथा लोहमयी नेमिः काष्ठमयस्य चक्रस्य भङ्गाभावाय पालयति एवमयं तार्क्ष्यः गरुडोऽपि सर्पादिकृतां हिंसां निवार्य तत्पालकत्वादरिष्टनेमिः । तादृशः तार्क्ष्यः नः स्वस्ति दधातु । बृहस्पतिश्च ब्रह्मचर्यं परिपाल्य नः स्वस्ति दधातु ॥६॥

[1] The accent shows that this is a Bahuvrīhi.

पृषदश्वा मरुतः पृश्निमातरः

शुभंयावानो विदथेषु जग्मयः ।

अग्निजिह्वा मनवः सूरचक्षसो

विश्वे नो देवा अवसागमन्निह* ॥ ७ ॥

पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः ।

---

* गमन् is the root aorist subjunctive of गम् . In the tenth maṇḍala we find—

विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।

विश्वे नो देवा अवसा गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥

where occurs गमन्तु which is regarded as a blend of गच्छन्तु and गमन् "since the thematic aorist *agamat* is rare and dubious in the Saṃhitās".

शुभम्ऽयावानः । विदथेषु । जग्मयः ।

अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः ।

विश्वे । नः । देवाः । अवसा । आ । गमन् । इह ॥ ७ ॥

वेङ्कटमाधवव्याख्यानम् । [पृषदश्वाः] पृषद्वर्णाश्वाः मरुतः [पृश्निमातरः] गोमातरः[1] [शुभंयावानः] उदकं प्रति गन्तारः [विदथेषु] यज्ञेषु [जग्मयः] गमनशीलाः [अग्निजिह्वाः] अग्न्यास्याः [मनवः] मन्तारः [सूरचक्षसः] सुवीर्यदर्शनाः विश्वे [नः] अस्मान् देवाः [अवसा] रक्षणेन सह [आगमन्] आगच्छन्तु इह ।।७]।

काश्यपक्षितीशचन्द्रभाष्यम् । यागस्थाने देवानां समागमनं प्रार्थयते—पृषदश्वा इति । पृषत्यः श्वेतबिन्द्वङ्किता मृग्यः अश्वाः वाहा येषां ते **पृषदश्वाः** । यदा मरुतो वहन्ति तदा बिन्दुशो वारिपतनं सञ्जायते, अत एव "पृषत्योऽश्वास्तु मरुताम्" इत्युच्यते । पृश्निः विचित्रबिन्द्वङ्किता गौः माता येषां ते पृश्निमातरः । "ऋतश्छन्दसि" [५।४।१५८] इति समासान्तप्रतिषेधः । यदान्तरिक्षं मेघनिचितं विचित्रवर्णं भवति तदैव मरुतः प्रवर्तन्ते, अत ईदृशे मेघे तेषां मातृत्व-मुपचर्यते, अतस्ते गोमातर इति पृश्निमातर इति च व्यपदिश्यन्ते । **शुभंयावानः** समुज्ज्वलशोभं यथा स्यात् तथा गन्तारः, तथा च तैत्तिरीयब्राह्मणेऽश्विनावधिकृत्य श्रूयते—शुभं गमिष्ठौ सुगमेभिरश्वैः

[1] Both गोमातरः and पृश्निमातरः occur in RV. i. 85, but गोमातरः would be incorrect in the classical language, the correct form being गोमातृकाः.

[३।१२।१०] इति। **विदथेषु** यज्ञेषु **जग्मयः** गमनशीलाः। तथा, **अग्निजिह्वाः** अग्निर्जिह्वा येषां ते। देवा ह्यग्निनैव हविरादिकं लिहन्ति, अत एव अग्निस्तेषां जिह्वेत्युपचारः। **सूरचक्षसः** सूरः सूर्यः चक्षः चक्षुः येषां ते। अत एव सूर्यमुद्दिश्य श्रूयते "नमो मित्रस्य वरुणस्य चक्षसे" [ऋ० सं० १०।३७।१] इति, "चक्षुर्मित्रस्य वरुणस्याग्नेः" [ऋ० सं० १।११५।१] इति, "सूर्यो यथा सर्वलोकस्य चक्षुः" [कठोपनिषद् २।२।११] इति च। **मनवः** मनोः समुत्पन्नाः। आदौ मानुषाः अनन्तरं पुण्यप्रभावेण देवत्वमनुप्राप्ता ऋभुप्रभृतयः। यथा—"दिवि रुद्रासो अधि चक्रिरे सदः" [ऋ० सं० १।८५।२] इत्यत्र रुद्रशब्देन रुद्रपुत्रा मरुतो लक्ष्यन्ते, यथा वा "ओजायमानं यो अहिं जघान दानुं शयानं स जनास इन्द्रः" [ऋ० सं० २।१२।१०] इत्यत्र दानुशब्देन मातृवाचिना दानुतनयो वृत्रो लक्ष्यते, तथात्रापि मनुशब्देन मनुतनया लक्ष्यन्ते। एवं मरुद्भिश्च मनुजैश्चोपलक्षिता **विश्वे देवाः** सर्वे देवगणाः **नः** अस्माकम् **अवसा** रक्षणेन रक्षणसाधनायेत्यर्थः **इह** अत्र यज्ञभूमौ **आगमन्** आगच्छन्तु। अस्माभिराहूता यागभूमिमागम्यास्मान् परिरक्षन्तु। "तद्देवानामवो अद्या वृणीमहे" इत्यर्थः ॥ ७ ॥

स्कन्दस्वामिभाष्यम्। पृषत्योऽश्वा येषां ते पृषदश्वाः। मरुतः। पृश्निमातरः। पृश्निः द्यौः। सा माता येषां ते पृश्निमातरः। शुभंयावानः। शुभमित्युदकम्। तदर्थं मेघान् प्रति गन्तारः। विदथेषु यज्ञेषु जग्मयः गमनशीलाः। न च केवला मरुतः। किं तर्हि ? अग्निजिह्वाः। वक्ष्यमाणानां विश्वेषां देवानामेतद् विशेषणं न मरुताम्। कुत एतत् ? "ये अग्निजिह्वा उत वा यजत्राः" [ऋ० सं० ६।५२।१३] इति प्रयोगदर्शनात्। अग्निर्जिह्वास्थानीयो येषां ते अग्निजिह्वाः। अग्नौ प्रक्षिप्तं हविर्देवा अश्नन्ति। तेनैषामग्नि-

र्जिह्वास्थानीयः। मनवः मन्तारः ज्ञातारः। सूरचक्षसः सूर्यस्येव चक्षो दर्शनं येषां ते सूरचक्षसः। एवंरूपाः विश्वे देवाः नः अवसा अस्माकं पालनेन हेतुना। वयं पालयितव्या इत्येवमर्थमित्यर्थः। आगमन् आगच्छन्तु इह यज्ञे। पृषदश्वादिगुणा मरुतः अग्निजिह्वादिगुणाश्च विश्वे देवा अस्मत्पालनार्थमिह यज्ञे आगच्छन्त्विवति समस्तार्थः॥ ७॥

महीधरभाष्यम्। जगती। मरुतो देवाः अवसा अन्नेन[1] हविर्लक्षणेन हेतुना इह यज्ञ आगमन् आगच्छन्तु। कीदृशा मरुतः? पृषदश्वाः पृषतीसंज्ञा अश्वा वड़वा वाहनं येषां ते पृषदश्वाः। पुंवद्भावः। "पृषत्यो मरुताम्" इति निघण्टुवचनात् [निघ० १।१५]। यद्वा पृषन्तः शबला अश्वा येषां ते। पृश्निर्द्यौर्गौर्दितिर्वा माता जननी येषां ते पृश्निमातरः। शुभं कल्याणं यान्ति प्राप्नुवन्ति प्रापयन्ति वा शुभंयावानः[2]। "आतो मनिन्०" [३।२।७४] इति वनिप्प्रत्ययः। विदथषु यज्ञगृहेषु जग्मयः गमनशीलाः। "आदृगमहन०" [३।२।१७१] इति किः। अग्निजिह्वा अग्निर्जिह्वा भोजनसाधनं येषां ते। "अग्निमुखा वै देवाः"[3] [ताण्ड्य० २५।१४।४] इति श्रुतेः। हुताद इत्यर्थः। मन्यन्ते जानन्तीति[4] मनवः सर्वज्ञाः[5]। सूरः सूर्यश्चक्षश्चक्षुर्येषां ते, सूर्यं चक्षते पश्यन्तीति[4] वा सूरचक्षसः। किञ्च न केवलं मरुतः विश्वे सर्वे देवाः च नः अस्माकं यज्ञ आगमन् आगच्छन्तु॥ ७॥

1 अवसा अन्नेन हविर्लक्षणेनाहूताः सन्तः। उवटः।

2 शुभं कर्तुं जनान् प्रति ये यान्ति। उवटः।

3 The Tāṇḍya Mahā-Brāhmaṇa reads देवताः for देवाः. The S'atapatha Brāhmaṇa has अग्निमुखा उ वै सर्वे देवाः xiii. 7.i.3.

4 The N. S. Press edition omits इति in such cases.

5 मनवश्चतुर्दश ते च अवसा गमन्निह। उवटः।

सायणभाष्यम् । पृषदश्वा: । पृषद्भि: श्वेतबिन्दुभिर्युक्ता अश्वा येषां ते तथोक्ता: । पृश्निमातर: । पृश्निर्नानावर्णा गौर्माता येषाम् । शुभंयावान: । शुभं शोभनं यान्ति गच्छन्तीति शुभंयावान: । शोभनगतय इत्यर्थ: । विदथेषु यज्ञेषु जग्मयो गन्तार: । अग्निजिह्वा: । अग्नेर्जिह्वायां वर्तमाना:[1] । सर्वे हि देवा हवि:स्वीकरणायाग्नेर्जिह्वायां वर्तन्ते । तात्स्थ्यात्ताच्छब्द्यं । मनव: सर्वस्य मन्तार: । सूरचक्षस: । सूर्यप्रकाश इव चक्ष: प्रकाशो येषां त एवंभूता मरुतो मरुत्संज्ञका विश्वे देवा सर्वे देवा नोऽस्मानिहास्मिन् कालेऽवसा रक्षणेन सहागमन् आगच्छन्तु ॥ शुभंयावान: । या प्रापणे । "आतो मनिन्०" [३।२।७४] इति वनिप् । "तत्पुरुषे कृति बहुलम्" [६।३।१४] इति बहुलवचनाद् द्वितीयाया.अप्यलुक् । गमन्[1] । गमे: प्रार्थनायां लेटअडागम: । "इतश्च लोप:०" [३।४।९७] इतीकारलोप: । "बहुलं छन्दसि"[२।४।७३] इति शपो लुक् ॥ ७ ॥

[1] This forced explanation has become necessary because the word is oxytone. It is evidently a Bahuvrīhi, but Bahuvrīhis normally accent the first member. There are several courses open to us. We may include **अग्निजिह्वा** under **निरुदकादि** ( VI. 2. 184 ) which is an **आकृतिगण** or under **त्रिचक्रादि** VI. 2. 199. 1 ( **अन्तोदात्तप्रकरणे त्रिचक्रादीनां छन्दस्युपसंख्यानम्** ). Under RV. I. 44. 14 S. says : **अग्निजिह्वा:, अग्नेर्जिह्वायामवस्थिता: हविर्भाज इत्यर्थ: । तात्स्थ्यात्ताच्छब्द्यम् । यद्वा । अग्निर्जिह्वास्थानीय: येषां ते । छान्दसमन्तोदात्तत्वम् ।** It is most unfortunate that **यद्वा** is not found in the printed editions, but unless we supply it the explanation will be meaningless. S. first explains **अग्निजिह्वा:** as a Tatpuruṣa and gets the meaning by **लक्षणा** with the help of the dictum **तात्स्थ्यात्ताच्छब्द्यम्.** He is evidently not satisfied with the explanation and suggests that we may regard

**अग्निजिह्वाः** as a Bahuvrīhi compound, the accent on the last syllable being a Vedic peculiarity.

As Wackernagel points out, when *Agni, ghṛta* and *citra* are the first members of Bahuvrīhi compounds, the second member is accented.

भद्रं कर्णेभिः शृणुयाम देवा

भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभि-

र्व्यशेम देवहितं यदायुः ॥ ८ ॥

भद्रम् । कर्णेभिः । शृणुयाम । देवाः ।

भद्रम् । पश्येम । अक्षऽभिः । यजत्राः ।

स्थिरैः । अङ्गैः । तुस्तुऽवांसः । तनूभिः ।

वि । अशेम । देवऽहितं । यत् । आयुः ॥ ८ ॥

वेङ्कटमाधवव्याख्यानम्। भद्रं [ कर्णेभिः ] कर्णैः शृणुयाम देवाः। भद्रम् एव पश्येम [ अक्षभिः ] अक्षिभिः [ यजत्राः ] यष्टव्याः। स्थिरैः अङ्गैः तुष्टुवांसः तनूभिः च युक्ताः [व्यशेम] व्यश्याम [प्राप्यास्म?] [ देवहितम् ] देवैर्निहितम् शत-संख्याकम् आयुः ॥ ८ ॥

काश्यपक्षितीशचन्द्रभाष्यम्। अनेन मन्त्रेण प्रार्थनासारसर्वस्वं देवेभ्यो निवदयति—भद्रमिति। हे **देवाः, कर्णेभिः** कर्णैः **भद्रं** कल्याणं वचनं **शृणुयाम** आकर्णयेम। मा खलु स्वजनविधुराणां करुणक्रन्दितेन मदमत्तानां कलहकोलाहलेन ज्ञातीनां च श्रवणदाहिना वचनजालेन दह्यमानकर्णा भूम, प्रत्युत वेदशास्त्राणां स्निग्धगम्भीर-निर्घोषेण पुत्रमित्रकलत्रादीनां प्रहर्षप्रजल्पितेन साधुजनानाममृतायमाने-नालपितेन च श्रोत्रयुगलं नः प्रसादमधिगच्छतु। तथाच तैत्तिरीय-ब्राह्मणे [ २।५।२।३ ] श्रूयते—श्रोत्रेण भद्रमुत शृण्वन्ति सत्यम्। श्रोत्रेण वाचं बहुधोद्यमानाम्। श्रोत्रेण मोदश्च महश्च श्रूयते। श्रोत्रेण सर्वा दिश आशृणोमि॥ इति। हे **यजत्राः** यजनीयाः पूजनीया देवाः, **अक्षभिः** अक्षिभिः चक्षुर्भिः **भद्रम्** शुभम् **पश्येम** अवलोकयेम। युष्माकं पूजनपरा वयं मा तावत् खलानां समुन्नतिं साधूनामधोगतिं धर्मस्य विशरणम् अधर्मस्याभ्युत्थानम् जनानाम-कालमरणानि बलवतां च पिशाचचेष्टितानि द्राक्ष्म, प्रत्युत साधूनां समुन्नतिं खलानां सौशील्यम्, धर्मस्याभ्युत्थानम्, अधर्मस्य समूलनाशम्, तरुणानां कर्तव्यपरायणतां बलीयसां च दुर्बलरक्षणं प्रत्यक्षीकुर्याम। तथाच तैत्तिरीयब्राह्मणे [२।५।१।२] श्रूयते—अनन्धाश्चक्षुषा वयम्। जीवा ज्योतिरशीमहि। सुवर्ज्योतिरुतामृतम्॥ इति। **स्थिरैः** दृढतरैः अचपलैश्च **अङ्गैः** अवयवैः **तनूभिः** शरीरैश्च देवान् **तुष्टुवांसः** स्तुतवन्तः देवानां स्तुतिपरायणा इत्यर्थः। **यत् आयुः देवहितम्** देवैः मनुष्येषु निहितम्, देवविहितमित्यर्थः।

तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतम् ॥

[ ऋ० सं० ७।६६।१६] इति श्रुतेः "शतायुः पुरुषः" [तै० सं० १।५।२] "शतायुर्वै पुरुषः" [ऐतरेयब्राह्मण ७।७] इत्यादिश्रुतेश्च वर्षशतपरिमितम् । यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । तत् **व्यशेम** निराबाधमधिगच्छेम । "नातः पापात् पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः", अत एव सर्वभोगोपकरणसम्पन्नाः शारीरं स्वास्थ्यमनुभवन्तो यथाविधि देवतोपस्थानमनुतिष्ठन्तः शतं संवत्सरान् जीवेम ।

सहृदयशिरोमणिना भर्तृहरिणा गीतम्—

क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितं
क्वचिन्नारी रम्या क्वचिदपि जराजर्जरवपुः ।
क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहो
न जाने संसारः किममृतमयः किं विषमयः ॥

इति । तत् संसारोऽयममृतमय एव नोऽस्तु न पुनर्विषमयः । मन्त्रेऽत्र परिसंख्यालङ्कारः ॥ तल्लक्षणं च काव्यप्रकाशे—"किञ्चित् पृष्टमपृष्टं वा कथितं यत् प्रकल्पते । तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता ॥" इति । ८ ॥

स्कन्दस्वामिभाष्यम् । युष्मत्प्रसादादेव भद्रं कर्णेभिः शृणुयाम हे देवाः । भद्रमेव पश्येम अक्षभिः यजत्राः यष्टव्याः । स्थिरैरङ्गैः दृढैश्चात्मावयवैः तनूभिः शरीरैश्च । जरयानुपहतशरीरतदवयवाः सन्तः इत्यर्थः । तुष्टुवांसः । शत्रर्थोऽयं वसुर्द्रष्टव्यः । स्तुवन्तो युष्मान् । व्यशेम मनुष्याणां च देवहितं देवैर्दत्तं देवैर्वा निहितं स्थापितम् उपकल्पितं यदायुः तद्वर्षशतपरिमाणकम् आयुर्देवैर्मनुष्याणामुपकल्पितं कृत्स्नं प्राप्नुयाम । मान्तरा मृषीमहीत्यर्थः[1] ॥ ८ ॥

[1] This is the form in आशीर्लिङ्. In connexion with मा, लुङ् was expected. Should we read मृष्महि ?

महीधरभाष्यम्। तिस्रस्त्रिष्टुभः। हे देवाः, कर्णेभिः कर्णैः भद्रम् कल्याणम् अनुकूलं वयं शृणुयाम। हे यजत्राः, यजन्तं त्रायन्ते रक्षन्तीति यजत्राः यजमानपालकाः[1] अक्षभिः नेत्रैः भद्रं वयं पश्येम। "बहुलं छन्दसि"[2] [ ७।१।७६ ] इति हलादावक्षिशब्दस्यानङादेशः[3]। किंच देवहितं देवैः स्थापितं देवानां हितं देवोपासनयोग्यं वा यदायुः जीवनं तद् वयं व्यशेमहि व्यश्नुवीमहि प्राप्नुयाम। कीदृशा वयम्? स्थिरैः दृढैः अङ्गैः अवयवैः करचरणादिभिः तनूभिः शरीरैश्च पुत्रादिभिर्वा युताः तुष्टुवांसः भवतः स्तुवन्तः सन्तः॥ ८॥

उवटः। कर्णेभिः कर्णाभ्याम्[4]।..यजत्राः यजनीयाः। स्थिरैः अशिथिलैः..तुष्टुवांसः देवान् स्तुतवन्तः। तनूभिः भार्यापुत्रादि-

[1] How curious!

[2] The relevant rule is छन्दस्यपि दृश्यते vii. i. 76.

[3] अक्षभिः—In the classical language अक्षन् is found only before vocalic endings beginning with the instrumental sing. In the earlier language, however, other forms are met with. Thus in the Maitrāyaṇī and Kāṭhaka Saṃhitās, we find *akṣāṇi.* The stem occurs in the well-known expression अक्षण्वत् also. The Kāsikī on छन्दस्यपि दृश्यते is interesting: अस्थिदधिसक्थ्यक्ष्णामनङ्, छन्दस्यपि दृश्यते। यत्र विहितस्ततोऽन्यत्रापि दृश्यते। अचीत्युक्तमनजादावपि दृश्यते। इन्द्रो दधीचो अस्थभिः [ ऋ०सं० १।८४।८ ]। तृतीयादिष्वित्युक्तम्, अतृतीयादिष्वपि दृश्यते। अस्थान्युत्कृत्य जुहोति। विभक्तावित्युक्तम्, अविभक्तावपि दृश्यते। अक्षण्वता लाङ्गलेन। अस्थन्वन्तं यदनस्था बिभर्ति [ ऋ० सं १।१६४।४ ]।

[4] Acc. to Vāmana's dictum: स्तनादीनां द्वित्वाविष्टा जातिः प्रायेण।

काभिस्तनूभिः सहिताः।..देवहितं देवैर्यत् स्थापितं मनुष्याणामायुः।

सायणभाष्यम्। अस्ति सौम्यचरुस्तृतीयसवने। तेन चरुणा देवतामिष्ट्वा शेषे तस्मिन्बहु घृतमवनीय तस्मिन्वषट्कर्त्रा स्वकीया छाया द्रष्टव्या। सा यदि न दृश्येत तदानीं "भद्रम्" इत्येका पठितव्या। "त्वं सोम" इति खण्डे तथैव सूत्र्यते। "राज्ञा सोमेन तद्वयमस्मासु धारयामसि भद्रं कर्णेभिः शृणुयाम देवा इति च" [आ० श्रौ० सू० ५।१९] इति॥ महानाम्नीव्रतेऽप्येषा भूमिस्पर्शने जप्या। सूत्रितं च "एतद्विदम्" इति खण्डे। "भद्रं कर्णेभिः शृणुयाम देवाः शं न इन्द्राग्नी भवतामवोभिः" [आ० श्रौ० सू० ८।१४] इति।

हे देवा दानादिगुणयुक्ताः सर्वे देवाः कर्णेभिरस्मदीयैः श्रोत्रैर्भद्रं भजनीयं कल्याणं वचनं शृणुयाम। युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम। अस्माकं बाधिर्यं कदाचिदपि मा भूत्[1]। हे यजत्रा यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवा अक्षभिरक्षिभिरात्मीयैश्चक्षुर्भिर्भद्रं शोभनं पश्येम। द्रष्टुं समर्थाः स्याम। अस्माकं दृष्टिप्रतिघातोऽपि मा भूत्। स्थिरैर्दृढैरङ्गैर्हस्तपादादिभिरवयवैस्तनूभिः शरीरैश्च युक्ता वयं तुष्टुवांसो युष्मान् स्तुवन्तो यदायुः षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा[2] देवहितं देवेन प्रजापतिना स्थापितं तद्व्यशेम। प्राप्नुयाम॥ कर्णेभिः। "बहुलं

[1] Sāyaṇa built better than he knew—May we not be like men who have eyes but see not, who have ears but hear not! Cf. **नयन तोमारे पाय ना देखिते, र'येछ नयने नयने.**

[2] S. is here thinking of the ṣoḍaś'ottarīya and viṃś'ottarīya das'as of Astrology. Even poets speak of a hundred years as the span of life allotted to man. Thus Bhartṛhari says in his Vairāgya-s'ataka:

छन्दसि" [७।१।१०] इति भिस ऐसभावः। अक्षभिः। "छन्दस्यपि दृश्यते" [७।१।७६] इत्यनङ् स चोदात्तः। यजत्राः। "अमिनक्षि०" [उ०३।९८] इत्यादिना यजेरत्रन्प्रत्ययः। तुष्टुवांसः। ष्टुञ् स्तुतौ। लिटः क्वसुः। "शर्पूर्वाः खयः" [७।४।६१] इति तकारः शिष्यते। अशेम। अशू व्याप्तौ। "लिङ्याशिष्यङ्" [३।१।८६]। यदि तु तत्र परिगणनमन्यव्यावृत्त्यर्थं[1] तदानीं लिङि व्यत्ययेन शप्। देवहितम्। "तृतीया कर्मणि" [६।२।४८] इति पूर्वपदप्रकृतिस्वरत्वम्॥ ८॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम्॥

Acc. to the Bible the span of life is "three score years and ten" though the mention of a hundred years is sometimes met with.

"The days of our age are three score years and ten; and though men be so strong that they come to four score years, yet is their strength then but labour and sorrow; so soon passeth it away, and we are gone." Psalm xc. 10. "There shall be no more then an infant of days, nor an old man that hath not filled his days: for the child shall die an hundred years old." Isaiah lxv. 20.

[1] In the Bhāṣya on लिङ्याशिष्यङ् iii.1.86 we find: अयमाशिष्यङ् विधीयते तस्य किं प्रयोजनम्?

* आशिष्यङः प्रयोजनं स्थागागमिवचिविदयः।

स्था। उपस्थेयं वृषभं तुग्रियाणाम्। गा। अञ्जसा सत्यमुपगेयम्¶। गमि।

¶ In VS. v.5, TS. i.2.10.2, GB. ii.2.3, S'B. iii.4.2.14, ĀS'S. iv.5.3, S'S'S. v.8.2, LS'S. v.6.6, S'GS. i.6.5 we find उपगेषम्. In MS i.2.7 and KS. ii.8 occurs उपागाम्.

सायणभाष्यम् (तैत्तिरीयारण्यकगतम्)। हे देवाः इन्द्रादयः भद्रं कल्याणं श्रुतिस्मृतिवाक्यरूपं कर्णेभिः आचार्यान्तेवासिरूपाणाम् ऋत्विग्यजमानरूपाणां वास्माकं बहूनां कर्णैः श्रृणुयाम युष्मत्-प्रसादात् सर्वदा श्रोतुं समर्थाः स्याम, श्रुत्वा च **यजत्राः** यागक्षमा[1] वयम् भद्रं कल्याणं यज्ञादिकं कर्म अक्षभिः चक्षुरिन्द्रियैः[2] साक्षात् पश्येम। स्थिरैः अविकलैः अङ्गैः चक्षुरादिभिर्हस्तादिभिश्चावयवैः तनूभिः तथाविधशरीरैः युक्ता वयं तुष्टुवांसः युष्मदीयां स्तुतिं कुर्वाणा यत् यस्मात् कारणात्[3] देवहितम् देवेन प्रजापतिना समर्पितं सर्वमपि आयुः व्यशेम विशेषेण प्राप्नवाम। तस्मादपमृत्योरभावाच्चिरं भद्रं श्रृणुयामेति पूर्ववान्वयः ॥ ८ ॥

**यज्ञेन प्रतिष्ठां गमेयम्। वचि। मन्त्रं वोचेमाग्नये। विदि। विदेयमेनां मनसि प्रविष्टाम्।**

*** शकिरुह्योश्च।**

**शकिरुह्योश्चेति वक्तव्यम्। शकेम त्वा समिधं साधया धियः। अस्रवन्तीमारुहेमा स्वस्तये।**

*** दृशेरक् पितरं च दृशेयं मातरं च।**

**दृशेरग् वक्तव्यः। पितरं च दृशेयं मातरं च दृशेयमि¶त्येवमर्थम्।**

In the N. S. Press ed. we find **[ मातरं च ] दृशेयम्** both in the Vārttika and in the Bhāṣya. In the critical edition of Kielhorn **[मातरं च ] दृशेयम्** occurs in the Bhāṣya alone and not in the

1 The suffix has been added in the **कर्मवाच्य** in the sense of **तव्य,** so this meaning has to be rejected.

2 S. evidently takes **अक्ष** in the sense of **इन्द्रिय** and states the secondary meaning **चक्षुरिन्द्रियैः, साक्षात्** would therefore appear to be unnecessary.

3 **यत्** cannot mean **यस्मात् कारणात्** here.

Vārttika. पितर॑ च दृशेय॑ मातर॑ च is the last pāda of RV. 1.24. 1 and 2 and occurs unchanged in the Kās'ikā. The second दृशेयम् would therefore appear to be a reader's note and should be expunged from the Bhāṣya.

The Vārttikakāra has enumerated the roots which come under the scope of this rule, but अश् is not mentioned by him. So if the list be regarded as exhaustive, the rule does not apply and we are to invoke the aid of व्यत्यय. If, however, the list be regarded as merely illustrative, then there is no difficulty.

शतमिन्नु शरदो अन्ति देवा
यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति
मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥

शतम्। इत्। नु। शरदः। अन्ति। देवाः।
यत्र। नः। चक्र। जरसम्। तनूनाम्।

पुत्रासः । यत्र । पितरः । भवन्ति ।

मा । नः । मध्या । रिरिषत । आयुः । गन्तोः ॥ ९ ॥

वेङ्कटमाधवव्याख्यानम् । शतम् [इन्नु] एव शरदः [अन्ति] अन्ततः भवति[1] देवा मनुष्याणामायुः । यत्र [नः] अस्माकम् [चक्रा] कृतवन्तः यूयम् अङ्गानां [जरसम्] जरां कल्पितवन्तः[2] । [पुत्रासः] पुत्रा एव [पितरः] रक्षितारः यत्र भवन्ति तद् आयुः गन्तोः [मध्या] मध्ये मा [नः] अस्मान् [रीरिषत] हिंसिध्वम्[3] इत्यायुष आशासनम् ॥ ९ ।

काश्यशक्षितीशचन्द्रभाष्यम् । रिष्टासद्भावं प्रार्थयते—शतमिदिति । हे देवाः, **शतम्** शतसंख्याकाः **इत् नु** एव **शरदः** संवत्सराः **अन्ति** पुरतो नो वर्तन्ते इति शेषः । **यत्रा** यत्र वर्षशत-परिमिते आयुषि **नः** अस्माकं **तनूनाम्** शरीराणां **जरसम्** विस्रसाम् अपक्षयम् **चक्रा** चक्र विहितवन्तो यूयमिति शेषः । **यत्र** वर्षशते **पुत्रासः** पुत्राः **पितरः भवन्ति** पितृपदम् अधिगच्छन्ति । ये तावत् पूर्वमस्माभिः सयत्नं पोषिताश्च परिवर्द्धिताश्च त एव पुत्रा यदा वलिसमाक्रान्तावयवानां पलितशिरसां स्वकार्याक्षमाणामस्माकं पालनं पोषणं च विदध्युः । **गन्तोः** गमनस्य **मध्या** मध्ये यदायुः प्रचलति

[1] V. construes **भवति** with **आयुः** understood.

[2] **कल्पितवन्तः** is unnecessary, because of the preceding **कृतवन्तः**.

[3] This is the reading in the edition of Sarup who notes the variant **हिंसितध्वम्**. Both forms are ungrammatical. Read **हिंसिष्ट**.

तदा, तस्यायुषः शेषे इत्यर्थः। **नः** अस्माकम् **आयुः** जीवितकालं **मा रीरिषत** मा हिंसिष्ट। भवतां प्रसादेन सर्वासां रिष्टीनां भङ्गो भवतु, वयं च भवद्भिः परिकल्पितं वर्षशतमायुर्लभेमहि, पुत्राश्च नो वार्धके भक्तिभराप्लुतचेतसः सेवां कुर्वन्तु ॥ ९॥

शतपथब्राह्मणम् ( २।३।३।१—६ )। यत्र वै प्रजापतिः प्रजाः ससृजे। स यत्राग्निं ससृजे स इदं जातः सर्वमेव दग्धुं दध्रे। इत्येवाबिलमेव ता यास्तर्हि प्रजा आसुः। ता हैनं सम्पेष्टुं दध्रिरे। सोऽतितिक्षमाणः पुरुषमेवाभ्येयाय ॥ स होवाच न वा अहमिदं तितिक्षे, हन्त त्वा प्रविशानि, तं मा जनयित्वा बिभृहि; स यथैव मां त्वमस्मिँल्लोके जनयित्वा भरिष्यसि, एवमेवाहं त्वाममुष्मिँल्लोके जनयित्वा भरिष्यामीति ॥ तथेति तं जनयित्वाबिभः। स यदग्नी आधत्ते तदेनं जनयति, तं जनयित्वा बिभर्ति। स यथा हैवैष एतस्मिँल्लोके जनयित्वा बिभर्ति, एवमु हैवैष एतममुष्मिँल्लोके जनयित्वा बिभर्ति ॥ तन्न साम्युद्वासयेत। सामि हास्मै स ग्लायति। स यथा हैवैष एतस्मा अमुष्मिँल्लोके सामि ग्लायति—एवमु हैवैष एतस्मा अमुष्मिँल्लोके सामि ग्लायति। तस्मान्न साम्युद्वासयेत ॥ स यत्र म्रियते, यत्रैनमग्नावभ्यादधाति, तदेषोऽग्नेरधिजायते, स एष पुत्रः सन् पिता भवति ॥ तस्मादेतदृषिणाभ्यनूक्तम्—शतमिन्नु शरदो अन्ति देवाः। यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति। मा नो मध्या रीरिषतायुर्गन्तोः ॥ इति। पुत्रो ह्येष सन्त्स पुनः पिता भवति। एतन्नु तद् यस्मादग्नी आदधीत ॥

शतपथब्राह्मणसायणभाष्यम्। दध्रे उद्युक्तो बभूव।... अतितिक्षमाणः प्रजाभिश्चिकीर्षितं पेषणमसहमानः।... एवमग्न्याधानेन जनितस्याग्नेर्भरणं विधाय, तस्य भरणात् प्राक् उद्वासनं निषेधति—तन्नेति। सामि मध्ये यद्यग्निम् उद्वासयेत विसृजेत्, तर्हि अस्मै

यजमानाय सः अग्निः सामि अर्धग्लानियुक्तो भवति । . . . पुत्रः सन् पिता भवतीति । यजमानस्य जीवनावस्थायामाधानेनोत्पादितत्वादग्निस्तस्य पुत्रः, मरणादूर्ध्वन्तु तस्मादग्नेर्यजमानस्य जननात् पुत्र एव तस्य पिता भवतीत्यर्थः ।

हे देवाः, अन्ति अन्तिके, मनुष्याणां समीपे आयुष्ट्वेन परिकल्पिताः शतं शतसंख्याका एव शरदः संवत्सराः खलु यत्र यस्मिन् आयुषि शतसंवत्सरे तनूनां शरीराणां जरां चक्रा कृतवन्तः, यत्र य पुत्रासः [ पुत्राः ] सन्तोऽपि अपत्योत्पादनेन पितरो भवन्ति, नः अस्माकं तत् आयुः गन्तोः गमनात् पूर्वं मध्या मध्ये मा रीरिषत हिंसनं मा कृषतेति [? काष्टति] ।

स्कन्दस्वामिभाष्यम् । इत् नु इति पदपूरणे । एकवाक्यताप्रसिद्धयर्थं च प्रथमे पादे यच्छब्दोऽन्त्ये च षष्ठयन्तस्तच्छब्दोऽध्याहर्तव्यः । यदेतत् शतं शरदः वर्षशतम् अन्ति अन्तिकं सन्निकृष्टम् । अल्पमित्यर्थः । हे देवाः, यत्र नः अस्माकम् चक्र कृतवन्तः स्थ जरसम् जराम् तनूनाम् शरीराणाम् । यत्[1] स्वरूपेणैवाल्पकं जरया चोपहतमित्यर्थः । यत्र च पुत्रासः पुत्राः पितरो भवन्ति स्वेषामपत्यानाम् । यत्रैकमेव शरीरमत्यन्तविरुद्धे पितापुत्रावस्थे शीघ्रमेव प्रतिपद्यत इत्यर्थः । अथवा पितृशब्दोऽत्र क्रियापरः पालयितृवचनः । ये पुत्राः पाल्या आसंस्ते एव वार्धक्ये जरयाभिभूतस्य पालयितारो भवन्तीत्यर्थः । मा नः अस्माकं तस्य मध्या मध्ये रिरिषत हिंसिष्ठा[2] । आयुर्जीवितं गन्तो र्गमनशीलस्य ॥ ९ ॥

उवटभाष्यम् । शतमपि शरदः अन्ति अन्तिके समीपे भवथ[3]

[1] यत् refers to वर्षशतम् or rather to आयुः in the mind of the writer.

[2] Read रीरिषत हिंसिष्ट. [3] Should we read भवत ?

हे देवा:। आकल्पकालमित्यर्थ:। ऋषिभिरुदितमेतत्। यत्र यस्मिन् शरदां शते न: अस्माकं यूयं चक्र कृतवन्त: जरसं जरां तनूनां जरानिमित्तामशक्तिमित्यभिप्राय:। किञ्च, पुत्रासो यत्र पितरो भवन्ति पुत्रा अग्नय: यत्र शरदां शते यजमानस्स पितरो जनितारो[1] भवन्ति। तदुक्तम्—"तत्र वै प्रजापति: प्रजा: ससृजे" इत्युपक्रम्य "तस्माज्जनयित्वा बिभृहि"[2] इति। यत्र पितरो भवन्ति। एतदप्युक्तमेव। "स यत्र म्रियते यत्रैनमग्नावभ्यादधाति तदेषोऽग्नेरधिजायते, स एष पुत्र: सन् पिता भवति"[2] इति। अथवा पुत्रा एव पितॄणामौर्ध्वदेहिकं कुर्वाणा: पितरो यत्र सम्पद्यन्ते तदपि शरदां शतमन्तिक एवेति। यत एवमतो ब्रूम:। मा नो मध्या रीरिषतायुर्गन्तो:। मा रीरिषत मा हिंसिष्ट[3] न: अस्माकं मध्या मध्ये अकाल एव आयु: गन्तो:। गन्तृ गमनशीलम्। उक्तं च—

सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य।
वर्षासु सिक्ता इव चर्मबन्धा:
सर्वे प्रयत्ना: शिथिलीभवन्ति॥

इति॥ ९॥

महीधरभाष्यम्। हे देवा:, शतम् इत् शतमपि शरद: वर्षाणि शतवर्षपर्यन्तं यूयम् अन्ति अन्तिके समीपे भवतेति शेष:। यत्र शरच्छते न: अस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र

[1] The printed text has जनितार: which is an आर्ष form acc. to जनिता मन्त्रे. Should we read जनयितार: ?

[2] The entire passage from the S'atapatha Brāhmaṇa is printed on pp. 45-46.

[3] The printed text has मा रीरिषत्, मा हिंसीष्ट !

कुरुथ[1]। करोतेर्लिटि मध्यमबहुवचनम्। "द्व्यचोऽतस्तिङः" [६।३।१३५] इति चक्रेत्यस्य संहितायां दीर्घः। "निपातस्य च"[2] [६।३।१३६] इति यत्रेत्यस्य दीर्घः। वार्धकावधि यूयं समीपे भवतेत्यर्थः। यत्रास्माकं जरायां पुत्रासः अस्मत्पुत्राः पितरो भवन्ति पुत्रवन्तो भवन्ति, यावदस्माकं पौत्रा भवन्तीत्यर्थः। तावत् मध्या मध्ये नः अस्माकम् आयुः मा रीरिषत मा हिंसिष्ट। रिषतेर्हि सार्थस्य णिजन्तस्य चङि रूपम्। कीदृशम् आयुः? गन्तोः गन्तृ गमनशीलम्। तदुक्तम्—

सञ्चिन्त्य सञ्चिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य।
वर्षासु सिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥

इति ॥ ९ ॥

सायणभाष्यम्। हे देवाः। अन्त्यन्तिके मनुष्याणां समीप आयुष्ट्वेन भवद्भिः कल्पिताः शरदः संवत्सराः शतमिन्नु शतं खलु। यस्मात्सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितं तस्मान्नोऽस्माकमायुर्गन्तोः[3] क्लृप्तस्यायुषो

[1] अकुरुत would appear to be the correct reading.

[2] The special rule ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रोरुष्याणाम् vi.3.133 is applicable here. Mahidhara evidently regards कुत्र as one word, though it is usual to take कु and त्र separately.

[3] गन्तोः—क्लृप्तस्यायुषो गमनात् पूर्वं मध्या मध्ये—This is rather cumbrous. गन्तोः is a Gen. infinitive governed by the preposition *madhyā'*, the Instr. sing of *ma'dhya* with adverbial shifting of accent. Cf. मध्या कर्तोर्विततं सं जभार RV. i. 115. 4. Similarly, we have in Greek the preposition *a'no:*, the Inst. sing. of *ana'*, governing the Gen., *e.g.*, *ano: tou: gona'tos* above the knee.

गमनात्पूर्वं मध्या मध्ये मा रीरिषत। मा हिंसिष्ट। कीदृशानाम्[1]? नोऽस्माकं तनूनां शरीराणां जरसं जरां यत्र यस्यामवस्थायां चक्र कृतवन्तो यूयम्। यत्र च पुत्रासः पुत्राः पितरोऽस्माकं रक्षितारो भवन्ति। ईदृग्दशापन्नानामि[1]त्यर्थः॥ अन्ति। अन्तिकशब्दस्य "कादिलोपो[2] बहुलमिति वक्तव्यम्" [काशिका ६।४।१४९] इति कलोपः। यत्रा। "ऋचि तुनुघमक्षुतङ्कुत्रो०" [६।३।१३३] इति संहितायां दीर्घः।

[1] All the printed editions read कीदृशान् and ईदृग्दशापन्नान्, but there is no Acc. pl. in the previous clause to which कीदृशान् can refer.

[2] अन्तिकशब्दस्य कादिलोपो बहुलमिति वक्तव्यमिति कलोपः *i.e.*, in the matter of the elision of the portion beginning with *k* of *antika* we should use the word *bahulam*. This is found in the Kās'ikā [which reads कादिलोपे], giving the substance of the S'lokavārttika under vi. 4. 149 :

तसीत्येष न वक्तव्यो दृष्टो वाशतयेऽपि हि।
घौ लोपऽन्तिषदित्यत्र तथाघौ येऽन्त्यथर्वसु॥

Kaiyaṭa explains ; तसीत्येष इति। कादिलोपश्च बहुलमित्यत्र विषयमनुपादाय पठितव्यमित्यर्थः।...घु-शब्देनोत्तरपदं पूर्वाचार्यप्रसिद्धमुच्यते। ...अघाविति। अनुत्तरपदे इत्यर्थः। The example from the Atharva Veda is अन्तिये च दूरके. The S'lokavārttika and the example given in the Mahābhāṣya appear to be based on a vicious reading of the hemistich अरसास इहाहयो ये अन्ति ये च दूरके x. 4. 9. अन्ति occurs again in AV. x. 8. 32: अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति and in AV. xviii. 3.23 आ यूथेव क्षुमति पश्वो अख्यद्देवानां जनिमान्त्युग्रः where S. says : अन्ति अन्तिके समीपे। कादिलोपो बहुलमिति वक्तव्यमित्यन्तिकशब्दस्य कादिलोपः. The truth is rather the other way about. Skt. अन्ति is an independent adverb. From it is derived अन्तिक with the suffix क. In Gk. *anti* means 'opposite', *a'nta* 'face to face', Lat. *ante* 'before'.

चक्रा[1]। लिटि मध्यमबहुवचनस्य कित्त्वाद् गुणाभावे यणादेशः। "द्व्यचोऽतस्तिङः" [६।३।१३५] इति संहितायां दीर्घत्वम्। जरसम्। "जराया जरसन्यतरस्याम्" [७।२।१०१] इति जरसादेशः। मध्या। "सुपां सुलुक्०" [७।१।३९] इति सप्तम्या डादेशः। रीरिषत। रिष रुष हिंसायाम्। अस्माण्णयन्तात्[2] माङि लुङि मध्यमबहुवचने च्लेश्चङि णिलोपोपधाह्रस्वद्विर्वचनहलादिशेषसन्वद्भावेत्त्वदीर्घाः। छान्दसः पदकालीनो ह्रस्वः। गन्तोः। भावलक्षणे "स्थेण्०"[3] [३।४।१६] इति गमेस्तोसुन्प्रत्ययः।

1 चक्रा—In the Paspaśāhnika of the Mahābhāṣya we find : सन्ति वै शब्दा अप्रयुक्ताः। तद् यथा—ऊष तेर चक्र पेचेति। ...ये चाप्येते भवतोऽप्रयुक्ता अभिमता एतेषामपि प्रयोगो दृश्यते। क्व ? वेदे। यद्वो रेवती रेवत्यं तदूष। यन्मे नरः श्रुत्यं ब्रह्म चक्र। यत्रा नश्चक्रा जरसं तनूनामिति।

2 रिष रुष हिंसायाम्—अस्मात् ण्यन्तात्. We may say : रिष हिंसायाम्। अस्मात् ण्यन्तात् or रिष रुष हिंसायाम्। रिषेर्ण्यन्तात्।

3 गन्तोः। भावलक्षणे स्थेण् इति गमेस्तोसुन्प्रत्ययः—Unfortunately for S. the rule does not include गम्, and इण् cannot represent गम् here. He might have said ईश्वरपदासन्निधानेऽपि तोसुन्प्रत्ययः.

अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्ष॒-

मदि॑तिर्मा॒ता स पि॒ता स पु॒त्रः।

विश्वे देवा अदितिः पञ्च जना

अदितिर्जातमदितिर्जनित्वम् ॥ १० ॥

अदितिः । द्यौः । अदितिः । अन्तरिक्षम् ।

अदितिः । माता । सः । पिता । सः । पुत्रः ।

विश्वे । देवाः । अदितिः । पञ्च । जनाः ।

अदितिः । जातम् । अदितिः । जनिऽत्वम्* ॥ १० ॥

एतरेयब्राह्मणम् । पाञ्चजन्यं वा एतदुक्थं यद्वैश्वदेवम्, सर्वेषां वा एतत् पञ्चजनानामुक्थं—देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च । एतेषां वा एतत् पञ्चजनानामुक्थं सर्व एनं पञ्चजना विदुः ।...अदितिर्द्यौरदितिरन्तरिक्षमित्युत्तमया परिदधाति । इयं

* With this verse we may compare the sublime Greek inscription on an Egyptian temple to the Goddess Neith: *Ego: eimi pan to gegonos kai on kai esomenon kai ton emon peplon oudeis po: thne:tos apekalupsen.* 'I am all that is and that was and that shall be, and no mortal hath lifted my veil.'

वा अदिति द्यौ॑रियमन्तरिक्षम् इति। अदितिर्माता स पिता स पुत्र इति। इयं वै माता, इयं पिता, इयं पुत्र इति। विश्वे देवा अदितिः पञ्चजना इति। अस्यां वै विश्वे देवा अस्यां पञ्चजना इति। अदितिर्जातमदितिर्जनित्वम् इति। इयं वै जातमियं जनित्वम् ॥१३।७॥

वेङ्कटमाधव-व्याख्यानम्। अदितिरेव सर्वमित्यदितेर्विभूतिमाचष्टे —अदितिरेव जातम् अदितिरेव [जनित्वम्] जनिष्यमाणं सा च [1]प्रयच्छत्वायुरिति ॥१०॥

काश्यपक्षितीशचन्द्रभाष्यम्। सर्वभूतान्तरात्मानमदितिं प्रशंसन्नुपसंहरति—अदितिर्द्यौरिति। **अदितिः द्यौः** यस्य किल महिमेदृक्तयेयत्तया वा परिच्छेत्तुं न शक्यते स द्युलोकोऽप्यदितिरेव। **अदितिः अन्तरिक्षम्।** अनन्तविस्तारमन्तरिक्षमप्यदितिरेव। **अदितिः माता स पिता स पुत्रः।** संसारस्यालम्बनानि पितृमातृपुत्रा अप्यदितिरेव। **अदितिः जातम् अदितिः जनित्वम्** किं बहुना यद् यत् किल समुत्पन्नं यद् यच्च समुत्पत्स्यते सर्वं खल्वदितिरेव। सेयं सर्वमयी सर्वशक्तिरदितिः संसारपाशान्निश्छिनत्तु ॥

"स पिता स पुत्रः" इत्यत्र विधेयप्राधान्यात् पुंस्त्वेन निर्देशः, "तिस्रो द्यावः सवितुर्द्वा उपस्था" [ऋ० सं० १।३५।६] इत्यत्र यथा। "अयं मातायं पितायं जीवातुरागमत्। इदं तव प्रसर्पणं सुबन्धवेहि निरिहि ॥" [ऋ० सं० १०।६०।७] इत्यत्र पुनरुद्देश्यानुरोधेन पुंस्त्वेन निर्देशः। महर्षिणा पाणिनिनापि "णेरणौ **यत् कर्म** णौ चेत् स

1 Laksman Sarup prints: "प्रयच्छतायुरिति (?)" and notes the variant प्रयच्छथायुः but the correct reading is either प्रयच्छतादायुः or प्रयच्छतामायुः or प्रयच्छत्वायुः. Of these प्रयच्छत्वायुः makes the least departure from the MSS, though प्रयच्छतादायुः sounds better in such cases.

कर्तानाध्याने" [१।३।६७] इत्यत्र विषयानुरोधेन स इति पुंलिङ्गेन निर्देशः कृतः, "कर्मणा यमभिप्रैति **स सम्प्रदानम्**" [१।४।३२] इत्यत्र पुनरुद्देश्यानुरोधेन तथा विहितः। अत एव कैयटेनोक्तम्—उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति। व्याख्यातं च नागेशेन—सिद्धवत् कीर्तनमुद्देशः, प्रतिपाद्यतया विधेयतया वा कीर्तनं प्रतिनिर्देशः। यथा "शैत्यं हि यत् सा प्रकृतिर्जलस्य" [रघु० ५।५४] इत्यादौ स्त्रीलिङ्गनिर्देशः। तल्लिङ्गम् तयोर्लिङ्गमित्यर्थः" इति। जनित्वमित्यत्र "कृत्यार्थे तवैकेन्केन्यत्वनः" [३।४।१४] इति सूत्रेण कृत्यार्थे त्वन्प्रत्ययः ॥१०॥

निरुक्तम् ( ४।२३ )। "अदितिर्द्यौः..." इत्यदितेर्विभूतिमाचष्ट, एनान्यदीनानीति वा।

दुर्गाचार्यभाष्यम्। राहूगणस्य गोतमस्येयमार्षम्। तृतीयसवने सर्वस्तोमेष्वेव वैश्वदेवस्य शस्त्रस्य परिधानीयैषा। अदितिः एव देवमाता द्यौः, अदितिः अदितिरेव च अन्तरिक्षम्। अदितिः एव माता सर्वभूतनिर्मात्री, स एव च पिता पालकः, स एव हि पुत्रः। सैव हि परितुष्टा सती स्तोतारं पुरुणो बहुनः पापात् त्रायते, अथवा सैव निपृणाति सर्वभूतानां यन्निपर्तव्यं दातव्यमित्यर्थः। येऽपि चैते विश्वे देवाः सर्वे देवाः, एतेऽपि अदितिरेव। पञ्चजनाः गन्धर्वादयः अदितिरेव। सर्वथापि किं बहुना, यावदेतत् किञ्चित् जातं च जनित्वं च जनिष्यमाणं च सर्वमप्येतत् अदितिरेव। इति एवमनेन मन्त्रेण मन्त्रदृक् अदितेर्विभूतिमाचष्टे, देवमातुस्तत् सर्वमप्युपपद्यत एव, माहाभाग्याद्देवतायाः। तदुत्तरत्र वक्ष्यामः। एवमैतिहासिकपक्षेण। नैरुक्तपक्षेण पुनः "एनानि" द्युलोकादीनि सर्वाणि अदीनानि अनुपक्षीणानि इति योज्यम्। न ह्येषां क्षयोऽस्तीति।

महेश्वरभाष्यम्। देवमातृत्वाददितेः, द्युप्रभृतयस्तत्प्रभवाः। तेषां

तत्प्रभवत्वाच्च तच्छब्देनैवाभिधानम्। अदितिप्रभवा द्यौरित्यर्थः। एवमेव अदितिरन्तारिक्षम्। अदितिप्रभवत्वादित्यर्थः। अदितिर्माता। सः। स इति लिङ्गव्यत्ययः। सैव पिता, सैव पुत्रः। विश्वे देवा अदितिः। पञ्च जनाश्च गन्धर्वादयः। निषादपञ्चमा वा वर्णाः। किं बहुना। अदितिरेव जातम्। अदितिरेव जनित्वम् जनिष्यमाणमित्यर्थः। एवं लोके यावद् द्युवियन्मातृपितृपुत्रादि सम्मतं तत् सर्वं तत्प्रभवत्वाददितिरिति, कृत्स्नस्य जगतस्तत्प्रभवत्वेन। एवमदितेर्विभूतिमाचष्ट मन्त्रो मन्त्रदृग्वा। अदीनपर्यायो वा नैरुक्तपक्षेऽदितिशब्दो न देवमातृवचनः। अत आह—एनान्यदीनानीति वा इति। अक्षीणा द्यौः तथान्तरिक्षादीनि। अध्यात्ममपि। अदितिः प्रकृतिः कारणं ब्रह्म। प्रकृतिसार्वनाम्याच्च तत्प्रभवत्वे सति सर्वमदितिरिति व्याख्येयम्।

स्कन्दस्वामिभाष्यम्। अदितिर्देवमाता। तत्प्रभवाः सर्वे द्युवादयः[1]। अत इदं कारणशब्देन कार्यस्य गौण्या वृत्त्याभिधानम्। अदितेः कार्यभूतेत्यदितिरेवान्तरिक्षम्। अदितिरेव माता स पिता स पुत्रः। स इति व्यत्ययेन पुंलिङ्गता। सैवादितिः पिता सैव पुत्रः। विश्वे देवा अदितिः पञ्च जनाश्च। गन्धर्वाः पितरो देवा असुरा रक्षांसीति एते पञ्च जना अभिप्रेताः, निषादपञ्चमा वा ब्राह्मणादयो वर्णाः। अदितिरेव जातम् अदितिरेव जनित्वं जनिष्यमाणम्। एवमशेषजगत्कारणत्वेनादितेर्विभूतिमाचष्टे। अथवा, अदितिशब्दोऽपि क्रियाशब्दोऽदीनपर्यायः। द्युवादीनि वस्तून्यदीनान्यनुपक्षीणानि। नित्यानीत्यर्थः ॥१०॥

महीधरभाष्यम्। मन्त्रदृक् सर्वात्मकत्वेनादितिं स्तौति। द्यौः स्वर्गोऽदितिस्तदधिष्ठातृत्वात्। एवमग्रेऽपि। अन्तरिक्षम् अदितिः

[1] Skandasvāmin evidently forms दिव् with क्विप् and the word being a धातु, अचिश्नुधातुभ्रुवाम० vi.4. 77 applies after the change of व् to उ by दिव उत् vi. 1. 131.

माता पुत्रश्च सः। सादितिरेव। लिङ्गव्यत्ययः। विश्वे सर्वे देवाः अदितिः। पञ्चजना मनुष्या अप्यदितिः। किं बहुना जातम् उत्पन्नं प्राणिजातम् जनित्वम् जनिष्यमाणं च सर्वम् अदितिरेव। यद्वा, अदितिर्मन्त्रेण नोच्यते, द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिः अदितीनि अदीनानि महाभाग्य[1]युक्तानि सन्तु ॥१०॥

सायणभाष्यम्। अदितिर्द्यौरदितिरित्येषादितिदेवताके पशौ हविषो याज्या। सूत्रितं च। "अदितिर्द्यौरदितिरन्तरिक्षं न ते विष्णो जायमानो न जातः" [ आ० श्रौ० सू० ३।८ ] इति।

अदितिरदीनाखण्डनीया वा पृथिवी देवमाता वा सैव द्यौर्द्योतनशीलो नाकः। सैवान्तरिक्षमन्तरा. द्यावापृथिव्योर्मध्य ईक्ष्यमाणं[2] व्योम। सैव माता निर्मात्री जगतो जननी। सैव पितोत्पादकः। ततश्च स पुत्रः। मातापित्रोर्जातः पुत्रोऽपि सैव। विश्वे देवाः सर्वेऽपि देवा अदितिरेव। पञ्च जना निषाद-पञ्चमाश्चत्वारो वर्णाः। यद्वा गन्धर्वाः पितरो देवा असुरा रक्षांसि। तदुक्तं यास्केन। "गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके। चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः" [नि० ३।७] इति। ब्राह्मणे त्वेवमाम्नातम्। सर्वेषां वा एतत्पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितॄणां च [ऐ० ब्रा० १६।७]इति, तत्र गन्धर्वा-प्सरसामैक्यात्पञ्चजनत्वम्। एवंविधाः पञ्च जना अप्यदितिरेव। जातं जननं प्रजानामुत्पत्तिः। साप्यदितिरेव। जनित्वं जन्माधि-

[1] Yāska has माहाभाग्य०

[2] अन्तरिक्ष—would appear to have been derived from the root *kṣi* 'to dwell'. The derivation from *īkṣ* by popular etymology led to the spelling of the word with a long *ī* in later times.

करणं [1]तदप्यदितिरेव। एवं सकलजगदात्मनादितिः स्तूयते। उक्तं च यास्केन। "इत्यदितेर्विभूतिमाचष्टे" [नि० ४।२३] इति। अदितिः। दो अवखण्डन। अस्मात्कर्मणि क्तिनि 'द्यतिस्यतिमास्थामित्ति किति'[७।४।४०] इतीत्वम्। यास्कपक्षे तु दीङ् क्षय इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वम्। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम्। स पिता। निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गतामुपाददत इत्युद्देश्यलिङ्गतया पुंलिङ्गत्वम्। जनित्वम। जनेरौणादिकस्त्वन्प्रत्ययः[2]। १०॥

सायणभाष्यम् (तैत्तिरीयारण्यकगतम्)। अदितिशब्दवाच्या देवता सर्वात्मकत्वेन स्तूयते—माता पृथिवी, अतो लोकत्रयात्मिका[2]। स देवताविशेषोऽदित्याख्यः। सर्वस्य जगतः पिता स एव पुत्रश्च। ये विश्वे देवाः सर्वेऽपि देवाः, ये च पञ्चजना निषादपञ्चमा ब्राह्मणक्षत्रियवैश्यशूद्रास्ते सर्वेऽप्यदितिरेव। जातं यत् पूर्वमुत्पन्नं जगत्, जनित्वं जननरूपो व्यापारः तत् सर्वमप्यदितिरेव॥ १०॥

1 Under RV. I. 66. 8 **यमो ह जातो यमो जनित्वम्** S. says **जनी प्रादुर्भावे। "कृत्यार्थे तवैकेन्०" इति कर्मणि त्वन्प्रत्ययः। इडागमः। नित्त्वादाद्युदात्तत्वम्।** This is the correct derivation. cf. **नही न्वस्य प्रतिमानमस्त्यन्तर्जातेषूत ये जनित्वाः** RV. iv. 18. 4, 'for there is no match for him among those who have been born nor those who will be born" —"About a dozen gerundives ... end in *-tva* which seems to be the infinitive stem in *tu* turned into an adjective by means of the suffix *-a*". Macdonell, *Vedic Grammar*. When **जनित्वम्** is accented on the final syllable as in RV. x. 18. 8 **पत्युर्जनित्वमभि सं बभूव** it means **जनेर्भावः** and is formed with the taddhita suffix *-tva*.

2 The Anandasrama edition reads: **अतो लोकत्रयात्मिकांशदेवताविशेषोऽदित्याख्यः** which is meaningless.

The word *diti* (Gk. *de-si-s*) derived from *dā* 'to bind' means 'binding'. Hence *aditi* means 'unbinding', 'boundlessness'. Aditi is thus often invoked for the release of people from all bonds—from the bonds of sin and sorrow : अनागास्त्वं नो अदितिः कृणोतु I.162.22 ; विश्वस्मान्नो अदितिः पात्वंहसो माता मित्रस्य वरुणस्य रेवतः V. 36. 3. She is the universal Goddess : या प्राणेन सम्भवत्यदितिर्देवतामयी (Kaṭhopaniṣad, ii,1.7).

## English Translation

1. May auspicious powers or good thoughts (*bhadrā'h kra'tavah*) come (*ā' yantu*) to us (*nah*) from every quarter (*viś'-v'atah*)—infallible (*a'dabdhāsah*), unhindered (*a'parītāsah*), forcing their way through [all obstacles] (*udbhi'dah*), so that (*ya'thā*) the Gods (*devā'h*) may always (*sa'dam i't*) be (*a'san*) for our increase (*vṛdhe'*)—unceasing (*a'prāyuvah*) protectors (*rakṣitā'rah*) day by day (*dive'-dive*).

2. May the gracious (*bhadrā'*)* good will (*sumati'h*) of the righteous (*ṛjūyatā'm*) Gods (*d'evā'nām*) come upon us ; may the bounty (*rāti'h*) of the Gods (*devā'nām*) descend upon (*abhi' ni' vartatām*) us (*nah*) ; we (*vaya'm*) have won (*u'pa sedima*) the friendship (*sakhya'm*) of the Gods (*devā'-nām*) ; may the Gods (*devā'h*) extend (*pra' tirantu*) our (*nah*) days (*ā'yuh*) that we may live (*jīva'se*).

3. We (*vaya'm*) invoke (*hūmahe*) them (*tā'n*) with an old (*pū'rvayā*) hymn (*nivi'dā*)—Bhaga (*Bha'gam*), Mitra (*Mitra'm*), Aditi (*A'ditim*), Dakṣa (*Da'kṣam*), the unerring or friendly (*asri'dham*), Aryaman (*Aryama'ṇam*), Varuṇa (*Va'ruṇam*) Soma (*So'mam*) and the two Aśvins (*Aś'vi'nā*); may the gracious (*su-bha'gā*) Sarasvatī (*Sa'rasvatī*) grant (*karat*) us (*nah*) happiness (*ma'yah*).

---

* Or, may the gracious good will of the Gods and the bounty of the righteous Gods descend upon us.

4. May the wind (*vā'tah*) waft (*vātu*) to us (*nah*) that (*ta't*) wholesome (*mayo-bhu'*) medicine (*bheṣaja'm*), may mother earth (*mātā' pṛthivī'*) convey it (*ta't*) to us, may father Heaven (*pitā' Dya'uh*) convey it (*ta't*) to us, may the beneficial (*mayo-bhu'vah*) soma-pressing (*soma-su'tah*) stones (*grā'vāṇah*), convey it to us. O ye wise (*dhiṣṇyā*) As'vins (*As'vinā*), you two (*yuva'm*) listen (*s'ṛṇutam*) to it (*ta't*).

5. Him (*ta'm*), the ruler (*ā's'ānam*) of all that moves (*ja'gatah*), the master (*pa'tim*) of all that stands (*tasthu'ṣah*), the inspirer of thoughts (*dhiyaṃ-jinva'm*) we (*vaya'm*) invoke (*hūmahe*) for our protection (*a'vase*) so that (*ya'thā*) Pūṣā' (*Pūsā'*) may help (*a'sat*) in the increase (*vṛdhe'*) of our possessions (*nah ve'dasām*), our protector (*rakṣitā'*) and guard infallible (*pāyu'h a'dabdhah*) for our well-being (*svasta'ye*).

6. May Indra (*I'ndrah*) famed far and wide (*vṛddha'-s'ravāh*) bestow (*dadhātu*) well-being (*svasti'*) on us (*nah*); may Pūṣan (*Pūṣā'*) possessed of all riches (*vis'va'-vedāh*) bestow well-being (*svasti'*) on us (*nah*); may Tārkṣya (*Tā'rkṣyah*) whose fellies are never injured (*a'riṣṭa-nemih*) bestow well-being (*svasti'*) on us (*nah*); may Bṛhaspati (*Bṛ'haspa'tih*) bestow well-being (*svasti'*) on us (*nah*).

7. The Maruts (*Maru'tah*) with spotted steeds (*pṛ'ṣad-as'vāh*), with Pṛs'ni as their mother (*pṛ's'ni-mātarah*), marching in splendour (*s'ubhaṃ-yā'vānah*), visiting sacrifices (*vida'theṣu ja'gmayah*), the sons of Manu (*Ma'navah*) with Agni for their tongue (*Agni-jihvā'h*) and the sun for their eye (*sū'ra-cakṣasah*),—may all the Gods (*vi's've devā'h*) come (*ā' gaman*) to us (*nah*) here (*iha'*) with their protection (*a'vasā*).

8. Ye Gods (*devāh*) may we hear (*s'ṛṇuyāma*) with our ears (*ka'rṇebhih*) what is good (*bhadra'm*); ye adorable

ones (*yajatrāh*), may we see (*pas'yema*) with our eyes (*akṣa'bhih*) what is good (*bhadra'm*). Praising Gods (*tuṣṭuvā'ṃsah*) with firm (*sthira'ih*) limbs (*a'ṅgaih*) and bodies (*tanū'bhih*) may we attain (*vy-a's'ema*) the term of life (*vat' ā'yuh*) appointed by the Gods (*deva'-hitam*).

9. A hundred autumns (*s'ata'm i't nu' s'ara'dah*) stand before us (*a'nti*), O ye Gods (*devāh*), in which (*ya'tra*) ye have made (*cakra'*) infirmity (*jara'sam*) to descend on our bodies (*nah tanū'nām*), in which (*ya'tra*) the sons (*putrā'sah*) become (*bha'vanti*) the fathers (*pita'rah*); damage ye not (*mā' rīriṣata*) our term of life (*nah ā'yuh*) in the midst of its course (*ga'ntoh madhyā'*).

10. Aditi (*A'ditih*) is heaven (*dya'uh*), Aditi (*A'ditih*) is the aerial region (*anta'rikṣam*), Aditi (*A'ditih*) is the mother (*mātā'*), she is the father (*sa'h pitā'*), she is the son (*sah' putra'h*); Aditi (*A'ditih*) is all the Gods (*vi's've devā'h*) Aditi (*A'ditih*) is the five tribes (*pa'ñca ja'nāh*); Aditi (*A'ditih*) is all that is born (*jāta'm*), Aditi (*A'ditih*) is all that is to be born (*ja' nitvam*).

## Notes.

St. 1, p. 7 note 1. Of course, this is not acc. to the traditional interpretation of vi.4.86.

St. 2. The first half may be regarded as one sentence thus: देवानां भद्रा सुमतिः, ऋजूयतां देवानां रातिः [च] नः अभि नि वर्तताम्. In the second half उपसेदिम need not be taken in the sense of लिङ्. It is the perfect indicative—*we have won the friendship of the Gods* (by our noble way of life), and so we can hope that the Gods will prolong our lives.

St. 7. Skandasvāmin and others use वार्द्धक्य after the analogy of बाल्य, तारुण्य etc. The correct from is वार्धक. It is curious that most of the commentators have tripped over

the aorist 2nd pl. of हिन्स् which is रुधादिगणीय परस्मैपदी. In लोट् the form will be हिंस्त, in लुङ् with मा—हिंसिष्ट.

St. 8. व्यशेम—The root *as'* to reach, obtain, is Ubhayapadin. In the Sāma-veda and V. Saṁhitā we get the Atm. a-aor. optative form: व्यशेमहि देवहितं यदायुः. "The active is usual with prepositions, and *vyas'ema* obviously prior to *vyas'emahi*". Bloomfield and Edgerton.

St. 8 p, 38. Even Haradatta has मृषीमहि with मा. This shows that माङि लुङ् is more honoured in the breach than in the observance in later times. This led Vāmana to distinguish between माङ् and मा—a distinction which is on a par with that between Tweedledum and Tweedledee.

St. 9. तच्चक्षुर्देवहितम्—The idea is developed in TA. iv. 42:

तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतं जीवेम शरदः शतं
नन्दाम शरदः शतं मोदाम शरदः शतं
भवाम शरदः शतं शृणवाम शरदः शतं
प्रब्रवाम शरदः शतमजीताः स्याम शरदः शतं
ज्योक् च सूर्यं दृशे ।

पुरस्तात् पूर्वस्यां दिशि। उच्चरत् उदीयमानम्। शुक्रं भास्वरम्। देवहितं देवैः स्थापितम्। ज्योक् दीर्घं कालं सूर्यं दृशे द्रष्टुं प्रभवाम ॥

It is interesting to note that सूर्यमुच्चरन्तम् corresponds exactly to Gk. *he:lion ana-tellonta.*

In transliteration a colon after a vowel indicates that the vowel is long.

श्रीसदाशिवसमर्पणमस्तु

---

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ॥

# मञ्जूषा

Feb.–May. 1952. | फाल्गुन-चैत्र-वैशाख-ज्यैष्ठानाम् षष्ठवर्षस्य षष्ठ्यादिसंख्याचतुष्टयम् | Vol. VI. Nos. 6–9.

श्रीमच्छङ्कराचार्यविरचितम्

## महावाक्यसिद्धान्तस्तोत्रम् ।

क्षणं ब्रह्माऽहमस्मीति यः कुर्यादात्मचिन्तनम् ।
तन्महापातकं हन्ति तमः सूर्योदयो यथा ॥१॥
अज्ञानाद्बुद्बुदो जातो ह्याकाशो बुद्बुदोद्भवः ।
आकाशाद्वायुरुत्पन्नो वायोस्तेजस्ततः पयः ॥२॥
पयसः पृथिवी जाता ततो व्रीहियवादिकम् ।
पृथिव्यप्सु पयो वह्नौ वह्निर्वायौ नभस्यसौ ॥३॥
नभोऽप्यव्याकृते तच्च शुद्धे शुद्धोऽप्यहं हरिः ।
अहं विष्णुरहं विष्णुरहं विष्णुरहं हरिः ॥४॥
कर्तृभोक्त्रादिकं सर्वं तदविद्योत्थमेव च ।
अच्युतोऽहमनन्तोऽहं गोविन्दोऽहमहं हरिः ॥५॥

आनन्दोऽहमशेषोऽहमजोऽहममृतोऽस्म्यहम् ।
नित्योऽहं निर्विकारोऽहं निर्विकल्पोऽहमव्ययः ॥६॥
सच्चिदानन्दरूपोऽहं पञ्चकोशातिगोऽस्म्यहम् ।
अकर्ताऽहमभोक्ताऽहमसङ्गः परमेश्वरः ॥७॥
अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् ।
इति ध्यानाश्रितो मुक्तो बद्ध एवाऽन्यथा भवेत् ॥८॥
अन्योऽसावहमन्योऽस्मीत्युपास्ते योऽन्यदेवताम् ।
न स वेद नरो ब्रह्म स देवानां यथा पशुः ॥९॥
आत्मानं सततं ब्रह्म संभाव्य विचरन्ति ये ।
न तेषां दुष्कृतं किञ्चिद्दुष्कृतोत्था न चापदः ॥१०॥
ब्रह्मैवाऽहं न संसारी मुक्तोऽहमिति भावयेत् ।
अशक्नुवन् भावयितुं वाक्यमेतत्सदा जपेत् ॥११॥
एकमासं ध्यानयोगाद् ब्रह्महत्यां व्यपोहति ।
संवत्सरकृताभ्यासः सिद्ध्यष्टकमवाप्नुयात् ॥१२॥
यावज्जीवं सदाभ्यासाज्जीवन्मुक्तो न संशयः ।
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ॥१३॥
मयि सर्वं लयं याति तद्ब्रह्मोऽस्म्यहमद्वयम् ।
नाऽहं देही न मे देहः केवलोऽहं सनातनः ॥१४॥
एकमेवाऽद्वयं ब्रह्म नेह नानाऽस्ति किंचन ।
अयं प्रपञ्चो मिथ्यैव सत्यं ब्रह्माऽहमव्ययम् ॥
अत्र प्रमाणं वेदानुभवा गुरुवचस्तथा ॥१५॥

इति श्रीमच्छङ्कराचार्यविरचितं महावाक्यसिद्धान्तस्तोत्रं संपूर्णम् ।

---

# आभाणकमालिका

1. None so old that he hopes not for a year of life.

न खलु तथाविधः कोऽपि वृद्धोऽस्ति यो वर्षमेकं जीविष्यामीति नाशंसते। अतिवृद्धोऽप्यवरतो वर्षमेकं जीवितायाशंसते।

(Lat.) Nemo enim est tam senex, qui se annum non putet posse vivere.

"अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्यमतः परम्॥"

2. Not God above
Gets all men's love.

न विष्णुरपि नाकस्थः सर्वेषां भक्तिभाजनम्।

Gr. Oude gar ho Zeus Outh' huo:n pantess' andanei out' anekho:n.

Lat. Jupiter neque pluens neque abstinens omnibus placet.

For not even Jupiter can please all, whether he rains or does not rain.

३। (व) सापेर छुँछो गेला, गिलतेओ पारे ना, ओगरातेओ पारे ना।

सपण छुछुन्दरगिलनम्। न प्रभवति निगरितुं न वोद्गरितुम्।

To hold a wolf by the ears.

Greek. To:n o:to:n ekho: ton lukon, out' ekhein, out' apheīnai dunamai.

I have got a wolf by the ears, I can neither hold him nor let him go.

# उपनिषदर्थ-विमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

बृहदारण्यकोपनिषदि [ २।१।७ ] श्रूयते—"स होवाच गार्ग्यः—य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति। स होवाचाजातशत्रुः—मा मैतस्मिन् संवदिष्ठाः। विषासहिरिति वा अहमेतमुपास इति। स य एतमेवमुपास्ते विषासहिर्ह भवति। विषासहिर्हास्य प्रजा भवति" इति।

व्याख्यातञ्चेदं भगवत्पादैः—अग्नौ वाचि हृदि चैका देवता। तस्या विशेषणं—विषासहिर्मर्षयिता परेषाम्। इति। विशदीकृतं चैतदानन्दगिरिणा—यद्धविर्विष्यते क्षिप्यते तत्सर्वं भस्मीकरणेन सहते तेनाग्निर्विषासहिरिति।

अग्नेर्मर्षणं तु लोके न प्रसिद्धम्, औष्ण्यं तेजः प्रतापः—इत्यादय एवाग्नेर्वैशेषिका गुणाः। अत एव यस्तावद् बालकः क्षिप्रमेव क्रुध्यति स्वतेजश्च प्रकटयति स एव अग्निर्माणवक इत्युपवर्ण्यते। अतोऽत्र विषासहि-शब्दस्यार्थः अमर्षयिता परेषाम्, अभिभविता परेषामिति। निघण्टावपि सहःशब्दो बलनामसु पठितः।

संहितास्वन्तरान्तरा विषासहि-शब्द उपलभ्यते, सर्वत्रैव च तस्यार्थः अभिभविता वा अभिभवित्री वा। तथाहि ऋग्वेदे [ १०।१५९।२ ] श्रूयते—

उदसौ सूर्यो अगादुदयं मामको भगः।

अहं तद्विद्वला पतिमभ्यसाक्षि विषासहिः॥ इति।

अत्र सायणाचार्यव्याख्यानम्—असौ द्युलोकस्थः सूर्यः उदगात् उदयं प्राप्तवान्। मामकः मदीयः भगः भजनीयः अयमिन्द्रश्च सूर्यात्म-

नोदगात्। यद्वा मामको भगः मदीयमिदं सौभाग्यमुदगात्। तत् उद्यतं सूर्यस्य तेजः विद्वला ज्ञातवती, यद्वा पतिं भर्तारं विद्वला लब्धवती, अहं विषासहिः विशेषेणाभिभवित्री सती अभ्यसाक्षि अभ्यभूवम् सपत्नीरिति शेषः। सहतेरभिभवार्थस्य लुङि तद्रूपम्। यद्वा विषासहिः सपत्नीनामभिभवित्री सती पतिमभ्यसाक्षि भर्तारमभ्यभूवम्। यथा मय्येव वशीकृतश्चिरं वर्तेत* तथा कार्षमित्यर्थः।

मन्त्रोऽयमथर्ववेदे [ १।२९।५ ] इत्थं श्रूयते—

उदसौ सूर्यो अगादुदिदं मामकं वचः।
यथाहं शत्रुहोऽसान्यसपत्नः सपत्नहा ॥

अत्र विस्पष्टमेव सपत्नहा (सपत्नानां शत्रूणां हन्ता) इति श्रूयते।

ऋग्वेदीये मन्त्रे 'अभ्यसाक्षि' इत्यत्र 'विषासहिः' इत्यत्र च सहधातुरुपलभ्यते—उभयत्र चाभिभवार्थकोऽयम्। पुनरपि ऋग्वेदे [ १०।१६६।१ ] श्रूयते—

ऋषभं मां समानानां सपत्नानां विषासहिम्।
हन्तारं शत्रूणां कृधि विराजं गोपतिं गवाम् ॥

इति। व्याख्याता चेयमृक् सायणाचार्यैः—

हे सपत्ननाशनाभिमानिन्निन्द्र मा मां समानानां सदृशानामस्मत्कुलीनानां मध्ये ऋषभम् ऋषभवत्प्रशस्तं कृधि कुरु। तथा सपत्नानां शत्रूणां विषासहिं विशेषेणाभिभवितारं कुरु। यऽस्मत्कुल

---

*यद्यपि मुद्रितेषु पुस्तकेषु वर्तत इति पाठो मूले दृश्यते, वर्तेत इति च क्वाचित्कः पाठः पादटीकायां सन्निवेशितः, तथापि वर्तेत इति पाठस्य समीचीनत्वे नास्ति संशयलेशोऽपि।

एव जाता अस्माकमनिष्टमाचरन्ति ते सपत्नाः। अपि च शत्रूणामन्येषामपि शातयितॄणां वैरिणां हन्तारं हिंसितारं कृधि कुरु। तथा विराजं विशेषेण राजमानं गोपतिं गोस्वामिनं च मां कुरु। न केवलमेकस्या एव गोः पतिम्, अपि तु सर्वासामित्याह गवाम् इति। इति।

पुनरपि ऋग्वेदे [ १०।१७४।५ ] श्रूयते—

असपत्नः सपत्नहाभिराष्ट्रो विषासहिः।
यथाहमेषां भूतानां विराजानि जनस्य च ॥

इति। अत्रापि सायणाचार्येण विषासहिः-पदस्य शत्रूणां विशेषेणाभिभवितेत्यर्थः कृतः। मन्त्रोऽयमथर्ववेदेऽपि श्रूयते। केवलं तत्र प्रथमः पादः—सपत्नक्षयणो वृषेति [ १०।२९।६ ]। अथर्ववेदभाष्ये सविस्तरं व्याख्यानमुपलभ्यते—विषासहिः विविधं पुनः पुनः परेषां सोढा अभिभविता॥ षह अभिभवे। अस्माद् यङन्तात् "सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्यौ" इति किप्रत्ययः। अतोलोप-यलोपौ इति।

अत्रेदमवधेयम्। सासहि-विषये भाष्ये पक्षद्वयमवलोक्यते। आदृगमहनजनः किकिनौ लिट् च [३।१।५७२] इति सूत्रे प्रथमतो भाष्यकारेण कात्यायनीयं वार्त्तिकमुपनिबद्धम्—सासहि-वावहि-चाचलि-पापतीनां निपातनम् इति, व्याख्यातं च—सासहि-वावहि-चाचलि-पापतीनां निपातनं कर्तव्यम्। वृषा सहमानं सासहिः। वावहिः चाचलिः पापतिः इति। ततश्च भाष्यकृतान्यदीयं मतमुद्धृतम्—अपर आह सहिवहिचलिपतिभ्यो यङन्तेभ्यः किकिनौ वक्तव्याविति। काशिकायामभ्यासदीर्घत्वानुरोधेन द्वैतीयीकमेव मतमुद्धृतम्।

रामायणमहाभारतादिष्वप्ययमर्थ उपलभ्यते, यथा—"परं विषहते यस्मात् तस्मात् पुरुष उच्यते" इति।

प्रसङ्गात् सह्धातुविषये किञ्चिदुच्यते। वेदादिषु प्राचीनग्रन्थेष्वभिभवार्थकः सहतिरुपलभ्यते। ततश्च यदा बौद्धधर्मस्य प्रादुर्भावः सञ्जातस्तदा परकृतावज्ञानादीनां गजनिमीलिकयाऽवधीरणमर्थः सञ्जातः। ततश्च परकृतनिग्रहस्यागतिकतया सहनमित्यर्थः सञ्जातः।

विषासहि in the Bṛhadāraṇyakopaniṣad (ii. 1. 7) is explained in the S'āṅkarabhāṣya as मर्षयिता परेषाम्. Accordingly Swami Mādhavānanda translates it by 'forbearing.' Senart translates it by 'irresistible' which is much better. But we must not be content with a negative epithet. In the Vedas, the word is used in the sense of 'overpowering others' (अभिभविता परेषाम्). So we should translate: overpowering or overwhelming or all-powerful. The sentence quoted by Patañjali is very happy: वृषा सह्मानं सासहिः The mighty one (lit. bull) overpowering him that overpowers i. e. victorious over all oppressors, the oppressor of the oppressor. The root *sah* is semantically very interesting. In the Vedas it is used in the sense of 'overpowering', then it meant 'to tolerate' and lastly it came to be used in the sense of 'to bear all affronts and indignities like a worm that never turns'.

Some later commentators have explained "prasahana" in Pāṇini's rule "adheh prasahane" i. 3. 33 as meaning toleration also !!! Vopadeva very rightly uses "s'aktau" for "prasahane".

सभासाह is explained as सभाया अभिभावकः by Saḍgurus'iṣya in एष वै ब्राह्मणानां सभासाहः सखा यत् सोमो राजा AB. iii.2.

---

# वेदार्थविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ऋग्वेदस्य सप्तममण्डले श्रूयते—

या आपो दिव्या उत वा स्रवन्ति
खनित्रिमा उत वा याः स्वयंजाः।
समुद्रार्था याः शुचयः पावका-
स्ता आपो देवीरिह मामवन्तु ॥४९।२

इति। अत्र प्रथमे पादे पक्षद्वयम्, द्वितीयेऽपि पक्षद्वयमिति स्पष्टमेव। व्याख्यातञ्चेदं वेदचतुष्टय-भाष्यकृद्भिः—या आपो दिव्या अन्तरिक्षभवाः सन्ति। उत वा अपि च या आपः नद्यादिगताः सत्यः स्रवन्ति गच्छन्ति याश्च खनित्रिमाः खननेन निर्वृत्ताः। उत वा अपि च याः स्वयंजाः स्वयमेव प्रादुर्भवन्त्यः समुद्रार्थाः*। समुद्र एवार्थो गन्तव्यो यासां ताः समुद्रार्थाः। शुचयः दीप्तियुक्ताः पावकाः शोधयित्र्यश्च भवन्ति। ता आपो मामवन्त्विति।

पाश्चात्त्यैर्व्याख्यातृभिरत्र पक्षत्रितयमेव कक्षीक्रियते, खनित्रिमा इति पदं च स्रवन्तिपदेन कर्तृतया योज्यते। तथाहि तेषां भाषान्तरारोपणम्—

Waters which come from heaven, or those that wander dug from the earth, or flowing free by nature,

Bright, purifying, speeding to the Ocean, here let those Waters, Goddesses, protect me. GRIFFITH, *The Hymns of the Rigveda*, Vol. II, p. 51.

---

* बहुषु हस्तलिखितेषु पुस्तकेष्वत्र 'समुद्रार्थाः' नास्ति। यथास्माभिर्दृश्यते तथा द्वैतीयीकं समुद्रार्था इति पदं निष्कासनीयं वा, तस्य स्थाने तथाभूता इति वा पठनीयम्।

The waters of the sky, the waters of the river, the waters of the wells ; the bright and cleansing waters, whose goal is the sea—may these divine waters protect me. PETERSON, *Hymns from the Rigveda*, p. 320.

The Waters that come from heaven or that flow in channels or that arise spontaneously, that clear and purifying have the ocean as their goal : let those Waters, the goddesses, help me here. MACDONELL, *Vedic Reader*, p. 117.

May the Waters of the sky, may those that flow produced by digging, and those that spring of themselves, the clear and purifying divine Waters that flow to the Ocean, help me. THOMAS, *Vedic Hymns*, p. 91.

"पादे पादे समाप्यन्ते प्रायेणार्था अवान्तराः" इति वचनमतीव समीचीनम् । अत एव सति सम्भवे स्रवन्तिपदेन खनित्रिमाः-पदस्यान्वयो न स्वीकरणीयः । अत एव प्राच्यविदुषामेव व्याख्यात्रादरणीयेति प्रतिभाति ।

अनेनैव न्यायेन भाष्यकृतां स्वयंजाः-पदस्य प्रादुर्भवन्त्यः इत्यर्थकल्पनमप्युद्वेजकं प्रेक्षावताम् ।

---

## कालिदासभवभूती

[ स्वर्गतद्विजेन्द्रलालरायः ]

( २ )

द्वितीयोऽङ्कः

रामस्य पञ्चवटीवने प्रवेशः, शूद्रकस्य च शिरश्छेदः । रामेण जनस्थानदर्शनम् ।

तृतीयोऽङ्कः

वासन्त्यास्तमसायाश्छायासीतायाश्च पुरतो रामस्य परिदेवनम् ।

( अङ्कस्यास्य विष्कम्भके तमसा-मुरलयोः संवादाद्विज्ञायते रामेण हिरण्मयी सीताप्रतिकृतिं सहधर्मिणीं विधायानुष्ठितः क्रतुरश्वमेध इति । ) वनवासावसाने प्रसववदनया ग्लायन्ती सीता गङ्गागर्भे पातयामासात्मानम् । पृथ्वीभागीरथ्यौ च तां पातालं नीत्वा ररक्षतुः, तस्याश्च यमजौ कुशलवौ महर्षेः पाणावर्पयामासतुः ।

चतुर्थोऽङ्कः

जनकस्यारुन्धत्याः कौशल्यायाश्च परिदेवनम् । लवेन साकं तेषां साक्षात्कारः ।

पञ्चमोऽङ्कः

लव-चन्द्रकेत्वोर्युद्धम् ।

षष्ठोऽङ्कः

विष्कम्भके विद्याधरविद्याधर्योः संवादेन युद्धस्य तस्योपवर्णनम् । -लव-कुश-चन्द्रकेतुभिः साकं रामस्य साक्षात्कारः, कुशमुखाच्च वाल्मीकिविरचितरामायणगाथाश्रवणम् ।

सप्तमोऽङ्कः

रामेण सीतानिर्वासनाभिनयदर्शनम्, रामेण साकं सीताया मेलनम् ।

भवभूतिना मूलरामायणस्याख्यानं प्रायेण लेशतोऽपि न स्वीकृतम् । प्रथमतस्तावद् रामाणयस्य रामो वंशगौरवरक्षणार्थं व्याजेन सीतां वनवासाय प्रेरयामास ; भवभूतेस्तु रामः प्रजानुरञ्जनव्रतं परिपालयन् विनैव व्याजं निर्वासितवाञ् जानकीम् । द्वितीयतः, विच्छिन्नशिरसा शम्बूकेन दिव्यमूर्तिपरिग्रहः, छायासीतया साकं रामस्य साक्षात्कारः, लवचन्द्रकेत्वोश्च युद्धं रामायणे नोपलभ्यन्ते । सर्वतोऽपि गुरुतरं वैलक्षण्यं—रामेण साकं सीतायाः पुनर्मेलनम् ।

किमिति कविभ्यां मूलमुपाख्यानं ोक्तपूर्वेण प्रकारेण विकृतिं नीतमिति साम्प्रतं विचारपदवीमवतरति ।

कालिदासस्तावच्छकुन्तलायास्तनयेन शकुन्तलादुष्यन्तयोर्मेलनं सङ्घटितवान्। अवसरेऽस्मिन् कुशलवयोः कथा कवेर्मनसि समुदितेति सम्भाव्यते। अयञ्च व्यतिक्रमः कवित्वानुरोधेन परिकल्पितः। मेलनगतं वैषम्यमपि तथाविधं कविकल्पितमेव। परं प्रधानं वैषम्यम्—अभिज्ञानमभिशापश्च तदुद्देश्येन न कल्पितम्। गरीयसाभिप्रायेण कविना तदवतारितम्।

अभिज्ञानस्यास्य दुर्वाससोऽभिशापस्य च शकुन्तला-नाटके सन्निवेशस्यैकं तावत् फलं सञ्जातं दुष्यन्तस्य कलङ्कमोचनमिति पश्यामः। यस्तावत् कालिदासेन स्वीयनाटकस्य नायको विहितः, मूलोपाख्यानेऽसौ लम्पटो नरपतिः। स हि बहुपत्नीकः, मधुमत्त इव मधुकरः पुष्पात् पुष्पं विचरति। स खलु सुन्दरकुसुमकलिकादर्शमेव तत्रोत्पतेदिति किमिवात्राश्चर्यकरम्। स च मुग्धाया बालिकायाः प्रकारान्तरेण धर्मनाशं विधाय पलायनं समाश्रयेदित्यपि सर्वथा स्वाभाविकमेव। ततश्च राजसभायां वान्तःपुरे वा लज्जाकरं तं व्यापारं नैव प्रकाशयेदित्यपि नैवास्वाभाविकम्। परं कालिदासो दुष्यन्तं धार्मिकप्रवरकर्तव्यपरायणनरपतिरूपेणाङ्कयितुं प्रयासमास्थितवान्। अत एव कालिदासो द्विस्तावत् तं कलङ्कान्मोचितवान्। प्रथमतो गान्धर्वविवाहेन, द्वितीयतश्च अभिज्ञानाभिशापाभ्याम्।

नाटकेऽस्मिन्नुपवर्णितस्य दुष्यन्तचरित्रस्य मानसाणुवीक्षणयन्त्रेण पर्यवेक्षणे सर्वथा रसिकपुरुषतयैवासौ प्रतिभाति। तस्य च कण्वाश्रम आतिथ्यस्वीकरणेन साकं वैखानसमुखनिःसृतस्य "दुहितरं शकुन्तलामतिथिसत्काराय नियुज्ये"ति वचनस्य कश्चन सम्पर्कविशेषो वर्तत इति कविनानुक्तमपि वाचकेन विज्ञायत एव। अनेन खल्वाकारान्तेन प्रातिपदिकेन समुद्दीपितो राज्ञः कौतूहलविशेषः। राज्ञा यत् प्रत्युक्तम्, भवतु तां द्रक्ष्यामि—न खलु तत् सर्वथा तटस्थतयेति विभाव्यम्।

तथाच सखीजन-समभिव्याहृतां शकुन्तलामाश्रमोद्याने सन्निरीक्ष्य तेन यच्चिन्तितम्—दूरीकृताः खलु गुणैरुद्यानलता वनलताभिस्तदपि न खलु सर्वथा कलाविदेव चिन्तितम्। तथा चेत् तर्हि तदनन्तरमेव "छायामाश्रित्य" निगूढसन्दर्शनस्य किं तावत् प्रयोजनमासीत्? यत्रैव मनसि पापं तत्रैव सङ्गोपनचौर्यम्। स खलु तस्कर इव निगूढमवस्थितः सखीत्रयस्य संवादेन का वा शकुन्तलेति यदा व्यजानात्, तदा रत्नमेवंविधम् "आश्रमधर्मे नियुङ्क्ते" इति कण्वमुनिं यद् "असाधुदर्शी"ति व्यपदिष्टवान्, न खलु तच्चित्ते करुणरससमुद्रेकस्य फलम्। तेन खलु पादपान्तरितेन तापसी बाला सन्दृश्यते विचिन्त्यते च—

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना बन्धनेन।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण॥ इति।

अपि पश्यति भवान् वाचकमहाभाग क्व वा राज्ञः प्रधानतो लक्ष्यम्। अनन्तरमेव सुविस्पष्टोक्तिः—"अभिलाषि मे मनः" इति। वाचकस्य सर्वे संशयाः समुत्सारिताः।

परं विषमेऽस्मिन् सङ्कट दुष्यन्तं सुतरां रक्षितवान्कालिदासः। लालसया प्रदीप्तोऽपि नरपतिः शकुन्तलया साकं स्वस्य परिणयव्यापारमेव विचिन्तयति। स च शकुन्तलायाः प्रभवं भविष्यच्चाधिकृत्य पृच्छति च विचिन्तयति च—"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति। ततश्च यदा तेन विज्ञातं—शकुन्तला मेनकाया गर्भसम्भवा विश्वामित्रस्य दुहिता, तदा तस्य मनस्तो महीयान् भारोऽपगतः, तेन च स्वगतमुक्तम्—आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नमिति।

अत्र च कविना प्रदर्शितम्—कामं राजा कामुको न पुनरसौ लम्पटः। मानसेऽस्मिन् विप्लवे न खलु पर्यहीयतासौ मनुष्यत्वेन, नापि वा कामान्धोऽप्यसौ पर्यभ्रश्यत विवेकेन। काममसावुपोषिताभ्यां नयनाभ्यां शकुन्तलां निरीक्षते, काममसौ तापस्या बालायाः सन्दर्शनमात्रत एव तां स्वस्यैवोपभोग्यां सम्भावयति, तथापि शकुन्तलया साकमात्मनो विवाहमेवासौ विचिन्तयति। तदा विजानीमः,—यदेव भवतु, न खल्वसौ बालिकां भ्रष्टां विधाय पलायितुमीहते, सङ्कल्पश्चास्य साधुरेवेति।

नूनं कामकवयो विवाहव्यापारं नितान्तत एव गद्यमयं सम्भावयन्ति। दिव्ये प्रेम्णि विवाहस्तावदन्तराय इव। तेषां मतेन विवाहो नाम नितरामनावश्यक एवावकरः। न खलु काव्ये लेशतोऽप्यस्य स्थानं वर्तत इति तेऽभिप्रयन्ति।

Platonic love व्यापारे (मानसप्रेम्णि) विवाहो निष्प्रयोजनः, नात्र सन्देहस्यावकाशः। तस्य हि भविष्यदितिवृत्तं तत्रैव प्रेम्णि पर्यवसितमिति। परं यत्र शारीरं मेलनं तत्र विवाहविधिरपरिहार्य एव। विवाहाभावे मेलनमिदं पाशव-व्यापारमात्रे पर्यवस्येत्, प्रेमव्यापारश्च कर्तव्यताज्ञानविरहितायां कामसेवायां परिणमेत्। विवाहो बोधयति—न खलु मेलनमिदमद्यतनमेव, न खलु क्षणिकसम्भोगमात्रमिदम्। वर्तत एवास्य महत्यायतिः, मेलनमिदं समग्रस्य जीवनस्य व्यापारः। विवाहो बोधयति—नारी खलु न केवलं भोग्यैव परं सम्मानार्हा। विवाहो नाम गृहे सुखस्योत्सः, सन्तानस्य कल्याणनिदानम्, सामाजिकमङ्गलस्याभ्युपायः। न केवलं व्यक्तेरेव शान्तिः परं समग्रस्य समाजस्यैव शान्तिरस्यामायतते। विवाह एव कुत्सितं कामं सौन्दर्येण मण्डयति, उद्दामायाः प्रवृत्तेर्मुखे रश्मिं नियच्छति, विश्वसृष्टिं च स्वर्गाभिमुखे समाकर्षति। पशूनां मध्ये विवाहो

नास्ति, असभ्यजातीयानां मध्ये विवाहो नास्ति । विवाहः खलु फलं सभ्यतायाः । नायं कुसंस्कारः, न चायमवकरः, नापि वा विपत्तिः ।

अपि तावत् काव्ये विवाहस्यावकाशो नास्ति ? किं तर्हि काव्ये उच्छृङ्खलकामसेवनस्य, नग्नमूर्तिसन्दर्शनेनोद्दीपितलालसायाः समुत्तेजनस्य, पाशव-संयोगसम्भूतस्य क्षणिकस्य चोन्मादस्यैवावकाशो वर्तते ? विवाहव्याजेनापि काव्येष्वमीषां व्यतिकराणां वर्णनं न्यक्कारजनकम् । सर्वेष्वेव महाकाव्येषु बीभत्सोऽयं व्यापारो गम्यमान एवावतिष्ठते । केवलं भारतचन्द्र इव कामकवयस्तस्योपवर्णनेन परममानन्दमभिविन्दन्ति । अन्तरेणापि विवाहं व्यापारस्यास्योपवर्णनं व्याधिग्रस्तस्य मस्तिष्कस्य विकार एव ।

महाभारतकारोऽपि विवाहमिमं काव्येऽपरिहार्यं विवेचितवान् । न खल्वसौ पाशवं सङ्गममुपवर्णितवान् । कालिदासश्च महाकविरेवासीत् । तेन दृष्टम्—कर्तव्यताज्ञानविरहिता लालसा नैव शोभना, कुत्सितैव सा । न खल्वसौ कुत्सितमङ्कयितुं प्रवृत्तः, सुन्दरमेवाङ्कयितुं प्रवृत्तोऽसौ । अत एव तेनाप्यत्र विवाहोऽपरिहार्योऽमन्यत । चन्द्रमा रम्यः, गगनं रम्यम्, कुसुमं रम्यम्, निर्झरिणी रम्या, नार्या आकर्णविश्रान्तं नयनयुगलं रम्यं सरसश्च रक्तोऽधरो रम्यः । परं मनुजस्यान्तःकरणगतरम्यतायाः पुरतो रम्यत्वमिदं म्लानिमापद्यते । भक्ति-स्नेह-त्याग-कृतज्ञता-प्रभृतीनां स्वर्गीय-सुषमायाः पुरस्तान्नार्याः सुवृत्तौ बाहू स्फीतं च वक्षः व्रीडामेवानुभवन्ति । किं वास्ति रम्यतरं कर्तव्यताज्ञानात् ? कर्तव्यताज्ञानमिदं लालसामप्युद्भासयति, बीभत्समपि कामं सौन्दर्येण विमण्डयति । विवाहं वर्जयित्वा लालसा चेद्वर्ण्यते, नैव वर्णनं तद्रम्यं भवति, कुत्सितमेव भवति । यत् कामिनां परितोषायैव तद् भवति, तत्र बीजं न खलु तेषां रम्यत्वं परं तेषां कामोद्दीपकत्वम् ।

स्थलान्तरेऽपि कविना दुष्यन्तोऽतिमात्रं परिरक्षितः। यदा तावद् राजधानीं प्राप्तो राजा शकुन्तलां विस्मृतवान्, तदा हेलयैव तेन पत्नी प्रत्याख्याता। कामुको जनः, विशेषतश्च बहुपत्नीकः सर्वथैवमेव विदधाति। परं कविरभिज्ञानेनाभिशापेन च दुष्यन्तं रक्षितवान्। गमनावसरे शकुन्तलायै यत् स्वनामाङ्कितमङ्गुरीयकं प्रदत्तं ततो विज्ञायते दुष्यन्तः शकुन्तलां तदात्व एव धर्मपत्नीत्वेनाभ्युपगतवान्। अभिशापतश्चास्माद् विज्ञायते न खलु राज्ञो विस्मृतिरियं लम्पटस्य विस्मृतिः, दैवकृतैवैषा, नात्र राज्ञः किमपि स्वातन्त्र्यमासीत्। किं बहुना, धर्मभयमेव शकुन्तलायाः प्रत्याख्यानस्य कारणमिति कविना प्रदर्शितम्। विषयोऽयं कविनेत्थं नाटके सम्प्रवेशितः। चतुर्थेऽङ्के विरहविधुरा शकुन्तला दुष्यन्तस्य चिन्तायां निमग्नासीत्। दुर्वाससा समागत्योक्तम् "अयमहं भोः" इति। न खल्विदं प्राविशच्छ्रवणविवरमन्यमनस्कायाः शकुन्तलायाः। अनन्तरमेवानसूयया श्रुतं—दुर्वासाः शपति

विचिन्तयन्ती यमनन्यमानसा
तपोधनं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव॥ इति।

अनसूययावलोकितं महर्षिर्दुर्वासाः शकुन्तलां शप्त्वा प्रस्थित इति। सा द्रुतं समुपगत्य महर्षेः पादयोर्निपत्योक्तवती, बालेति वीक्ष्य मृष्यतामपराधो नः प्रियसख्या इति। अन्ततश्च प्रसादमुपगतेन दुर्वाससोक्तम्—कस्याप्याभरणस्याभिज्ञानरूपेण सन्दर्शनेन राज्ञः स्मृतिरुन्मिषेत् इति। ततश्च शकुन्तलायाः पतिगृहगमनावसरे अनसूया वा प्रियंवदा वा नैव न्यवेदयच्छापवृत्तान्तं शकुन्तलायै। गमनसमये स्वत एव समुद्विग्नायाः शकुन्तलाया मनस्यलमाशङ्कासमुत्पादनेनेति विमृश्य गोपित एव

तद्वृत्तान्त एताभ्याम् । केवलं गच्छन्त्यै शकुन्तलायै दुष्यन्तदत्त-मङ्गुरीयकं प्रदर्श्योक्तम्, यदि तावद्राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्, अभिज्ञानमिदं तस्मै प्रदर्शनीयमिति ।

इदमेवाभिज्ञानं मूलं शकुन्तलानाटकस्य । परमन्तरेणापि दुर्वाससः शापमभिज्ञानवृत्तान्त आमूलान्तं नाटकेन समवदिष्यत, केवलं दुष्यन्तस्य धर्मदारपरित्यागिलम्पटरूपेण चित्रणमावश्यक-मभविष्यत् ।

भवभूतिरपि सक्रुद्रामस्य रक्षणायैवंविधं कौशलमवलम्बितवान् । वाल्मीके रामः स्वकुलगौरवपरिरक्षणार्थं कैतवेन पतिप्राणां सीतां निर्वासितवान् । भवभूतिना दृष्टं तावता रामस्य चरित्रमाबिलं भवतीति। सर्वत्रैव न्यायविचारः परमो धर्मो नृपतीनाम् । तस्य सविधे—एकत्र समग्रं विश्वमपरत्र च न्यायविचारः । प्रध्वंसतां कुलम्, प्रध्वंसतां राज्यम्, न खलु कदापि निरपराधां दण्डयिष्यामि—तस्य मानसेन भावेनेदृशेनैव भवितव्यम् । कुलगौरवसंरक्षणं दुहितुश्च पात्र प्रदानं धर्म एव । परं ततोऽप्युच्चतरो धर्मो न्याय्यो विचारः । जानात्येव रामः—सीता निरपराधेति । यस्तावन्नरपतिः स्वकुलगौरवपरिरक्षणार्थं निरपराधां निर्वासयति न खलु लेशतोऽपि तस्य वंशगौरवं भवति परिरक्षितं स खलु सपरिजनो निर्वंश एव सम्पद्यते । भवभूतिना दृष्टम्—न खल्वनन रामेण कार्यं मे सेत्स्यतीति । अत एवाष्टावक्रस्य पुरतो रामेण प्रतिज्ञापितवान्—

स्नेहं दयां तथा सौख्यं यदि वा जानकीमपि ।
आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा ।। इति ।

भवभूतिना दृष्टं प्रजारञ्जनरूपराजधर्मस्य परिपालनार्थं रामेण निर्वासिता निरपराधा सीता । एवमेव भवभूतिना यावच्छक्यं रामस्य चरितं दोषनिर्मुक्तं विहितम् ।

अन्यत्रापि भवभूतिना परित्रातो रामः। पुण्यात्मा किल नरपतिः शूद्रकः, स किल शिरश्छेदानन्तरं दिव्यां मूर्त्तिं परिगृह्य रामं समुपस्थाय तस्मै जनस्थानं प्रदर्शयितुं प्रवृत्तः—न खलु रामायणवृत्तान्त एवंविधः समुपलभ्यते। रामायणस्य रामः शूद्रः सन् शूद्रकस्तपोऽतप्यतेति तमवधीत्। भवभूतिना दृष्टम्—सर्वथाविचार एवायम्। पुण्यकार्यस्य कृते प्राणैर्दण्डनम्! अनेन रामेण कार्यं न सेत्स्यतीति। अत एव तस्य रामः कृपया खड्गेन शूद्रकं पापादमोचयत्।

किन्तु कविद्वयस्यैवंविधाचरणस्य सविशेषं कारणं वर्तते।

प्रथमतस्तावत् संस्कृतभाषायाम् अलङ्कारशास्त्रसमाख्यः शास्त्रविशेषो विलसति, सुमहानपि कवयिता नैव प्रभवति तं समुल्लङ्घयितुम्। पुरा किल सर्वैरेव शास्त्रमनुवर्तनीयमासीत्। ये तावन्निरीश्वरवादिनो बभूवुः, किं बहुना यैस्तावद्वेदविरोधीनि मतानि प्रचारितानि तैरप्यवरतो मुखेनापि वेदस्य प्रामाण्यं स्वीकर्तव्यमासीत्। आभ्यामपि कविभ्यां तदलङ्कारशास्त्रमनुवर्तितम्। शास्त्रस्यास्य विधानमेकं यथा—यस्तावन्नाटकस्य नायकः स सर्वगुणान्वितो दोषरहितश्च विधातव्य इति।

अत्र केचन विप्रतिपद्येरन् विधिरयमतीव कठोरः, नाटककृतः स्वातन्त्र्यमनेन कुण्ठ्यते इति। परं गानस्य तानः, नृत्यस्य भङ्गिः, पद्यस्य छन्दः, सैन्यस्य गतिः, सर्वेषामेव महतां पदार्थानां सुबद्धो विधिर्वर्तते। निरङ्कुशा इति कवयोऽपि विधेस्तस्य शासनं लीलयोल्लङ्घयितुं नालं भवन्ति।

विधिर्वर्तत इत्येव काव्यं नाटकञ्च सुकुमारकलायामन्तर्भवति। विधिर्वर्तत इत्येव काव्ये एतावत् सौन्दर्यम्। साम्प्रतं विधिरयं समीचीनो वा न वेति विचार्यम्।

( क्रमशः )

# पताकास्थानम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

विदितमेवैतत् प्रायेण प्रियपाठकमहाभागानां यत् तारकासुरेण निपीड़िताः सुरगणा ब्रह्माणं शरणमीयुः। परमेष्ठिना च प्रोक्तम्—महेश्वरस्य तनय एवासुरपुङ्गवं तं शमयितुमलं नान्यः कश्चित्, अत एव—

उमारूपेण ते यूयं संयमस्तिमितं मनः।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लौहवत् ॥

इति। ततश्च विषयऽस्मिन् सुविषमे मन्मथ एव नः समीचीनः सहाय इति निश्चित्य महेन्द्रो मदनं सस्मार। तेन च तदात्व एव समुपस्थाय वासवेन स्वासनसन्निकृष्टं समुपवेशितेनोक्तम्—किमर्थं भवताहूतोऽस्मि। ब्रूहि कतमः सुरो वासुरो वा ते पीड़ाकारणम्।

तव प्रसादात् कुसुमायुधोऽपि
सहायमेकं मधुमेव लब्ध्वा।
कुर्यां हरस्यापि पिनाकपाणे-
धैर्यच्युतिं के मम धन्विनोऽग्रे ॥ [कुमारसम्भवे ३।१०]

इति। अत्र देवानां मन्त्रणमजानतापि मदनेन 'अलमस्मि पिनाकपाणेरपि पराभवाय' इति यदुक्तं तद् वाचकानां विदितप्रकरणानामतीव प्रमोदं सञ्जनयति।

एतच्च होमरकविविरचितस्येलियदकाव्यस्य प्रारम्भं संस्मारयति। देवस्य सवितुः प्रियपुरोधसो दुहिता ग्रीक्वीरैरपहृत्यगामेमनन-महोदयाय प्रदत्ता। पुरोधसा महार्घ्योपायनपाणिनानुनीतोऽसौ ग्रीक्वीरस्तमरुन्तुदैर्वचनजालैरभिघ्नन् दूरमुत्सारितवान्। निपीड़ितस्य तस्य प्रार्थनेन

देवः सविता ग्रीसीयशूरेषु महामारीं व्यसृजत्। ततश्च प्रध्वंसितप्रायैर्ग्रीसीयैर्निमित्तज्ञो देवानां कोपकारणं विवरीतुमभ्यर्थितः समुवाच— अभयं चेद्दत्थ यूयं तर्हि तथ्यं विवृणुयाम्। मम वचनेन सर्वेषां ग्रीसीयानामीश्वरः कोपं गच्छेत्। को वा प्राकृतो जन ईश्वराणां प्रातिकूल्यमाचरन् प्रभवेत् क्षणमपि जीवितुमिति। ततश्चाखिलसमहोदयेन सान्त्वपूर्वमभ्यभाषि, अलं भयेन। शपेऽहं देवेन सवित्रा, मयि जीवति न न खलु कोऽपि तवानिष्टमाचरितुं प्रभवेत्, सोऽस्माकमधिपतिरागामेमननो वा भवतु, अपरः कोऽपि वा भवत्विति। अत्राविदितसवितृवृत्तान्तेनाप्यखिलसवीरेण यत्तन्नाम्नैवाभयवचनमुदीरितं तत् कमपि वैचित्र्यविशेषं पुष्णाति। एतदप्यत्रावधेयम्। यद्यपि निमित्तज्ञेन नृपतेर्नाम न निर्दिष्टम्, तथापि तस्य भाषणतस्तदभिप्रेतो नरपतिरागामेमनन एवेति प्रतीयते, अतो नैतत्तथाविधां चारुतां धत्ते। कुमारसम्भवे पुनर्मदनस्य सविधे लेशतोऽपि महेश्वरस्य नाम केनापि नोदलेखि, न वा पितामहस्योपदेशो व्यवारि, तथापि तेन स्वत एव पिनाकपाणेरपि धैर्यच्युतिं घटयेयमित्युक्तमित्यहो वैचित्र्यातिशयः।

---

**e: gar oiomai andra kholo:semen, hos mega panto:n*
*Argeio:n krateei kai hoi peithontai Akhaioi.*

For, methinks I shall make wroth a man who rules mightily over all the Argives, and whom the Achaeans obey.

*Tharse:sas mala eipe theopropion, hoti oistha,*
*ou ma gar Apollo:na diiphilon, ho:i te su, Kalkhan,*
*eukhomenos Danaoisi theopropias anaphaineis,*
*ou tis emeu zo:ntos kai epi khthoni derkomenoio*
*soi koile:is para ne:usi bareias kheiras epoisei*
*sumpanto:n Dano:n, oud' e:n Agamemnona eipe:s,*
*hos nun pollon aristos Akhaio:n eukhetai einai.*

# स्वाप्निकव्यामोहः

[ पण्डिता श्रीमती क्षमा देवी ]

अकस्मादुत्थितो झञ्झावातः प्रचण्डः। मृदुलधवलवालुका-पटलेनापह्नुतः सर्वतो दृष्टिगतप्रदेशः। प्रभञ्जनवात्योद्धताभी रेणुकाभिः शुष्कशीर्णपत्रनिकरैः पुनरेष द्वैगुण्यं प्राप्य कुटिलाकाशे धूसरपीतवर्ण-समुच्चयः सरभसं विदूरमम्बरान्तः सहसावपत्याधश्च घूर्णयन्मानवान-नविवराणि सर्वाणि पर्यपूरयन्नयनयुग्ममन्धीचकार, उच्छ्वासं च प्रत्यरुणत्। सायन्तनोऽन्धकारस्ततोऽपि द्विगुणितो मेघमालाभिः। अध्वनः सूक्ष्मरेखा भीषणनिर्जलमरुस्थल्यां सर्पन्ती शून्यशिखिरश्रेणीतः शिखरश्रेणीम्, अरण्यादरण्यानि प्रचण्डोष्णसिकतास्वकाण्डे खण्डिताभूत्। नास्ति सरलो मार्गो नाविषमा भूमिर्वा, नावलोक्यते पन्थाः कोऽपि वा। यस्मिन् विलक्षणमिदं प्रयाणं मयाङ्गीकृतमासीत्सोऽपि महासार्थः क्रमेण क्षीणक्षीणोऽभूत्। मामन्तरा च सार्थवाहेन सह सर्वेऽपि यात्रिका एकैकशस्तिरोऽभवन्। अतिश्रान्तः पिपासाकुलो दाशेर एवावशिष्टो मे सहायः। अत्यल्पान्नसामग्रीभाक् परिमितान्नं भोजं भोजं पर्य-वसितनिखिलान्नांशः प्रतिघटिकं जलबिन्दुभिः स्वल्पैरात्मानं परितोषयन् न चिरात्क्षीणक्षीणगात्रस्ततश्चावसन्नसत्त्वः समभवम्। असहायः सन् गात्रचालनाक्षमः क्रमेण जड़तां नीतोऽहम्। रेणुरूषितरोमकुहरो झञ्झा-वातोत्स्फालितमृत्ताड़ितोऽसह्यवदनामर्दितमस्तकः प्रमथितपिपासा-कुलीभूतो मृतप्रायः स्थितवानहमेकाकी। परं दृढ़सङ्कल्पोऽहमभीष्ट-

---

Take good heart and speak out what oracle soe'er thou knowest, for by Apollo, dear to Zeus, to whom thou prayest, Calchas, and declarest oracles to the Danaans, no one, while I live and have sight on the earth, shall lay heavy hands on thee beside the hollow ships, no one of the whole host of the Danaans, even if it be Agamemnon thou meanest, who now declares himself far the best of the Achaeans.

स्थलाभिगमनान्न व्यरमम्। अथानवरतं वालुकाघनराशिभिः प्रहतः प्रचण्डवातार्धशीर्णपटकुटीरे गतिमन्यामपश्यन्नशयिषि जोषमधोमुखः। तदारभ्य किमकरवं क्वासं किमुपनतं मे केनावलोकितः कियन्तं वा कालं नष्टसंज्ञः स्थितोऽहमिति न मनागपि किमपि तत्स्मृतिसरणिमायाति सम्प्रति। अद्वितीयः पटकुटीरे शयित एकविषयमात्रमधिकृत्य ध्यायं ध्यायं युगकल्पं कालमवास्थिषि। अभूत्प्रस्तुतमुद्दिश्य किञ्चित्पुरातनगिरिकन्दरं साद्भुतेतिहाससमुच्चयम्। यच्च चिरात्सैकतमरुप्रदेश इयत्कष्टकरप्रवाससाहसाय मां व्यलोभयत् तदद्भुतेतिहासश्रवणरोमाञ्चिताङ्गं मां तथेह समाह्वयद्यथा वार्धकागमाद्दीर्घप्रयाणस्य कष्टं सोढुमक्षमो भवेयमिति प्रागेव तद्द्रष्टुं समुत्कण्ठोऽभवम्। परमिदानीं नैकतिथं कालं प्रचण्डोष्मदन्दह्यमानशरीरः पर्यटन् विजने प्रदेशे स्वाशयनिष्पत्तेरसम्भवभावनया भग्नमनोरथो विमनस्कश्चाभवम्। तत्प्रथितगुहामाहात्म्यं यन्मया पुनः पुनः साम्रेडं मनसा दृष्टिविषयः कृतमासीत्तदिदानीं काल्पनिकमेव मे प्रत्यभात्। मदभीष्टस्थानसन्दर्शनासाध्यतां मन्वानो निराशया विदीर्णहृदयोऽभवम्। दुरापाशयस्यास्य रहस्यं यन्मां पूर्वं बद्धाशं व्यधात् तदिदानीं प्रखरातपतप्तसिकतासु शयानं मां व्यडम्बयत्। पर्यन्ते मदीया क्लेशमयी विचारसरणिः सहसा खण्डितासीत्प्रशान्तता च सद्यो व्यराजत। सर्वतः शून्यशून्यता। निःशेषतः स्मृतिलोपोऽपि।

अथान्धीकुर्वतः सिकतासमुच्चयादाविरभूत्कश्चिद्विशीर्णगात्रः प्रवयाः प्राचीनतममनुजमेथूसेलाख्यसमवयस्क इव। हिमाचलहैमशिखरसहोदरसान्द्रजटाधारी मुनिवेषोऽयं तापसोऽङ्गारप्रतिमनयनो महातेजा मन्दपदेन मामुपेत्य गभीरदृशा निरीक्ष्य मां क्षणं तूष्णीं स्थितवान्। विनष्टासोः पुनः पुनः समाप्तजीवितस्य कस्यचिन् मनुष्यस्यालोकनेनेव क्वचिदप्रत्ययं क्वचिद्विस्मयं सूचयता विशालनयनयुग्मेन मामनिमिषं

न्यरूपयत्। तद्वलिनग्रीवाया अवलम्बमाना रुद्राक्षमालातिदीर्घोपयोगादिव जीर्णप्राया तत्तुहिनश्वेतकूर्चः प्रतिक्षणविगलत्कचतन्तुः कृशतां भेजे। तथापि प्राप्तेदृगवसादचिह्नस्य वलिनभूतस्यानने तस्य प्रत्यभादात्मसंयमप्रशान्तताभक्तिवैराग्यादीनां किमपि निदर्शनं तेजो विस्मयकारकम्। सूक्ष्मं निरीक्ष्यमाणायां दृशि तस्य व्यराजत स्थैर्यानुकम्पौदार्यादिगुणरत्नसन्दोहः। अथ मुहूर्तं मरुस्थली विचक्षणपरिवर्तनमवाप। सर्वमप्यस्फुटं स्पर्शागोचर इव ददृशे। श्वेतसिकतावर्तो मज्जीर्णकुटीरमास्फालयन् तदसंख्यविवरान्तर्लब्धप्रवेशः सवेगं पर्यभ्राम्यदभितः। पुञ्जीभूतवालुकासन्दोहेन क्षणार्धमन्धीकृतः सम्भ्रान्तचेता निश्चलश्चाहमवास्थिषि। पलितशिरा गलितवयस्कोऽयमध्वगः पितृवनादुत्थित इव प्रत्यभान्मे। नेदिष्ठतामुपेतस्य तस्याकारः काल्पनिक इव बभौ। अविश्वासोत्क्षिप्तं स्मृतिलोपाभिभूतं प्रचण्डालापात्पिपासार्दितकण्ठं स्थविरस्यास्य पृच्छासूचकं निरीक्षणं मामसंवादिनमकरोत्। क्वाद्यतनसमये गन्तुमुद्यतोऽसीति पप्रच्छ ष आयताक्षियुगलेन तूलशुभ्रमसृणभ्रूलताच्छादितेनाविरतं निरूपयन्माम्। सुवर्णमयीं नगरीमिति कथमपि समुदीरिते मया स नितम्बनिहितकरो लोलश्वेतकूर्चो दयार्द्रस्मितास्यः प्रवया इङ्गितेनैव सुवर्णनगरीं प्रति मत्कल्पितां यात्रामभ्यनन्दयत्। ततश्च मधुरया गम्भीरया च गिरा प्रोक्तवान्। आ! सुवर्णपुरीम्? अद्भुतनगरीम्? यात्रेयं पवित्रीकरिष्यति तवात्मानम्। अप्यस्ति ते विश्वासोऽद्भुतचमत्कारे सुवर्णनगर्यास्तत्पवित्रगिरिकन्दरे च। इति स्वप्रतिपादनस्य साक्षात्कारादिव मां वशीकर्तुमिवाप्राक्षीत्सः। अपाठि मया तन्माहात्म्यस्य वर्णनमित्यस्पष्टमवोचम्। अपि जातुचित्पृष्टस्त्वयात्मा किमिति सुवर्णपुरी जीवनाखिलसुखोपपन्ना स्यादिति। पुनः स प्रवया मामन्वयुङ्क्त। किमिति सा व्याधिदुर्भिक्षविप्लवविमुक्तेति। शिरो यावद्विधूयते मया तावत् स्ववचसोच्चैरुच्चैः

समद्धत इव तत्स्मतिसौन्दर्योर्ध्वपदमारूढ़ इव प्रत्यभात्। क्षणोत्तरं सुवर्णपुरातिहासमाख्यातुमुपाक्रमतातिगम्भीरगिरा—"अहो सुवर्णनगरी बभूवकदा निरानन्दा मरुस्थलीव यावन्न पवित्रीकृतासीत्केनापि दिव्यशक्तिना सिद्धात्मना। सततमुदासीनानामपि प्रतनुप्रभावाणां सान्निध्यात् तपस्विनां दुःसहं दुःखमपनीयते, किमुतेदृशानां सन्तोषामृततृप्तानां सिद्धिमार्गोपदेष्टॄणां महात्मनाम्। विपद्ग्रस्तामबलामभ्यरक्षदात्मानं निर्माष्टुं धरातलमागतः साक्षाद्विष्णुरिव स पुण्यात्मा।" इत्युक्त्वा क्षणार्धं स व्यरमत्साकल्येन स्ववृत्तान्तं मच्चेतसि दृढं निवेशयितुमिव। ततोऽभ्यधात्पुनः। "दिव्यपुरुषोऽयं नूनं सत्याय धर्माय च स्वप्राणानुपाहरत्। मद्वचसि श्रद्दधासि चेन्मामनुव्रज, अहं ते सुवर्णनगरीं दिव्यकन्दरं च त्वां नयेयम्।" इति साग्रहं निर्दिष्टवति तस्मिन् सद्यः समुत्थाय तमेनं मरुप्रदेशमन्वसरम्। तं सम्प्राप्य, किञ्चित्पर्यटनं च कृत्वा पश्चिमोत्तरदिशि शुष्कविजनवनस्पतिविरहितस्य पर्वतस्याधो विशालां नगरीमेकामद्राक्षम्। तन्मन्दिराणां सुवर्णशिखराणि अश्रित-प्रदोषे देदीप्यमानानि दूरात्सन्तप्तचामीकरदीप्तय इव चकासिरे। अस्माकं पुरो वर्त्मनोर्द्वयोरेकतरो दीर्घश्वेतरिक्तः सुवर्णनगरीमध्यगच्छदन्यश्च विपिनगुल्मावृतः प्रति कन्दरम्। मदीयमार्गदर्शकोऽत्र क्षणं प्रतीक्ष्याग्रवर्तिनं विस्तीर्णं प्रदेशं निरूपयन् गिरिगह्वरगामिनमध्वानमगृह्णात्। दुग्धधारयेव धवलित इव ज्योत्स्नया पन्था दिवाकर-प्रचण्डतापतप्तः शनैः शनैः शैत्यमभजत्। प्रदेशस्यास्य प्रशान्तता न चिरात्प्रवयसो मुखाच्छ्रोष्यमाणेतिहासवैलक्षण्यं प्रागेवासूचयत्स्फुटम्। यथा यथा विशालशाखिसङ्कुलं दुस्तरारण्यमगाहिष्वहि तथा तथा स्वप्नदृष्टस्थलस्य प्रत्यक्षदर्शनेनेव विस्मयादिभावनाभिः काभिरप्यभिभूतोऽहम्। अथानतिदूरं गत्वा कन्दरस्योपगढं शिखरं गन्धसारसुरभितं समासादितमावाभ्याम्। पुण्यगर्भागारे प्रवेशात्प्राक्

पादुके अपनय चेतसश्च सर्वप्राकृतविचारान् निष्कासयेति दक्षकरतर्जन्यङ्गुष्ठाभ्यां कूर्चं परामृशन् गम्भीरस्वरेण मामादिशत्। मयाप्यनुष्ठिता झटिति तदाज्ञा। अथ यावद् गुहायास्तमोमयीं शैवालाच्छादितां दृषत्सोपानपंक्तिमवारोहाव तावत्तस्याः समाधिसदृश्या निःशब्दतया निष्प्रभत्वेन गाम्भीर्येण च महाविस्मयाकुलोऽभवम्। अहो परःशतवर्षीयकालात्ययेन नावगाह्यं शाश्वतं च स्यात् पुनर्गर्भागारमेतदित्यतर्कि मया साश्चर्यम्। मदीयमार्गदर्शकस्य पदमनुचरन्महापरिणाहमणिशिलामयीं पुरुषस्य मूर्तिं शुभाशिषो वितरन्तीमिव सामिप्रकाशितमध्यभागे गुहाया अद्राक्षमहम्। प्रतिमाया अस्या विशालद्रुमकाण्डसदृक्षं बाहुयुगलप्रकाण्डं तत्पादयोर्निपतितां विपद्गतां शरणार्थिनीं कामपि वनितां परित्रातुमिवोन्नमितमासीत्। प्रतिकृतिमेनामालोक्य जीवनचक्रविमुक्तान् निर्वाणेप्सून् अनुयायिनः स्वश्रेष्ठतत्त्वचतुष्टयमुपदिशतः प्रथितयशसो भगवतो बुद्धस्याजण्टाख्यायां गुहायां स्थिता नैपुण्यातिशयेन घटिता प्रतिमा मत्स्मरणसरणीमारुक्षत्। अशंसन्मे कमपि बालभावमानन्दोल्लासिनी नयनयुगले, मूर्तेस्तस्या उन्नतमंसयुगलं सुदीर्घबाहू, पीयूषवर्षिणी अक्षिणी, दाक्षिण्यगाम्भीर्यबुद्धिमत्ताद्योतकं विशालं ललाटम्, शान्ततया स्नातं च शरीरम्। भ्रूमध्यस्थापिताचलदृष्टिः समाधिस्थितेव परब्रह्मविचारवशा ददृशे प्रतिमा। तपः-सन्न्यास-स्वार्थत्यागाद्युदात्तभावा भासन्ते स्म स्फुटं तत्प्रतिमामुखे। अथ तन्मूर्तेः पादयोः पुरो निपत्य कृताञ्जलिः साष्टाङ्गप्रणिपातं कुरु परस्तात् तदीयपावनकथां ते निवेदयिष्य इत्यवोचत स्थविरोऽध्वगः। प्रतिध्वनद्गुहावितानाभोगे तस्य स्वरो दीर्घतामुपेतः प्रत्यभाद् वतालध्वनिरिव भीषणः। तदादेशं निःशब्दमनुसरते पुनश्च समुत्थिताय मे तमीमयं कोणमेकमात्मानमनुयातुं संज्ञां प्रददौ यथा प्रभवेयं स्फुटतरं प्रतिमां तां पूज्यतमामालोकयितुम्। कन्दरान्तश्चित्रविचित्रच्छायापटले

स्थविरस्याख्यायिकाविषयस्य प्रत्यभादमानुष इव शरीराकारः। तदायपाण्डुराननं त्वक्पत्रसदृशं गम्भीरनयनयुगलं च मामवर्णनीय-मोहावस्थाकुलं वितेनाते। निरन्तरधृतप्राण आयुःशृङ्खलागाढ़संलग्न इवादृश्यत प्रवयाः, अकथयदाख्यायिकां च तामद्भुतां यथा—

"व्यतीतं खलु संवत्सराणां शतद्वयं तदागमस्य प्रथमतोऽत्र। नातिदूरवर्तिनी नगरीयं सर्वत्र दुर्भिक्षरोगादिकारणकलापान्मृत्युच्छाया-न्धकारावृतासीत्। चतुर्षु वर्षेषु वर्षाभावान्मक्षिका इव प्रजा अवसेदुः प्रतिक्षणम्। नृपतिः करणसिंहो नगरीमिमां प्रशासत् स्वप्रजा-निर्विशेषं प्रजां दुःखार्णवनिमग्नां दर्शं दर्शं शोकाग्निना दन्दह्यमानः प्रतिपत्तिमूढोऽवतस्थे। नगरीयं विध्वंसितप्राया यावत्तिष्ठति ताव-दस्मादेव गिरेरवारुक्षत्कोऽपि दिव्यपुरुषः। विदितनगरविपज्जालो दीनदुःखदावदहनोद्विग्नस्तत्परिहारविचक्षणः प्रचण्डग्रीष्मतापे दिवा तमिस्रायां च जपतपोध्यानादिभि र्भगवद्भक्तिनिष्ठो दीर्घदीर्घं काल-मयापयत्, दुःखितप्रजायाश्च संरक्षणाय परमात्मानमभ्यर्थयामास। ततः कतिपयमासाभ्यन्तरे वृष्टिमहौघेनादृष्टपूर्वेण प्लाविता नगरी प्रवाहैर्जनानां विस्मयातिशयोद्गारैश्च पर्यपूर्यत।"

अत्र प्रवयाः क्षणमात्रं वृत्तान्तस्य पौर्वापर्यस्मरणपराधीन इव किञ्चिद् व्यरमत्। ततश्च जोषं प्रतिमायाः पादयोरन्तिकनिहिताङ्गार-पात्रे धूपगन्धसारखण्डानि जपन् किमपि युगपत्प्रक्षिप्य मन्दतरस्वरेण निवेदयितुमाख्यानं पुनरुपाक्रमत—"धराधिपः करणसिंहो गर्वोच्छू-नाधरः श्रेष्ठपुरुषस्यास्याद्भुतकृतिमपूर्वामाकर्ण्य तमेनं स्वप्रासाद-मलङ्कर्तुं न्यमन्त्रयत। परं शुद्धात्मना तदनुग्रहे नोररीकृते भूपेन्द्रो-ऽभिमानी तमभिनन्दयितुं स्वयं तदन्तिकमुपेतवान्। अथ व्यतीतेषु बहुषु वत्सरेषु गृहीतमानवाकृतिर्दिव्यपुरुषोऽयं स्वधर्मरक्षणसक्षणः सत्यतासमर्थनाय क्वचित्तिरोभविष्यति ध्रुवमिति जनतायां वार्ता

प्रथितासीत्। प्रचण्डातापवर्षासु स्वरुचिरदेहयष्टिमिन्द्रियसंयमेन क्लेश्यमानस्यानवरतप्रजागरेण ज्ञानयोगाच्छ्रेष्ठपदमीप्सोस्तस्य दर्शनामृतेन स्वान्तरङ्गं सन्तोषयितुं तदन्तिकमाबालस्त्रीपुरुषवृन्दं परःशतशः प्रतिदिनं समाययौ। यात्रिका नानाविधोपहारानानीय तदीयपादयोः समीपं निदधुः। आ मध्याह्नादामध्याह्नं ध्यायतस्तस्य वृक्षशकुन्तकास्तदङ्कोपरि समुत्प्लुत्य खर्जूरिका आस्वादयन्, नीलवर्णकपोताश्च शातितण्डुलकणान्नुपाभुञ्जत। योगिराडयं शताधिकवर्षदेशीयोऽपि नवयौवनभूषित इव बभौ। अहो प्रभावोऽयं खलु तस्यामरभावस्य। तदाननस्य देदीप्यमानच्छविं रुचिरताजितमारां शरीराकृतिं तद्दिव्यप्रभावशंसि विशालललाटं दर्शं दर्शं वृद्धा युवतयश्च क्षणमनिमेषा विस्मृतात्मदेहास्तस्थु स्ततश्चात्यन्तं तं चकमिरे। तास्वासीत्करणसिंहराजस्य दुहिता भारतीनाम्नी कुन्दकुड्मलसुकुमाराङ्गयष्टिः कमललोचना बालार्कपेलवकान्तिः पीयूषमधुरवचना विनयशीला च।" निशम्यैतत्सविस्मयमपृच्छं किं नृपात्मजापि कषायाम्बरधारिणि तापसे बद्धानुरागा संवृत्तेति। वृद्धो मामाश्वासयितुमुदतरत्, तथैव खलु। परं स्वप्रेम्णः सिद्धिरसाध्येति विजानत्यपि यौवनोपयुक्तभोगान्निखिलानुत्सृज्य तं पुण्यात्मानं स्वहृदयेश्वरं दृढमाकलयन्ती तस्यैव ध्यानमनवरतमकरोत् सा। निराहारा निरानन्दा च राजकन्येयं क्रमेण हास्यवर्जिता बभूव। तदीयशरीरयष्टिं प्रतिदिनमधिकाधिककृशां दर्शं दर्शं सन्त्रस्तौ तत्पितरौ कुमारीमपृष्ट्वा सह केनचिद्राजकुमारेण तस्या विवाहवाङ्निश्चयं कृतवन्तौ। विदित्वैतद् भारती नैराश्यभुजङ्गेन दष्टेव भयविह्वला मृतप्रायाऽवतस्थे। अथो गत्यन्तराभावादुद्वाहस्य पूर्वस्मिन् दिने तपस्विनीयमबला सूर्यास्तमनात्प्रागलक्षिता दौवारकैर्विचारभारविरुद्धगतिरपि हृदयेश्वरमुपतिष्ठासुः शङ्कातङ्कमपास्य पितुः प्रासादात्पलायनमकरोत्। हेमन्तक्षणिकसन्ध्यासामयिकनीललोहितच्छाया-

व्याप्ते प्रदोषे पिङ्गलकदम्बकक्षेत्रेषु सुरभिसुमनःस्रजमादाय हस्ते शनैः शनै र्गिरिकन्दरमभिमुखमेव कथमप्येकला प्रातिष्ठत। अत्र पर्वतश्रेणीतः पर्वतश्रेणीमटव्या अटवीं अधित्यकातोऽधित्यकामन्तरा नासीत्कोऽपि पन्थाः सरलः। ततश्च श्वासनिरोधादतिसम्भ्रान्ता भ्रष्टाध्वा क्षणं यावत् निश्चला तिष्ठति तावदकस्मादतिभीषणा सकडकडाशब्दं सौदामिनी समदीप्यत। यावच्च तच्चमत्कारचकिता कम्पमाना सखडखडाशब्दायमानदन्ततितिस्तावत् सतडतडाशब्दं गुटिकास्थूलैर्धाराबिन्दुभिर्वर्षितुमारब्ध मघवा। किंकर्तव्यतामूढात्र यावन्निराशयाश्रुपूर्णाक्षी पयःपूरेण पलायमाना सक्रन्दं ध्यायन्ती तिष्ठति तावद्दैवयोगात् कश्चिन्मेषपालस्य क्षत्रबटुराजानुधूलिधूसरितचरणयुगलः पटच्चीवरार्धाच्छादितशरीरोऽपर्याप्ताशनपाण्डुवदनो दीर्घदण्डधरकृशकरस्तत्सविधे समाययौ। अयि किमिति रोदिषीति पृष्टा माणवकेन तेन भारती तस्मै स्वमभीष्टं न्यवेदयत्। एहि तावन्मया सहेति तदीयहस्तमादाय दारकस्तां शनैः शनैर्वनमार्गेण गिरिकन्दरमनैषीत्। राजकन्या चातिश्रान्ता स्विन्नाङ्गयष्टिर्विवर्णवदना दुःखदन्दह्यमानहृदया बटुना सार्धं समहायासं कतिपयघटिकाभिर्गिरिशिखरं प्राप्य गुहां पवित्रां प्रविश्य च पुण्यात्मानं सिद्धपुरुषं गाढध्याननिमग्नमालोकयत्। अथ बद्धाञ्जलिपुटा सकम्पं ससाध्वसं निरुच्छ्वासं च तमुपाययौ मन्दं मन्दं भारती। मेषपालस्य पुत्रस्तमोमयकोणे गह्वरस्यैकस्मिन् पातिताभयजानु समुपविश्य विलक्षणालोकमिमं व्यलोकयत्। संक्षुब्धं मानसमात्मनो निग्रहीतुं बलवत्प्रयतमाना राजकन्या चिरादनभिनन्दितपानभोजना केतकीव पाण्डुरच्छविर्व्रीडाभरमन्थरा ग्रीवां नमयन्ती स्वपादाग्रमेवावलोकयन्ती क्षणं तावत्तूष्णीं तस्थौ ततश्च सिद्धात्मानमभ्यार्थयत भगवन्, स्वीक्रियतां क्षुद्रजनोऽयमिति। स च तदाकर्ण्य नयनयुगलमीषदुन्मील्य समन्दहासवदनो जोषमास्त। पुनस्तया प्रार्थितो विधूय शिरो निरुत्तर एव स्थितवान्। प्रसीद भगवन्।

अङ्गीक्रियतां तव किङ्करीयम्, निरस्ता पुण्यपादाभ्यां चेद्विनङ्क्ष्यति सा खलु। भगवत्पादपङ्कजयोः समर्पयतु सा जीवनमात्मीयमिति प्रह्वं पुनःपुनरभ्यर्थ्य जीवनाख्यानमात्मनः शुद्धात्मनस्तस्य श्रुतिद्वन्द्वस्यातिथी-कृतवती। तद्यथा प्राह सा। अहो भगवतः प्रथमदर्शनात्प्रभृत्येव भगवति बद्धादरा समभवं ततश्च भगवतो दिव्यप्रभावचमत्कारपरम्परया कुसुमशरशरजातविद्धचित्ता मनसिजावेशजनितानवरताभिलाषां सलज्जं कथमपि कतिपयमासान् प्राणानधारयम्। प्रतिनक्तं स्वप्ने भगवत्पुण्य-दर्शनब्रह्मानन्दं विन्दन्ती जाग्रती च भगवच्चित्रं मानसभित्तिकाया-मालिखन्ती कथमपि जीवनयात्रामयापयम्। नैराश्याच्च दिने दिने कृशीभूतां मां वीक्ष्य पितृचरणैः केनापि राजपुत्रेण सह मम विवाहे निश्चिते सति मर्मण्यभिहतेवोत्कीलितप्राणेव च समभवम्। पर्यन्ते गत्यन्तर-मपश्यन्ती अनभीष्टोद्वाहादात्मानमभिरक्षितुं पितुर्गेहान्निभृतं पलाय-माना भगवतश्चरणाब्जयोः समीपमागतवती परमसङ्कटादस्मात्परि-रक्षेद्भगवानिति। एवं विलपन्त्या तयोपयाचितो भूपेन कन्यया सिद्धात्मा प्रत्युवाच मृदुगिरा। वत्से विरक्तः प्रपञ्चसुखोपभोगाच्च विमुक्तोऽस्मि खलु। अतोऽन्विष्यतामन्यः कोऽप्यनुकूलस्तरुण इति। अनेन तस्य वचसा तद्वचनसुधारसपिपासुभ्यामिव कर्णाभ्यामेक-तानताजडीकृताभ्यामिव नयनाभ्यां चित्रार्पितेवाभवद्भारती। किञ्चि-द्भीतेव किञ्चित्स्तब्धेव किञ्चित्खिन्नेव किञ्चित्क्षुब्धेव च सा सम-तिष्ठत। सस्वान पुण्यात्मनस्तस्य वाक् तमोमयकोणे विलीनस्य माणव-कस्य श्रुतावमानुषीव। अथ यावद्भारती क्षणं स्तिमिता तिष्ठति तावदश्रावि दूरात्सघडघडं प्रतिध्वनिर्घोटकखुराघातध्वनेर्बधिरीकृत-क्रोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदोषेऽस्मिन्। क्रमेण ध्वनि-रुच्चादुच्चतरः समजनि। मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं जवेनारोहत्। कम्पमानहृदया तपस्विनी भारती कुरङ्गक-

लोचना व्याधभयाभिभूतेव कुरङ्गी दुःखपारावारे मज्जतीवानन्यगतिः केशकलापमाकर्षन्ती निराशान्धकारे नष्टेव समाक्रोशन्मुक्तकण्ठम् । हा हा हतास्मीति सा व्याहरत्तपस्विनी । विजनस्थलेऽस्मिन्नागमने-नातिक्रान्तविनयं क्षुण्णस्वाभिमानमात्मानं मेने । ततश्च विवर्णवदना स्वेदबिन्दुस्नातललाटा च राजपुत्री बाष्पौघनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य प्रेङ्खीभूय भूतलमाबिलं चकार नयनजलधारया । तुरङ्ग-खुरध्वनिः प्रतिक्षणमेधमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिवद्भीषणतां भेजे । "भगवन् त्रायस्व मां त्रायस्वेति" भारती महात्मनः पादारविन्दयोर्निपत्य विततबाहुपल्लवा क्वणद्दन्तततिर्म्लान-पुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत । तत्क्षणे माणवकः कन्दरसोपानमूर्ध्नो भूपतिर्भूपतिरित्युच्चैराक्रोशन् सन्त्रासविवर्णास्यः सवेगमवरुह्य प्राविशद् गुहाम् । परितश्च गह्वरमभिरक्षणाय गुप्त-स्थानमन्विष्यन् एहि तत्राभ्यन्तरकोणेऽन्तर्हितौ भविष्यावेति कम्पमानां राजकन्यामसूचयत् । विधूते शिरसि तया वेपमानया ऽऽपादमस्तकं बटुरन्धकारे परामृशन् तमोवृतकोणं निरुच्छ्वासो विलीनो यावत्तिष्ठति तावद्भारती करपल्लवे प्रसभं समपीडयन्नैराश्येन । हा हा ध्रुवमेव मे विनाशोऽद्य ध्रुवमेव पतनं ध्रुवमेव च मे पशुमारैर्मरणम् । आशाङ्कुर-प्रफुल्लितहृदया समायाताहमत्र सद्यस्तु वराकी मन्दभागा जन्मान्तर-दुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम् । इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवन् त्रायस्व मां त्रायस्वेति कातरेण भज्यमानेन कम्पमानेन च स्वरेण दृढतरबद्धाञ्जलिः कण्ठबाष्पकीलितवाक् कथं कथमप्यवादीत् । तदीयकरुणोद्गारप्रवाहेणेवाश्रुजलप्रवाहेण च पर्य-पूर्यत गुहा । तदीयकर्णमर्मभेदिदीनप्रार्थनं पुण्यात्मनः श्रुतौ रक्षक-करगृहीतस्य शिशोश्चाटुवचनमिव न्यपतन्न तु वामाया विमोहकानुनय इव ।" अत्राख्यायकः क्षणमात्रं व्यरमत् । परमभक्त्या प्रतिमां विशालां

निरीक्षमाणः स्मारं स्मारं पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत— "अथोन्मीलिताब्जनेत्रः शनैरासनादुत्थाय जोषं विततबाहुयुगल एधमानमहौदार्यो विलक्षविचक्षणः सत्यधर्मरक्षणसक्षणोऽभिरिरक्षिषयेव नतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदतिकारुण्यनिर्भरझरेण च तां क्षालितवान्। ब्रह्मानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः समुदञ्चितरोमाञ्चायाः शङ्काकर्दमः सपदि विद्रावितस्तस्याश्च विततमस्तकाया निमीलितनयनायाः पुरतश्चादृष्टपूर्वप्रमोदालोको लुलुके। ततश्च किञ्चिद्दारुणरूपान्तराभिभूतेव क्षणं निश्चलाभूत्। स्वान्तःप्रेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयपरिवर्तनं समवर्ततेति। सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं तन्मुखान्निःसरति स्म। अकाण्डं संप्राप्तरूपान्तरा पावितान्तरात्मा निमीलितलोचनयुगला स्मितविकसितानना भगवद्ध्याननिमग्नेव समुपजातहर्षेव नतशीर्षा वाजिनां कण्टकझणत्कारमप्यश्रृण्वतीव समतिष्ठत। न चिराद्विविधाभरणप्रबलचाकचक्यः सुवर्णपटाम्बरधरो रोषघूर्णितलोचनो धराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य क्वास्ति निर्लज्जा कुलकलङ्किनीति सगात्रविक्षेपं चुक्रोश कोपहलाहलवक्रीभूतास्यः। ततः पुरःसमुपसृत्य तारस्वरेण पुनः सञ्जगर्ज क्वास्ति दूषको दुरात्मेति। भारती यावच्छिलावन्मौनमालम्ब्य तिष्ठति तावद्भूपती रोषपावकातिरेकेण ज्वलन् बाहुमात्मनः स्फुरद्घातुकासिधरमुन्नमयन् क्व क्व भारतीत्युदीर्योच्चैस्तां प्रत्यधावत्सरभसम्। अश्रावि च तत्क्षणे कश्चिद् ध्वनिः सहसा। प्रतीक्षस्व, प्रतीक्षस्व। पश्य पश्य पुर इति। उदीरितमात्रे वचनेऽस्मिन् कन्दरगर्भतः क्षणिकदीप्तिर्घनान्धकारेऽत्र यावद् देदीप्यते तावत्काचिन्मणिशिलामयप्रतिमा भूपतेर्दृष्टिगोचरो भवति, पुण्यात्मा दिव्यपुरुषस्तु तिरोऽभवत्। तत्स्थाने विशालेयमचेतनापि परमसुख-

दायिनी कृत्रिमाकृतिर्ददृशे। योगसमाधिनिमग्नस्येव ध्यानपावितस्येव सत्याधिपत्यातिनिष्ठैधमानप्रभावस्येव सिद्धात्मनः केनापि सद्यः प्रतिकृतिरियं निपुणमालिखितासीत्। तमालोकमलौकिकमालोकमालोकं करणसिंहस्तत्रादृष्टपूर्वचमत्कारचकितचकितो विस्फारितलोचनः सरोमोद्गमः क्षणं भूलग्न इव समतिष्ठत। तदुज्ज्वलद्रोषाग्निज्वाला झटिति निर्वापिताभूत्तावत्कुतूहलाङ्गारशेषमन्दार्चिरेवावशिष्टाऽऽसीत। तदाननिर्घृणरूपलेखा क्षणान्मृदुतामापेदे। प्रतिमायाः पुरः सम्पुटीकृतकरां जानुनतोपविष्टां बकुलपुष्पकोमलाङ्गयष्टिं स्वात्मजां साश्चर्यं निरीक्षमाणो महीपतिः क्षणं जोषं स्थितवान्। ततः पृष्ठतः परिवृत्य स्वानुजान् सम्बोध्योदगिरद् "धन्येयं किल मे नन्दिनी परमात्मनः प्रतिमायाः पुरो ध्यायतां भक्तानामग्रिमभूता पाविता च स्वनिष्ठया। जन्मान्तरे कृतावदातकर्मा दिव्यात्मनोऽनुग्रहभाजनभूतेह जन्मनि खलु। अहो सन्तरणसेतोः सिद्धमार्गस्य करुणरसस्य प्रवाहोऽयम्। अत्र प्रवयाः कथको मन्दीभूतस्वरः तत्स्मृतिनिष्प्रभोदरे सुचिरादवस्थित-पुरातनधूलिधूसरपौर्वापर्यसंवृत्तजातसंस्कारोद्बोधपराधीन इव कथानकनिवेदनाद् व्यरमत्। ताम्रवर्णप्रदोषस्यैधमानान्धकारस्य पारं निरूपयन्निव क्षणं तूष्णीं स्थितवान्। ततश्च चिरान्मृतां स्वहृदयेश्वरीं सविषादं चिन्तयन्निव मन्दं मन्दं निःशब्दं च समुत्थाय प्रतिमां प्रति समुपेत्य तत्पुरः साष्टाङ्गनमस्कृतिः सप्रश्रयं न्यपतत्।"

* * * *

अथ जागरितोऽहम्। उन्मीलितनयनोऽभितो दृष्टिं क्षिपन् नग्नविजनपर्वतसमीपवर्तिनो गृहस्य कस्यचिच्छयनागारे शिबिरोचितखट्वामधिशयानमात्मानमपश्यम्। कश्चित्स्थविरभिषङ् मदीयनाडीं परीक्षमाणो मदन्तिकं नतशरीरस्तस्थौ। मासद्वयात्प्राक् परित्यक्तशयनः सैन्यदलं पुनः संगन्तुं नाशकम्।

---

# सुभाषितानि

स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरं पावकस्पृष्टः सौरभं लभतेतराम् ।।
दृष्टान्तशतकम् ।

लक्ष्मीवन्तो न जानन्ति प्रायेण परवेदनाम् ।
शेषे धराभराक्रान्ते शेते लक्ष्मीपतिः सुखम् ।।
सुभाषितार्णवः ।

धर्मस्य फलमिच्छन्ति धर्मं नेच्छन्ति मानवाः ।
फलं नेच्छन्ति पापस्य पापं कुर्वन्ति यत्नतः ।।
सुभाषितार्णवः ।

न मौनं वाग्मिनां शस्तं वाक्कलाकुशलात्मनाम् ।
अकूजन् कोकिलो लोके काकोऽयमिति मन्यते ।। ( ज्ञायते )
सुभाषितार्णवः ।

द्रुमोद्भवं हन्ति विषं न हि द्रुमं
न वा भुजङ्गप्रभवं भुजङ्गमम् ।
अदः समुत्पत्तिपदं दहत्यतो
दाहोल्वणं क्रोधहलाहलं महत् ।।
सुभाषितार्णवः ।

आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते ।
कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः ।।
दृष्टान्तशतकम् ।

उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम्
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ।।
महाभारतम् ।

सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।
विशिष्टनिष्ठता तस्या भाष्यकारेण वर्ण्यते ॥

Amalānanda in his *Vedāntakalpataru* (N. S. Press, pp. 44-45) says :

पाणिनिः किल "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" [ २।१।३६ ] इति तादर्थ्यसमासं सस्मार । चतुर्थ्यन्तशब्दार्थस्तच्छब्देन परामृश्यते । तस्मै इदम् तदर्थम् । यथा कुण्डलाय हिरण्यमित्यत्र कुण्डलं चतुर्थ्यन्तशब्दार्थस्तच्छेषो हिरण्यम् । तत्र कुण्डलशब्दश्चतुर्थ्यन्तः कुण्डलशेषवाचिना हिरण्यशब्देन समस्यते—कुण्डलहिरण्यमिति । तथार्थशब्दादिनापि ब्राह्मणार्थं पय इत्यादि द्रष्टव्यम् । कात्यायनेन त्वयं समासो प्रकृतिविकृत्योर्नियमितः—"चतुर्थी तदर्थमात्रेणेति चेत्तर्हि सर्वत्र प्रसङ्गोऽविशेषात् । प्रकृतिविकृत्योरिति चेदश्वघासादीनामुपसंख्यानम्" [ २।१।३६।१, ३ ] इति ।

Compounds with final datives are found not only in all stages of Sanskrit, but also in Greek, Latin, Gothic, English and other Indo-European languages. In Sanskrit we have : आत्मनेपदम्, परस्मैपदम्, पादोदकम्, तपोवनम्, क्रीड़ापर्वतः, लीलालयः, लीलाकमलम्, शयनपर्यङ्कः, बलिपुष्पम्, विश्रामस्थली etc. In the Avesta *dānu-dāta* occurs in the sense of 'created for all creatures'. In Gothic we have *figgra-gulth* 'finger-ring', *lukarna statha* 'candle-stick', *weina-gards* 'vineyard', *mo:ta-staths* 'toll-place', *fo:tu-baurd* 'foot-board' etc.

The distinction between तादर्थ्ये चतुर्थी and सम्बन्ध-सामान्ये षष्ठी is, no doubt, hard to discern in some cases*. We should, therefore, dissolve as चतुर्थी compounds all words in which the first member retains its own independent accent and as षष्ठी compounds those which accent the second member on the final

---

* Thus in Bengali we generally say घोँड़ार घास 'the horse's grass' and not घोँड़ार जन्य घास 'grass for the horse'.

syllable. *Bṛahmaudana', as'vayūpa'* etc. are to be explained as **षष्ठी** compounds*.

* यथा लौकिकवैदिकेषु *

प्रियतद्धिता दाक्षिणात्याः, यथा लोके वेदे चेति प्रयोक्तव्ये यथा लौकिकवदिकेष्विति प्रयुञ्जते । अथवा युक्त एवात्र तद्धितार्थः, यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावद् अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्या ग्राम्यसूकर इत्युच्यते । भक्ष्यं च नाम क्षुत्प्रतीघातार्थमुपादीयते, शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम् । तत्र नियमः क्रियते—इदं भक्ष्यम् इदमभक्ष्यम् इति । तथा खदात् स्त्रीषु प्रवृत्तिर्भवति । समानश्च खेदविगमो गम्यायां चागम्यायां च । तत्र नियमः क्रियते—इयं गम्या, इयमगम्येति ।

Just as we find in matters secular and Vedic.

The Southerners are fond of Taddhita suffixes, they use "yathā laukika-vaidikeṣu" instead of "yathā loke Vede ca". Or the sense of the Taddhita suffix is really appropriate here, "yathā laukika-vaidikeṣu" meaning "yathā laukikeṣu vaidikeṣu ca kṛtānteṣu" i. e. as in popular and Vedic statements. People say the domestic fowl is not fit for food, the domestic pig is not fit for food. Now food is taken for the removal of hunger and hunger can also be removed with the flesh of dogs and similar other animals. Restriction is, therefore, made in this matter—

---

* The view that final datives are compounded with **समर्थ सुबन्त** words, but in such cases the compounds become oxytone would appear to be in keeping with the best usage, but it is difficult to deduce this view from the rules of Pāṇini. Vāmana has recourse to an iṣṭi and says : **प्रकृतिविकारभावे स्वरोऽयमिष्यते** under **चतुर्थी तदर्थे** vi. 2. 43.

this is fit food, this is not fit food. Similarly desire for women arises from sexual appetite, and the gratification of the appetite is the same with women fit for intercourse and those that are not so fit (i e., with those women with whom intercourse is permitted by the S'āstras and with those with whom it is not so permitted). A restriction is made in this matter, this woman is fit for intercourse, this woman is not.

**यथा लौकिकवैदिकेषु** occurs several times in the Vārttikas and in each case the Bhāṣya is interesting. We shall deal with all these cases in the Appendix. **लौकिकवैदिकेषु** is used in the sense of **लौकिकेषु वैदिकेषु च वाक्येषु** and consequently does not point to any predilection for Taddhita suffixes on the part of Kātyāyana.

**प्रियतद्धिताः इति। नायमपशब्दः, किन्तु ये लोकवेदयोर्भवा अवयवास्त लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते। आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः। यथा कश्चिद्वनस्पतय इति प्रयुङ्क्ते कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम्। कैयटः।**

**प्रियतद्धिता दाक्षिणात्याः**—In this connexion the following extract from Rājas'ekhara's *Kāvyamīmāṃsā* will be found interesting: **तद्धि शास्त्रं प्रायोवादो यदुत तद्धितमूढाः पाणिनीयाः*। माञ्जिष्ठं रौचनिकं सौरं सैन्धवं वैयासमिति तद्धितान्ताः। प्रातिपदिक-**

---

* It it hardly correct to say that the followers of Pāṇini are deficient in the knowledge of Taddhita suffixes Pāṇini devotes two entire chapters out of eight to the treatment of Taddhita. The dictum, if it has come down correctly, would point to the fact that the predecessors of Pāṇini used to devote much greater space to the consideration of the secondary suffixes than Pāṇini ever did. We, however, generally regard the followers of the Kalāpa school as ignorant of Taddhita: **कालापास्तद्धिते मूढाः.**

विषया चेयम्। कृद्वृत्तिश्च धातुविषया। कर्त्ता हर्ता कुम्भकारः नगरकार इति कृदन्ताः। तिङ्वृत्तिर्दशधा दशलकारीभेदेन।...तदिदमित्थङ्कारं पञ्चप्रकारमपि पदजातं मिथः समन्वीयमानमानन्त्याय कल्पते। तज्जन्मा चैष विदुषां वादो यत् किल दिव्यं समासहस्रं बृहस्पतिर्वक्ता शतक्रतुरध्येता तथापि नान्तः शब्दराशेरासीत्। तत्र दयितसुब्वृत्तयो विदर्भाः। वल्लभ-समासवृत्तयो गौड़ाः। प्रियतद्धिता दाक्षिणात्याः। कृत्प्रयोगरुचय उदीच्याः। अभीष्टतिङ्वृत्तयः सर्वेऽपि सन्तः।

**अभक्ष्यो ग्राम्यकुक्कुटः**—See p. 37. Cf. Bodhayana Dharma Sūtra i. 5. 127, 129 **अभक्ष्याः पशवो ग्राम्याः, तथा कुक्कुटसूकरम्।** The quotation on p. 37 should read: **भक्ष्याः श्वाविड्-गोधा-शश-शल्यक-कच्छप-खड्गाः खड्गवर्जाः पञ्च पञ्चनखाः।**

**शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्**—The gerundive **शक्यम्**, though connected with **क्षुत्** which is fem., is yet neut. This has caused a good deal of headache to grammarians. But the fact is in the vast majority of cases **शक्य** when used at the beginning of a sentence agrees with a neuter singular noun and consequently takes the form of **शक्यम्**. So people came to think that whenever **शक्य** is used at the beginning of a sentence it must be **शक्यम्**. Later writers like Kālidāsa use **शक्य** and **शक्यम्** acc. to the exigencies of metre. Vāmana says in his Kāvyālaṃkārasūtra: **शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्** v. 2.22 and explains: **शकेः शकिसहोश्च [३।१।९९] ति कर्मणि यति कृते शक्यमिति रूपं भवति। विलिङ्गवचनस्यापि विरुद्धलिङ्गवचनस्यापि कर्माभिधायां कर्मवचने सामान्योप-क्रमात् विशेषानपेक्षायामिति। यथा—**

**शक्यमोषधिपतेर्नवोदया कर्णपूररचनाकृते तव।**

**अप्रगल्भयवसूचिकोमलाश्छेत्तुमग्रनखसम्पुटैः कराः॥ [कुमार० ८।६२]**

**इति। अत्र च भाव्यकृद्वचनं लिङ्गम्। "शक्यं च श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्" इति। न चैकान्तिकः सामान्योपक्रमः, तेन "शक्या भङ्क्तुं झटिति बिसिनीकन्दवच्चन्द्रपादाः" इत्यपि भवति।**

S'rimati Mālatī Devi explains this in her commentary on the Kāvyālaṃkārasūtravṛtti thus :

"द्रष्टुं शक्यमयोध्यायां नाविद्वान्न च नास्तिकः । [ रा १।६।८ ]
द्रष्टुं शक्यमयोध्यायां नापि राजन्न भक्तिमान् । [ १।६।१६ ]
शक्यमापतितः सोढुं प्रहारो रिपुहस्ततः । [ २।६२।१६ ]
त्वं तु धर्मादतिक्रान्तः कथं शक्यमुपेक्षितुम् । [ ४।१८।२४ ]
शक्यमम्बरमारुह्य मेघसोपानपङ्क्तिभिः ।
कुटजार्जुनमालाभिरलङ्कर्तुं दिवाकरः ॥ [ ४।२८।४ ]
शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः । [ ४।२८।८ ]
न शक्यं मामवज्ञाय प्रवेष्टुं नगरी त्वया । [ ५।३।२९ ]
न शक्यमद्य ते द्रष्टुं पुरीयं वानराधम । [ ५।३।३६ ]
न शक्यं ते बहुत्वात्तु संख्यातुं लघुविक्रमाः । [ ६।२७।४८ ]
शक्यं भुजाभ्यामुद्धर्तुं न संख्ये भरतानुजः । [ ६।५९।१११ ]

इत्यादिरामायणप्रयोगेषु,

स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् । [ महाभा वन० २९३।१२ ]
अक्षांश्च दृष्ट्वा शकुनेर्यथावत् कामानुकूलानयुजो युजश्च ।
शक्यं नियन्तुमभविष्यदात्मा मन्युस्तु हन्यात् पुरुषस्य धैर्यम् ॥ [ ३४।५ ]
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः [ गी० १८।३१ ]

इत्यादिभारतप्रयोगेषु—

न चासौ दुर्बलेनाप्तुं शक्यमित्यागतादरः । [ बु० च० १२।९९ ]
शक्यमरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
अङ्गैरनङ्गतप्तैरविरलमालिङ्गितुं पवनः ॥ [ शकुन्तला० ३।४ ]
एवं हि प्रणयवती सा न शक्यमुपेक्षितुं कुपिता [ मालविका ३।२३ ]

दृष्टौ हतं मन्मथबाणपातैः
शक्यं विधातुं न निमील्य चक्षुः ।
ऊरू विधात्रा नु कृतं कथं ता-
वित्यास तस्यां सुमतेर्वितर्कः ॥ [ जानकीहरण १।२९ ]

इति लौकिकप्रयोगेषु च शक्यमिति पदं भिन्नलिङ्गवचनैरन्वितमुपलभ्यते । तत्र भिन्नलिङ्गवचनत्वात् सामानाधिकरण्यं कथं घटेतेत्याशङ्कोपपत्तिः प्रदर्श्यते ।

शक्यं यत् किञ्चिदस्तीति सामान्येनोपक्रमे किं तच्छक्यमित्याकाङ्क्षायां विशेषरूपो वाक्यशेषः[1]। अत्र च "शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्", "शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम्", "शक्यं चानेन यत्किञ्चिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम्" इति पस्पशाप्रयोगा लिङ्गम्। अत्र कैयटः—शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः। ततः पदान्तरसम्बन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते इति शक्यं क्षुदित्युक्तम्। यदा तु पूर्वमेव विशेषविवक्षा तदा शक्या क्षुदिति भवत्येव। यदा तु प्रतिघातस्यैव क्षुत् कर्म, शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति भवति।" [ ननु कर्मणि कृत्ये क्षुत्सामानाधिकरण्येन शक्येति स्यात्, न तु शक्यमिति, अत आह—शकेरिति। लिङ्गेति। विशेष्यलिङ्गसर्वशब्दानां सामान्यविवक्षायां नपुंसकलिङ्गत्वमिति न्यायार्थः। ननु सामान्यविवक्षायाँ नपुंसकत्वेऽपि क्षुत्सामानाधिकरण्ये स्त्रीत्वात् टाप् स्यादत आह—तत इति। अन्तरङ्गत्वं पदान्तरानपेक्षत्वात्। तर्हि शक्या क्षुत् प्रतिहन्तुमिति कदापि न भवतीत्याशङ्क्य, भवति प्रथममेव विशेषविवक्षायाम्, इत्याह—यदेति। एवं क्षुधः शकिकर्मत्वे प्रयोगद्वयमुक्त्वा तस्याः प्रतिघातकर्मत्वविवक्षायां प्रयोगान्तरमाह—यदा त्विति। अन्नंभट्टः। ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत् प्रकाशस्य "स्वादुमि णमुल्" [ ३।४।२६ ] इत्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न। प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत् स्वसमानाधिकरणगुणशक्तेरभिहितवत प्रकाश इत्यभिमानात्। वस्तुत इदमयुक्तमेवेति स्वादुमीत्यत्र निरूपयिष्यामः। नागेशः।

प्रधानाप्रधानविषये हरिकारिके—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते।
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते ।। इति। ]

अत एव "शक्यं दिवं चार्जयितुं वसुधामपि शासितुम्" [ ४।१८।५८ [ इति रामायणप्रयोग उपपद्यते।

---

[1]Hence Bhartṛhari says: सामान्येनोपक्रमो विशेषेणाभिधानम्।

एवमाङ्ग्लभाषायामपि Who did you see there ? I don't know who you mean इत्यादयः प्रयोगा उपपद्यन्ते।"*

श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्—"To eat dog's flesh was a last resort of despair and hunger. RV. iv.18.3. Later *S'vapaca* ('dog-cooking') denotes a degraded caste." *Vedic Index*.

.3 is here a misprint for 13. The stanza runs thus:

अवर्त्या शुन आन्त्राणि पेचे न देवेषु विविदे मर्डितारम् ।
अपश्यं जायाममहीयमानामधा मे श्येनो मध्वा जभार ॥

"In deep distress, I cooked a dog's intestines. Among the Gods I found not one to comfort. My consort I beheld in degradation. The falcon then brought me the pleasant Soma." (Griffith).

Griffith says in his note: "This appears to be Vāmadeva's excuse for having in his utmost need cooked and eaten, or desired to eat, impure flesh. 'So Manu has, Vāmadeva who well knew right and wrong, was by no means rendered impure, though desirous, when oppressed with hunger, of eating the flesh of dogs for the preservation of his life. X, 106'—Wilson."

श्वमांसमिच्छन्नार्तोऽत्तुं धर्माधर्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ॥

Cf. also Rāmāyaṇa I. 62. 14:

अकार्यमिव पश्यामः श्वमांसमिव भोजने ।

खेदात्—खेदो नामेन्द्रियस्य स्वविषये प्रवर्तमानस्य निग्रहं प्रत्यसामर्थ्यम् । अथवा खेदयतीति खेदः, राग एवोच्यते ।...अथवा दैन्यं खेदः । भर्तृहरिः ।

*Khid* means to tear, to be distressed, hence *kheda* means a feeling of tearing at the heart, lassitude, depression, ennui. Rājas'ekhara in his *Kāvyamīmāṁsī* uses the term *ārti*. *Kheda* occurs in the well-known stanza about *Vidyā*: कान्तेव चाभिरमयत्यपनीय खेदम्.

* *Calcutta Oriental Journal*, Vol. III, no. 4.

वेदे खल्वपि पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्य इत्युच्यते। व्रतं च नामाभ्यवहारार्थमुपादीयते। शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम्। तत्र नियमः क्रियते। तथा बैल्वः खादिरो वा यूपः स्यादित्युच्यते। यूपश्च नाम पश्वनुबन्धार्थमुपादीयते। शक्यं चानेन यत् किञ्चिदपि काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम्। तत्र नियमः क्रियते। यथाग्नौ कपालान्यधिश्रित्याभिमन्त्रयते "भृगूणामङ्गिरसां[1] तपसा तप्यध्वम्" [ वाजसनेयी संहिता १।१८ ]। अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति। तत्र च नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति।

एवमिहापि समानायामर्थगतौ[2] शब्देन चापशब्देन च धर्मनियमः क्रियते शब्देनैवार्थोऽभिधेयो नापशब्देनेति। एवं क्रियमाणमभ्युदयकारि भवतीति।

In the Veda also it is laid down—"payo-vratah Brāhmaṇah" (during rituals) a Brahmaṇa should live on milk-

[1] Printed editions generally add "gharmasya" after "aṅgirasām", but it is not found either in VS. or in S'B.

[2] This is undoubtedly the correct reading and has the support of the great commentator Bhartṛhari though most printed editions have **अर्थावगतौ**, because **गति** in the sense of **ज्ञान** became obsolete later on, in spite of the well-known dictum **सर्वे गत्यर्थाः प्राप्त्यर्था ज्ञानार्थाश्च.** But Bhāṣyakāra always uses **अर्थगति** in the sense of **अर्थावगति** as in the case of the Paribhāṣā **नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः.** Nobody would dream of changing **अर्थगतिः** into **अर्थावगतिः** here. **अर्थगत्यर्थः शब्दप्रयोगः** is also fairly well-known, though when we wrote it in the Mañjūṣā, the proof-reader thought it was an error and corrected **अर्थगत्यर्थः** into **अर्थावगत्यर्थः.**

diet, "Yavāgū-vrato rājanyah" a Kṣatriya on barley diet and "āmikṣā-vrato vais'yah" a Vais'ya on Āmikṣā diet (i e. a mixture of boiled and coagulated milk). Now "Vrata" is that which is taken as food and one can have rice and meat also for his "vrata", a restriction is made in the matter. Similarly it is enjoined : The Yūpa (sacrificial post) should be made of the wood of the Bilva or the Khadira tree. The sacrificial post is taken for the tying of the animal. And the animal can be tied by planting erect or not any piece of wood. A restriction is made therein. Similarly, (it is enjoined) that placing the potsherds on fire one utters the mantra : bhṛgūṇām aṅgirasām tapasī tapyadhvam. Be you heated with the heat of the Bhṛgus and Aṅgirases. Even without the mantra the fire whose function is "to burn" heats the potsherds Here also a restriction is made—if it is done in this way, it becomes conducive to prosperity.

Exactly in the same way here also though the meaning is conveyed in the same way by the correct form, a restriction is made in the matter of religious merit—the sense is to be conveyed by correct words and not by corruptions. If it is so done it is conducive to prosperity.

पयोव्रतो ब्राह्मणः—Patañjali probably had in mind Taittirīya Āraṇyaka ii. 8.1 : पयो ब्राह्मणस्य व्रतम्, यवागू राजन्यस्यामिक्षा वैश्यस्य । We find a more elaborate statement in the Taittirīya Saṃhitā :

यवागू राजन्यस्य व्रतम्, क्रूरेव वै यवागूः क्रूरो राजन्यो वज्रस्य रूपम् समृद्ध्यै । आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै । पयो ब्राह्मणस्य । तेजो वै ब्राह्मणस्तेजः पयः, तेजसैव तेजः पय आत्मन् धत्ते । ( vi. 2. 5. 2-3)

पयोव्रतः—"one who undergoes a vow ( to subsist ) on (nothing but) milk." व्रतशब्देनात्राभ्यवहार उच्यते । पय एव व्रतम् अभ्यवहारो यस्य स पयोव्रतः ।

आमिक्षा—"आमिक्षा स शृतोष्णे या क्षीरे स्याद्दधियोगतः"—अमरः । शृते

क्वथिते तप्ते च पयसि दध्नो योजनात् या स्यात्। भानुजिः। A mess of clotted curds.

बैल्वः खादिरो वा यूपः स्यात्—This probably gives the substance of AB. vi. 1 :

खादिरं यूपं कुर्वीत स्वर्गकामः। खादिरेण वै यूपेन देवाः स्वर्गं लोकमजयन् तथैवैतद् यजमानः खादिरेण यूपेन स्वर्गं लोकं जयति। बैल्वं यूपं कुर्वीतान्नाद्यकामः पुष्टिकामः। समां समां वै बिल्वो गृभीतस्तदन्नाद्यस्य रूपम् आ मूलाच्छाखाभिरनुचितस्तत् पुष्टेः। पुष्यति प्रजां च पशूंश्च य एवं विद्वान्बैल्वं यूपं कुरुते।...पालाशं यूपं कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः, तेजो वै ब्रह्मवर्चसं वनस्पतीनां पलाशः। तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् पालाशं यूपं कुरुते।

"Of Khadira wood should he make the post who desires heaven, by means of a post of Khadira the gods won the world of heaven; thus verily also the sacrificer by a post of Khadira wins the world of heaven. Of Bilva should he make the post, who desires proper food and desires prosperity. Year by year is Bilva taken; this is the symbol of proper food. It should be covered with branches up to the root, this is (the symbol) of prosperity. He prospers in offspring and cattle who knowing thus makes the post of of Bilva,...Of Palās'a should he make the post, who desires brilliance and desires splendour. The Palās'a is the brilliance and splendour of the trees; brilliant and resplendent he becomes who knowing thus makes the post of Palās'a." KEITH.

उच्छ्रित्यानुच्छ्रित्य—Cf. AB.vi. i: यज्ञेन वै देवा ऊर्ध्वाः स्वर्गं लोकमायन्, तेऽबिभयुः—इमं नो दृष्ट्वा मनुष्याश्च ऋषयश्चानु प्रज्ञास्यन्तीति। तं वै यूपेनायोपयन्। तं यद् यूपेनैवायोपयन् तद् यूपस्य यूपत्वम्। तमवाचीनाग्रं निमित्योर्ध्वा उदायन्, ततो वै मनुष्याश्च ऋषयश्च देवानां यज्ञवास्त्वभ्यायन्—यज्ञस्य किञ्चिदेषिष्यामः प्रज्ञात्या इति। ते वै यूपमेवाविन्दन्—अवाचीनाग्रं निमितम्। ते विदुरनेन वै देवा यज्ञमयूयुपन्निति। तमुत्खायोर्ध्वं न्यमिन्वन्,

**ततो वै ते प्र यज्ञमजानन् प्र स्वर्गं लोकम् । तद् यद् यूप ऊर्ध्वो निमीयते यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै ।......वज्रो वै यूपः, स एष द्विषतो वध उद्यतस्तिष्ठति ।**

"By means of the sacrifice the gods went upwards to the world of heaven; they were afraid, 'Seeing this of us, men and seers will track us.' Them they obstructed by means of the sacrificial post, in that they obstructed them by means of the post, that is why the post has its name. Having fixed it point down, they went upwards. Then men and seers came to the place of sacrifice of the gods 'Let us seek something to track the sacrifice. They found the post only, established with point downwards. They perceived, 'By this the gods have blocked the sacrifice.' Having dug it out they fixed it upwards; then did they discern the world of heaven. In that the post is fixed upright, (it is) to track the sacrifice, to reveal the world of heaven...The post is a bolt; it stands erect as a weapon against the foe." KEITH.

**भृगूणामङ्गिरसां तपसा तप्यध्वम्—भृगोरपत्यानि बहूनि भृगवः । तद्राजस्य बहुषु लुक् ।**

*अस्त्यप्रयुक्तः*[1]

सन्ति वै शब्दा अप्रयुक्ताः । तद् यथा ऊष तेर चक्र पेच इति ।

किमतो यत् सन्त्यप्रयुक्ताः ?

प्रयोगाद्धि भवाञ्च्छब्दानां साधुत्वमध्यवस्यति । य इदानीमप्रयुक्ता नामी साधवः स्युः । इदं तावद्विप्रतिषिद्धम्—यदुच्यते सन्ति वै शब्दा अप्रयुक्ता इति । यदि सन्ति नाप्रयुक्ताः, अथाप्रयुक्ता न सन्ति । सन्ति

[1]This does not appear to be a separate Vārttika, but the first part of Vārttika 2 explained in advance.

चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह—सन्ति शब्दा अप्रयुक्ता इति । कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात् ।

*Is but never used.*

There exist words which are not used, e.g., *ūṣa, tera, cakra, peca*.

What if there exist words which are not used ?

You determine the correctness of words from usage. Now those which are not used cannot be correct.

To say that there are words which are not used is a contradiction in terms. If there are words, they cannot be not in use, and if they are not in use, they are not in existence. That there exist words and they are not used is a contradiction in terms. You use those words and in the same breath you assert that there are words which are not used. What other man of your type will now be an authority in the use of words ?

There are ideas to be expressed by words and so long as there is necessity in the world for the expression of these ideas, the words have to be used.

द्विधा सत्ता—प्रत्यक्षानुमानिकी चेति । तत्र प्रत्यक्षो दाधर्तिदर्धर्तीति । आनुमानिकी प्रकृतिप्रत्ययोपदेशेन । भर्तृहरिः । शास्त्रदृष्ट्या प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः, व्यवहारे तु न दृश्यन्ते । कैयटः ।

एतेषु कश्चिदेव शब्दः कस्मिंश्चित् प्रयुज्यते, यथा पुरुषीशब्दः स्त्रीलिङ्गः क्वचिदप्रयुक्तो मैत्रावरुणीयानां कल्पे [ cf. कात्यायनश्रौतसूत्र २४।६।८ ] प्रयुज्यते । भर्तृहरिः ।

Cf. S'ābara i. 1. 2 : विप्रतिषिद्धमिदमुच्यते, ब्रवीति वितथञ्चेति । S'aṁkara on BAU. i. 2. 1 : येन च कालेन घटस्य सम्बन्धो भविष्यतीत्युच्यते तस्मिन्नेव काले घटोऽसन्निति विप्रतिषिद्धमभिधीयते ।

नैतद्विप्रतिषिद्धम्। सन्तीति तावद् ब्रूमः यदेताञ्छास्त्रविदः शास्त्रेणानुविदधते। अप्रयुक्ता इति ब्रूमो यल्लोकेऽप्रयुक्ता इति। यदप्युच्यते कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यादिति, न ब्रूमोऽस्माभिरप्रयुक्ता इति।

किं तर्हि ?

लोकेऽप्रयुक्ता इति।

ननु च भवानप्यभ्यन्तरो लोके ?

अभ्यन्तरोऽहं लोके न त्वहं लोकः।

It is *not* a contradiction in terms. We say they exist because people well acquainted with the science make provisions for them with the science; and we say they are not used, because they are not used in the world (popular speech). As for your remark "what other man of your type will after this be an authority in the use of words" we do not say "not used by us."

What then ?

They are not in use in the world i.e., they are not current in popular speech.

Excuse me now, but you, too, are one among the people.

I am one among the people, but I am not the people.

कश्चेदानीम्...—यथैषा भवतो बुद्धिः किं ममोच्चारयतः, अनाप्तोऽहमितीदमाह प्रोत्साहनार्थम्। मावमंस्था आत्मानम्। आप्तो भवानिति। कश्चेदानीमन्यो भवज्जातीयकः। कोऽन्यो भवति विद्वत्तरः ? भर्तृहरिः। कश्चेदानीमित्युपहासपरम्। कैयटः। कश्चेदानीमित्यस्यानुपयोगं परिहरति—उपहासेति। परीक्षकप्रयोगो न प्रमाणम्, किन्तु पामरप्रयोग एवेति शङ्कोपहासेन निरस्यते। अन्नंभट्टः। ननु मया प्रयुक्तश्चेत् किम्? तत्र सोपहासमाह—कश्चेदानीमिति। स्वयमेव प्रयोगं कृत्वा "सन्ति चाप्रयुक्ता" इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यात्। त्वत्प्रयोगेणैव प्रयुक्तत्वावगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः।

न त्वहं लोक इति—यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते, नैवं मयैतेऽर्थे प्रयुक्ताः, अपि तु स्वरूपपदार्थकाः। कैयटः।

*अस्त्यप्रयुक्त इति चेन्नाथ शब्दप्रयोगात् ॥२॥*

अस्त्यप्रयुक्त इति चेत् तन्न। किं कारणम्। अर्थे शब्दप्रयोगात्। अर्थे शब्दाः प्रयुज्यन्ते, सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते।

*"Is but never used!" No, because of the use of words to convey meaning.*

To say "is, but never used" will not stand. Why? Because of the use of words to convey sense. Because words are used to convey sense, and to these words are attached the meanings in which they are used.

*अप्रयोगः प्रयोगान्यत्वात् ॥३॥*

अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः। कुतः? प्रयोगान्यत्वात्। यदेतेषां शब्दानामर्थेऽन्याञ्छब्दान् प्रयुञ्जते। तद् यथा ऊषेत्यस्य शब्दस्यार्थे क्व यूयमूषिताः, तेरेत्यस्यार्थे किं[1] यूयं तीर्णाः, चक्रेत्यस्यार्थे किं[1] यूयं कृतवन्तः, पेचेत्यस्यार्थे किं[1] यूयं पक्ववन्त इति।

*Non-use, because of the use of other (words).* It is also correct to speak of the non-use of these words. Why? Because of the use of other (words). Because people use other words in the senses conveyed by these words. Thus in the sense of the word "ūṣa" (you dwelt) they use 'kva yūyam uṣitāḥ" (where did you dwell?), in the sense of "tera" "kiṃ yūyaṃ tīrṇāḥ" (what did you cross?), in the sense of "cakra" "kiṃ yūyaṃ kṛtavantah" (what did you do?) in the sense of "peca", "kiṃ yūyaṃ pakvavantah" (what did you cook?)

---

[1] The printed editions with the exception of Kielhorn read क्व for किम् in the last three sentences. As the reading किम् is decidedly better and as K. does not notice any variant, we have accepted the reading किम

*अप्रयुक्ते दीर्घसत्त्रवत् ॥ ४ ॥*

यद्यप्यप्रयुक्तास्तथाप्यवश्यं दीर्घसत्त्रवल्लक्षणेनानुविधेयाः । तद् यथा दीर्घसत्त्राणि वार्षशतिकानि वार्षसहस्रिकाणि च, न चाद्यत्वे कश्चिदप्याहरति[1], केवलम् ऋषिसम्प्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ।

*In the matter of non-used (words) it is like long sacrifices.*

Though they are not used, they must necessarily be taught by the rules of the S'āstras like protracted sacrifices. Thus there are the protracted sacrifices extending over a hundred and a thousand years, but no one performs them at the present day, only the ritualists enjoin them in their S'āstras because the tradition handed down by seers is Dharma.

*सर्वे देशान्तरे* ॥५॥

सर्वे खल्वप्येते शब्दा देशान्तरे प्रयुज्यन्ते ।

न चैत उपलभ्यन्ते ।

उपलब्धौ यत्नः क्रियताम् । महान् हि शब्दस्य प्रयोगविषयः— सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा विभिन्नाः, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यम्, नवधाथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणम्, वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयम् अननुनिशम्य सन्त्यप्रयुक्ता इति वचनं केवलं साहसमात्रम् ।

*All in other countries.*

---

[1] Most printed editions read **व्यवहरति**, but not only is **आहरति** the appropriate word here, it is also the reading of Kaiyaṭa, Annambhaṭṭa, Nāges'a and Kielhorn.

All these words are used in other countries.

But they are never found.

Try to find them. Vast is the field for the use of words. Thus there is the earth with its seven islands, the three worlds, the four Vedas with their subsidiary studies and the Upaniṣads in all their varieties, the hundred and one branches of the Yajurveda, the Sāmaveda with its thousand paths, the Rigveda with its eleven branches, the Atharvaveda with its nine recensions, the book of catechism, history, Purāṇa and the science of medicine, this is the field for the use of words. To say that there are words which are not used without considering the vast field for the use of words is sheer rashness or foolhardiness.

"All rites with more than twelve pressing days are Sattras : the number of years they may be continued extends to thirty-six or more up to 1, 000." ( Keith). The Sādhyānām Ayana Sattra extended over a hundred years and Vis'vasṛjām Ayana over a thousand. **शतसंवत्सरं साध्यानाम् । सहस्रसंवत्सरं विश्वसृजाम् । कात्यायनश्रौतसूत्र** २४।५।२३-२४. In such cases the Mīmāṃsakas take *years* to mean *days*. See Jaimini Sūtra vi. 7. 31-40.

**सामवेदस्य किल सहस्रभेदा आसन्, अनध्यायेष्वधीयानास्ते शक्रेणाभिहताः प्रनष्टाः । चरणव्यूहपरिशिष्टम् ।**

**पैप्पलादास्तौदा मौदाः शौनकीया जाजला ब्रह्मवदा देवदर्शाश्चारणवैद्याश्च । अथर्ववेदभाष्यम् ।**

**स च वेदो बहुधा भिन्नः—सहस्रवर्त्मा सामवेदः सात्यमुग्रिराणायनादिभेदेन, एकशतमध्वर्यूणां काठकवाजसनेयकादिभेदेन, एकविंशतिर्बाह्वृच्या आश्वलायनैतरेयादिभेदेन, नवधाथर्वणः मोदकपैप्पलादकादिभेदेन । मेधातिथिभाष्यम् २।६**

Vāko-vākya, 'dialogue', is the name given in the Brāhmaṇas to certain portions of the Vedic texts. In one place the *Brahmodya* is said to be a dialogue ; very probably in all the passages the Brahmodya is meant by this term.

Geldner's view is different: he sees in the Vākovākya an essential part of the Itihāsa-Purāṇa, the dialogue or dramatic element as opposed to the narrative portion. *Vedic Index.* "उच्यत इति वाकः पूर्वपक्षवचनम्। . . . उच्यते इति वाक्यम्, उत्तरपक्षवचनम्। वाकश्च वाक्यं च, तयोः समाहारः वाकोवाक्यम्। सर्वो द्वन्द्वो विभाषैकवद् भवतीति समाहारः. In the S'āṃkara Bhāṣya on Chāndogya Upaniṣad vi. i. 2 the word is explained as तर्कशास्त्र.

एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते। तद् यथा शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति; हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव त्वार्याः प्रयुञ्जते। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु।

ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगो दृश्यते।

क्व?

वेदे। सप्तास्ये रेवती रेवदूष [ऋ० सं० ५।५।१४], यद्वो रेवती रेवत्यं तदूष*, यत्रा नरः श्रुत्यं ब्रह्म चक्र [ऋ० सं० १।१६५।११], यत्रा नश्चक्रा जरसं तनूनाम् [ऋ० सं० १।८९।९]।

---

* In most MSS. and printed books the reading is यद्वो रेवती रेवत्यां तमूष which is manifestly incorrect. The correct reading is found in Kielhorn's edition where, however, सप्तास्ये रेवती रेवदूष is relegated to the variants. But since there are two examples of *cakra*, it is extremely likely that there were two examples of *ūṣa* also. Patañjali does not quote instances of the use of *tera* or *peca*. The latter, however, is mentioned again under iii. i. 91: पेच यूयं चक्र यूयमिति (Kielhorn, II, 73,5).

And in this very vast field for the use of words particular words are found used in particular senses in particular provinces. Thus the root *s'u* in the sense of motion is used in speech only in the country of the Kambojas. The Āryas use it in their speech in the sense of transformation, for instance, in the word "s'ava" (dead body). The root *hamma* is used in Surat and *raṅh* in Eastern and Central India. The Āryas, however, use the root *gam* alone. The root *dā* is used in the East in the sense of cutting, while the substantive "dātra" is used in the West*.

Again those words which, in your opinion, are never used are also found used.

Where ?

In the Veda. Thus *saptāsye revatī revad ūṣa* (On Saptāsya, ye have shone wealth, O wealthy ones), *yad vo revatī revatyaṃ tad ūṣa* (Shine on us that which is full of wealth, O wealthy ones), *yan me narah s'rutyaṃ brahma cakra* (the prayer worthy to be heard which, O heroes, you have made for me), *yatrā nas' cakrā jarasaṃ tanūnām* (wherein you have fixed the old age of our bodies.)

"The Kambojas were later settled to the north-west of the Indus and were known as Kambujiya in the old Persian Inscriptions. A teacher, Kāmboja Aupamanyava, pupil of Madragāra is mentioned in the Vaṃs'a Brāhmaṇa. This points to a possible connexion of the Madras, or more probably the Uttara Madras, with the Kambojas, who probably had Iranian as well as Indian affinities." *Vedic Index*. So *cyavati* probably became *s'avati* in Kamboja.

---

"*The Lancashire speaker, who, coming into the warm room, out of the winter cold, declares "I am starving" is not clamorous for food but for warmth ; the Londoner who made the same declaration would be asserting his intense hunger for food."

Both शवति and रंहति are read in the list of गतिकर्मक roots in in Nighaṇṭu. दाति is read in the list of दानकर्मक roots in the Nighaṇṭu.

This is based on *Nirukta* ii. 2 : शवतिर्गतिकर्मा, कम्बोजेष्वेव भाष्यते।....विकारमस्यार्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु।

The root *hamma* is read in the Dhātupāṭha as ह्रम हम्म मीमृ गतौ and रंह as रहि गतौ. Patañjali says : हम्मते हंस: (Kielhorn, Vol. III, p. 26, l. 15)

किं पुन: शब्दस्य ज्ञाने धर्म आहोस्वित् प्रयोगे ?

कश्चात्र विशेषः ?

**ज्ञाने धर्म इति चेत् तथाधर्मः ॥ ६ ॥**

ज्ञाने धर्म इति चेत्, तथाधर्मः* प्राप्नोति। यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः। अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद् यथा गौरित्यस्य गावी गोणी गोता गोपोतलिकेत्यादयोऽपभ्रंशाः।

Now, does religious merit lie in (accrue from) the knowledge of words or their use ?

What is the differenee between the two ?

*If religious merit [lies] in knowledge, so also does demerit.*

Should it be held that religious merits accrue from knowledge, then it follows that demerit also accrues. He who knows the correct words also knows the corrupt forms. Just as knowledge of the correct words leads to religious merit, the knowledge of the corrupt forms gives rise to demerit. Nay, the demerits will be all the greater, for each correct

* तथाधर्मोऽपि—most printed books.

word has many corrupt forms ; thus *gauh*, for instance, has *gāvī*, *goṇī*, *gotā*, *gopotalikā* etc. as its corruptions.

**आचारे नियमः ॥ ७ ॥**

आचारे पुनर्ऋषिर्नियमं वेदयते—तेऽसुरा हेऽलयो हेऽलय इति कुर्वन्तः पराबभूवुरिति ।

*Restriction in use.*

In the matter of *use*, however, restriction is conveyed by the sage (Veda) : those demons saying "he'layo helayah" underwent defeat.

See p. 10.

अस्तु तर्हि प्रयोगे ।

**प्रयोगे सर्वलोकस्य ॥ ८ ॥**

यदि प्रयोगे धर्मः सर्वो लोकोऽभ्युदयेन युज्येत ।

कश्चेदानीं भवतो मत्सरो यदि सर्वो लोकोऽभ्युदयेन युज्येत ?

न खलु कश्चिन्मत्सरः । प्रयत्नानर्थक्यं तु भवति । फलवता च नाम प्रयत्नेन भवितव्यम् । न च प्रयत्नः फलाद् व्यतिरेच्यः ।

ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान् प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते ।

व्यतिरेकोऽपि व लक्ष्यते—दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात् ।

Let it be in the use then, i. e., let us accept the view that religious merit accrues not from the knowledge of words but from their use.

*In the case of use, of the whole world.*

If religious merit lies in the use of words, then the whole world will be endowed with well-being,

Now, why should you be filled with jealousy at the prospect of the whole world being endowed with well-being ?

No, no, no jealousy. It is merely that the effort will be fruitless. I hope you will agree with me (*nāma*) that effort should be attended with fruits. Effort should never be dissociated from its fruits.

Excuse me, but those who have made efforts will make use of words in a better way and will be be better endowed with well-being.

Exceptions are also met with. We do come across cases where those who have taken pains are found to be bunglers and those who have taken no pains experts. In these cases there is the reversal of the fruits also (those who have taken no pains reaping a rich harvest and those who have taken pains going without anything)*.

If so merit lies neither in knowledge alone nor in use alone.

न च प्रयत्नः फलाद्व्यतिरेच्यः—यदि प्रयत्नेन विना फलं स्यात् प्रयत्नस्य वैयर्थ्यमापद्येत । कैयटः । व्याकरणाध्ययनं विनापि साधुशब्दप्रयोगात् फलसिद्धौ तद्वैयर्थ्यं दुर्वारम् । अन्नंभट्टः ।

साधीयः, the comparative of साधु, is an adverb in the sense of सम्यक्.

एवं तर्हि नापि ज्ञान एव धर्मो नापि प्रयोग एव ।

किं तर्हि ?

**शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥ ९ ॥**

शास्त्रपूर्वकं यः शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यते ; तत्तुल्यं

---

*"The race is not always to the swift, nor the battle to the strong."

"प्रयत्ने समके केचिदत्र सुराः फलभागिनः ।
क्षीरोदमथनाद्दैवैरमृतं प्रापि नासुरैः ॥" दृष्टान्तशतकम् ॥ १०

"स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रेणैवोपदिश्यते ॥"

वेदशब्देन। वेदशब्दा अप्येवमभिवदन्ति "योऽग्निष्टोमेन* यजते य उ चैनमेवं वेद", "योऽग्निं नाचिकेतं चिनुते च उ चैनमेवं वेद" [ तै० ब्रा० ३।११।७।२ ] इति।

What then ?

*Well-being in use preceded by science, that is like veda-s'abda.*

He who uses words after having first gone through the science of grammar is endowed with well-being, this is like the veda-s'abda. The words of the Veda also declare in this way: "Yo' agniṣṭomena yajate ya u cainam evaṃ veda". (He who performs the Agniṣṭoma sacrifice and he who knows it in this way [gains such and such rewards]). "Yo' gnim nāciketaṃ cinute ya u cainam evaṃ veda" (he who arranges the sacrificial fire named Nāciketa and he who knows (how to do) it [gains such and such rewards].

**वेदशब्द** is here taken in the sense of 'the Vedas' or 'what is stated in the Vedas'. **"वेदोऽपि ज्ञानपूर्वकानुष्ठानात् फलमिति वदति।" "विदुषः कर्मण्यधिकारात्।" "यद्वा वेदशब्दा वेदार्था अप्येवमेव वदन्ति।"** In what follows the expression is taken to mean 'words in the shape of the Vedas' ( **वेद एव शब्दः** ).

अपर आह—तत्तुल्यं वेदशब्देनेति—यथा वेदशब्दा† नियमपूर्वमधीताः फलवन्तो भवन्ति, एवं यः शास्त्रपूर्वकं शब्दान् प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति।

Another says: "tat tulyaṃ veda-s'abdena" means—Just as the words of the Veda become attended with fruits when

---

* [ तरति ब्रह्महत्यां ] **योऽश्वमेधेन यजते य उ चैनमेवं वेद इति विकल्पश्रुतेः। बृहदारण्यकभाष्यम् १।१।१ तन्त्रवार्त्तिकम् १।३।८**

† Did Patañjali write **नियमपूर्वकम्** ?

they are studied observing the proper restrictions, even so he who uses words in conformity with the science of grammar is endowed with well-being.

अथवा पुनरस्तु ज्ञान एव धर्म इति ।

ननु चोक्तं ज्ञाने धर्म इति चेत् तथाधर्म इति ।

नैष दोषः । शब्दप्रमाणका वयम्, यच्छब्द आह—तदस्माकं प्रमाणम् । शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम् । यच्च पुनरशिष्टाप्रतिषिद्धं नैव तद्दोषाय भवति, नाभ्युदयाय । तद् यथा हिक्कितहसितकण्डूयितानि नव दोषाय भवन्ति, नाभ्युदयाय * ।

Or, let us go back to the view—religious merit lies in knowledge alone.

Excuse me, but it has been said, if religious merit lies in knowledge, religious demerit also lies therein.

---

*अनुकरणं शिष्टाशिष्टाप्रतिषिद्धेषु यथा लौकिकवैदिकेषु । अनुकरणं हि शिष्टस्य साधु भवति । अशिष्टाप्रतिषिद्धस्य वा नैव तद्दोषाय भवति नाभ्युदयाय । यथा लौकिकवैदिकेषु । यथा लौकिकेषु वैदिकेषु च कृतान्तेषु । लोके तावद् । य एवमसौ ददाति य एवमसौ यजते य एवमसावधीत इति तस्यानुकुर्वन् दद्याच्च यजेत चाधीयीत च सोऽप्यभ्युदयेन युज्यते । वेदेऽपि । य एवं विश्वसृजः सत्त्राण्यध्यासत इति तेषामनुकुर्वंस्तद्वत् सत्त्राण्यध्यासीत सोऽप्यभ्युदयेन युज्यते ।। अशिष्टाप्रतिषिद्धम् । य एवमसौ हिक्कति य एवमसौ हसति य एवमसौ कण्डूयतीति तस्यानुकुर्वन् हिक्केच्च हसेच्च कण्डूयेच्च नैव तद्दोषाय स्यान्नाभ्युदयाय । यस्तु खल्वेवमसौ ब्राह्मणं हन्त्येवमसौ सुरां पिबतीति तस्यानुकुर्वन् ब्राह्मणं हन्यात् सुरां वा पिबेत् सोऽपि मन्ये पतितः स्यात । विषम उपन्यासः । यश्चैवं हन्ति यश्चानुहन्ति उभौ तौ हतः । यश्च पिबति यश्चानुपिबति, उभौ तौ पिबतः । यस्तु खल्वेवमसौ ब्राह्मणं हन्ति, एवमसौ सुरां वा पिबतीति तस्यानुकुर्वन् स्नातानुलिप्तो माल्यगुणकण्ठः कदलीस्तम्भं छिन्द्यात्, पयो वा पिबेत् न स मन्ये पतितः स्यात् । एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत सोऽप्यपशब्दभाक् स्यात् । अयं त्वन्योऽपशब्दपदार्थकः शब्दो यदर्थ उपदेशः कर्तव्यः । द्वितीयस्य शिवसूत्रस्य भाष्यम् ।

This difficulty does not arise. We hold the words of the Veda as our authority, what the words declare is our authority. And the words declare religious merit accrues from a knowledge of correct words ; they do not declare that religious demerit accrues from a knowledge of corrupt words. Again that which is neither enjoined nor forbidden conduces neither to well-being nor to demerit, as, for instance, hiccoughing, laughing and scratching are neither conducive to demerit nor to well-being.

अथवाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने। यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति। तदेवं ज्ञाने धर्म इति ब्रुवतोऽर्थादापन्नं भवति—अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्म इति।

Or the knowledge of corrupt forms is the indispensable stepping stone to the knowledge of correct words, for he who knows the corrupt words knows also the correct words. This being the case, when it is said religious merit lies in the knowledge (of words) it is implied that religious merit lies in the knowledge of words preceded by a knowledge of corrupt forms.

**अर्थादापन्नं भवति** i. e., follows *a fortiori*, is obtained by **अर्थापत्ति.**

अथवा कूपखानकवदेतद् भविष्यति—तद् यथा कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति, सोऽप्सु सञ्जातासु तत एव तं गुणमासादयति, येन स च* दोषो निर्हण्यते, भूयसा चाभ्युदयेन योगो भवति। एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धमस्तेन स च* दोषो निर्घानिष्यते[1], भूयसा चाभ्युदयेन योगो भविष्यति।

---

* Printed editions except K. read : **येन च स दोषः.**

[1] Cf. Bhaṭṭi I.22 : **घानिष्यते तेन महान् विपक्षः।**
**निर्घानिष्यते—हन्तेरत्पूर्वस्य** [ ८।४।२२ ] **इति णत्वाभावः।**

Or it will be as in the case of the well-sinker. Thus though a well-sinker becomes covered with mud and dust while sinking the well, when the water spouts forth he derives such a virtue therefrom that the defect is demolished and he becomes endowed with immense well-being. Exactly in the same way in the present case also though religious demerit lies in the knowledge of corrupt forms still the religious merit which lies in the knowledge of correct words will remove the fault root and branch and endow the speaker with immense prosperity.

कूपखानक—All the MSS. read खानक with the long vowel, but Pāṇini distinctly prescribes ष्वुन् to denote the artisan ( शिल्पिनि ष्वुन् iii. 1. 145 ) and Kātyāyana restricts the suffix to नृत् , खन् and रञ्ज् ( नृतिखनिरञ्जिभ्यः ). As Bhaṭṭoji points out the idea of an artisan is not sought to be conveyed here and so ण्वुल् is not used. The simple idea of digging is present in the mind of the speaker. Cf. Manu ii. 218:

यथा खनन् खनित्रेण नरो वार्यधिगच्छति ।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति ॥

This maxim of the Mahābhāṣya has been made use of in the following story related in the Kathā-sarit-sāgara :

आसीत् पृथ्वीपतिर्नाम नगरे दक्षिणापथे ।
तद्राष्ट्रे कोऽप्यभूद्धूर्तः परवञ्चनजीविकः ॥
स चैकदा महेच्छत्वादसन्तुष्टो व्यचिन्तयत् ।
धूर्तत्वेनेदृशा किं मे यदाहारादिमात्रकृत् ॥
प्राप्यते महती येन श्रीस्तादृङ् न करोमि किम् ।
इत्यालोच्य वणिग्वेषमत्युदारं विधाय सः ।
उपासर्पत् प्रतीहारं गत्वा द्वारं महीपतेः ॥
तन्मुखेन प्रविश्यान्तः प्राभृतं चोपनीय सः ।
एकान्ते मेऽस्ति विज्ञप्तिरिति व्यज्ञापयन्नृपम् ॥

राज्ञापि वेषभ्रान्तेन प्राभृतावर्जितेन च ।
तथेति रचितैकान्तस्तमेवं स व्यजिज्ञपत् ।।
दिने दिने मया साकमास्थाने सर्वसन्निधौ ।
भूत्वैकान्ते कथालापं क्षणमेकं कुरु प्रभो ।।
तावताहं प्रतिदिनं दीनारशतपञ्चकम् ।
ददाम्युपायनं देवस्यार्थये न तु किञ्चन ।।
तच्छ्रुत्वाचिन्तयद्राजा को दोषः किमयं मम ।
गृहीत्वा याति दीनारान् ददाति प्रत्युतान्वहम् ।।
महता वणिजा सार्धं कथालापेन का त्रपा ।
इति स प्रतिपद्यैतद्राजा तस्य तथाकरोत् ।।
सोऽपि तस्मै ददौ राज्ञे दीनारांस्तान्यथोदितान् ।
लोकस्तं च महामन्त्रिपदं प्राप्तममन्यत ।।
एकस्मिंश्च दिने धूर्तो मुहुः पश्यन्नियोगिनः ।
साकूतं मुखमेकस्य चक्रे राज्ञा समं कथाम् ।।
निर्गतश्च बहिस्तेन मुखालोकनकारणम् ।
एत्याधिकारिणा पृष्टः स स्वैरं तं मृषावदत् ।।
देशो मे लुण्ठितोऽनेनेत्येवं ते कुपितो नृपः ।
मयातस्ते मुखं दृष्टं शमयिष्याम्यहं च तम् ।।
इत्युक्तस्तेन सोऽलीकमन्त्रिणा सभयो गृहम् ।
आगत्याधिकृतः स्वर्णसहस्रं तस्य दत्तवान् ।।
अन्येद्युश्च समं राज्ञा कथां कृत्वा तथैव सः ।
निर्गत्य धूर्तोऽवादीत्तं नियोगिनमुपागतम् ।।
युक्तियुक्तैर्मया वाक्यैस्तव राजा प्रसादितः ।
धीरो भवाधुनाहं ते सर्वच्छिद्रेषु रक्षकः ।।
इति स्वीकृत्य तं युक्त्या विससर्ज च सोऽपि तम् ।
अधिकारी सदा तैस्तैरुपचारैरुपाचरत् ।।
एवं क्रमेण सर्वेभ्यो नियोगिभ्यः स बुद्धिमान् ।
राजभ्यो राजपुत्रेभ्यः सेवकेभ्यः स युक्तिभिः ।
बह्वीभिराददानोऽर्थानर्जयामास सर्वतः ।।
पञ्च कोटीः सुवर्णस्य कुर्वन् राज्ञा समं कथाः ।।

ततो रहसि राजानं धूर्तमन्त्री जगाद सः ।
देव दत्त्वापि नित्यं ते दीनारशतपञ्चकम् ॥
त्वत्प्रसादान्मया प्राप्ताः पञ्च काञ्चनकोटयः ।
तत् प्रसीद गृहाणैतत् स्वं स्वर्णमहमत्र कः ॥
इत्युक्त्वा प्रकटं राज्ञे कनकं तन्न्यवेदयत् ।
राजापि कृच्छ्रात् तत् तस्य जग्राहार्धं ततो धनात् ॥
तुष्टश्च स्थापयामास महामन्त्रिपदे स तम् ।
सोऽपि प्राप्य श्रियं धूर्तो दानभोगैरमानयत् ॥
एवं प्राप्नोति महतः प्राज्ञोऽर्थान्नातिपापतः ।
कूपखानकवत् प्राप्ते फले दोषं निहन्ति च ॥

यदप्युच्यते—आचारे नियम इति, याज्ञे कर्मणि स नियमोऽन्यत्रानियमः* । एवं हि श्रूयते—यर्वाणस्तर्वाणो† नाम ऋषयो बभूवुः प्रत्यक्ष-

---

* अन्यत्रानियमः is not found in Kielhorn and is most probably a reader's note.

† In this connexion the following extract from an article by Mr. Robert Bernays in Pearson's Magazine will prove interesting: I remember one member who, in the course of a speech on hops, was endeavouring to make an eloquent plea that His Majesty's Government should take a more active interest in the production of poor beer. Unfortunately, he was afflicted with an exaggerated Oxford accent, which resulted in "poor beer" being emasculated into "puah beah". For some reason, this tickled the House, and every time "puah beah" was mentioned, which was at the end of almost every sentence, the laughter grew, until strong men rolled about on the seats in helpless merriment. For ever after, the member, who is a most respectable and hardworking representative of an agricultural constituency, has been known as "Puah Beah."

धर्माणः परावरज्ञा* विदितवेदितव्या अधिगतयाथातथ्याः । ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते । तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम्, ततस्ते पराभूताः ।'

As regards the statement 'restriction in the matter of utterance', that restriction applies to the case of sacrificial rites and there is no restriction in other cases. The story goes: There were sages named Yarvāṇastarvāṇaḥ who had an immediate perception of Dharma, who had fathomed the higher and the lower, who knew all that there was to be known and who had realised the truth. These reverend sages use "yarvāṇastarvāṇah" instead of "yad vā naḥ tad vā naḥ" in conversation; in sacrificial rites, however, they never use corrupt forms. The demons of whom we have spoken above used corrupt forms in religious rites and hence they suffered defeat.

Nāges'a's Mañjūṣa is very illuminating :

**नन्वपभ्रंशानां शक्तत्वेऽर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकसंज्ञापत्तिरिति चेत्, इष्टापत्तेः । अत एव पस्पशायाम्—एवं हि श्रूयते, यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः, ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे कर्मणि पुनर्नापभाषन्ते इति भाष्य उक्तम् । यर्वाणस्तर्वाण इति णान्ताज्जसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम् । अत एव रुत्वोत्वादि, बभूवुरित्यनेन सामानाधिकरण्यञ्च । . . . परं तु साध्वनुशासनेऽस्मिञ् शास्त्रे इति भाष्योक्तेरर्थवत्त्वेन साधूनामेव संज्ञाविधावुद्देश्यत्वमिति नासाधुषु प्रातिपदिकसंज्ञा । यर्वाणस्तर्वाण इत्यादौ सुबप्यसाधुरेव । [ पस्पशायामित्यस्य भाष्य**

---

* In most printed books the reading is **परापरज्ञाः**. But **परावरे ब्रह्मणी वेदितव्ये** is found in the Introduction to the RikPrātis'ākhya. **विदितवेदितव्यः** occurs in the well-known passage of the Kādambari : **तात चन्द्रापीड़, विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति ।** ( Para 103 )

उक्तमित्यत्रान्वयः। भाष्ये पस्पशासंज्ञक आह्निक उक्तमित्यर्थः। स्पश्यते स्पृश्यत उपोद्घाततया तावदुपगम्यत इति स्पशेः कर्मण्यङि बाहुलकाद् द्वित्वे रूपम्।... तत्रभवन्तः पूज्याः। प्रयुञ्जते प्रयुक्तवन्तः। यतस्त एतादृशाः, ततो लौकिकेष्वर्थेष्वतिवैराग्येणाग्रहाभावात्, 'यद्वास्तु नः किं प्रयोजनम्' 'तद्वास्तु वः किं प्रयोजनम्' इत्यर्थे तथा प्रयोक्तव्ये यथा तथा प्रयुक्तवन्त इत्याह—याज्ञे इति। पुनस्त्वर्थे उभयत्र "वर्तमानसामीप्ये" [ ३।३।१३१ ] इति भूते लट्।]

"कूपं खनन् यद्यपि कर्दमेन लिप्यते एव, तथापि ततो लब्धेन जलेन तं मलं दूरीकरोति फलान्तरं च लभते। तथेहापि परिनिष्ठितरूपज्ञानात् पूर्वोत्पन्नप्रत्यवायनिरासं फलान्तरं च लभत इति सोऽयं कूपखानकन्यायः। कूपं खनतीति विग्रहे कर्मण्यणि प्राप्ते वासरूपन्यायेन ण्वुल्। नित्यसमासत्वाभावात् कूपस्य खानक इति स्वपदविग्रहः। न च शिल्पिनि-ष्वुना सरूपेण ण्वुलो बाधः स्यादिति वाच्यम्, इह खननकर्तृत्वमात्रस्य विवक्षया शिल्पित्वस्याविवक्षितत्वात् तस्मात् सर्वथापि गाव्यादिप्रयोगे प्रत्यवाय इति स्थितम्। तत्रेदं भाष्ये सिद्धान्तितम् —याज्ञे कर्मण्येवायम्, न म्लेच्छितवा इत्यस्य क्रतुप्रकरणे पाठात। क्रतुप्रयोगाद् बहिस्त्वपशब्दं प्रयुञ्जानो न दुष्यति। एवं हि श्रूयते—यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परावरज्ञाः। प्रत्यक्षधर्माणः योगजधर्मबलेन साक्षात्कृतधर्माणः। अत्रायं श्रुतेराशयः—योगिन एते विरक्त्यतिशयाल्लौकिकेष्वर्थेष्वाग्रहविरहेण यथा तथास्माकं भवतीति विवक्षवो 'यद्वानस्तद्वानः' इति वक्तव्ये यर्वाणस्तर्वाण इत्यूचुः। याज्ञे कर्मणि पुनः साधूनेव प्रयुक्तवन्तः, तेन यर्वाणस्तर्वाण इत्येवंरूपामेव संज्ञां मुनयो लेभिरे इति। भट्टाश्चाहुः—

स्त्र्यपायमांसभक्षादिपुरुषार्थमपि श्रितः।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्॥

इति। अपरे त्वाहुः—

क्रतोर्बहिःप्रयोगेऽपि पुरुषः प्रत्यवैति हि। इति।

तेषामयमाशयः—नानृतं वदेदित्यनारभ्याधीतः पुरुषार्थोऽपि निषेधस्तावदस्तीति निर्विवादम्। तत्र निषेध्यमनृतं द्विधा—शब्दानृतमर्थानृतं चेति। शब्दस्यार्थस्य वा विपरीतप्रतिपत्तिहेतुभूतमुच्चारणम् अनृतवदनम्। एवं च यथार्थानृतं वदतः प्रत्यवायस्तथा शब्दानृतमपीति तुल्यम्। क्रतुमध्ये पुनरपभाषणे पुरुषोऽपि प्रत्यवैति, क्रतुरपि विगुण इति वचनद्वयबलात् सिध्यतीति दिक्।" शब्दकौस्तुभः।

**यर्वाणस्तर्वाणः**—There were evidently several sages and they were called individually and collectively **यर्वाणस्तर्वाणः**.

Nages'a says in his Laghus'abdendus'ekhara : **स्मृतिपुराणादिषु पतये सखिनेत्यादिव्याकरणानिष्पन्नत्वेनासाध्वेव, त्रिशङ्क्वाद्ययाज्ययाजनादाविव तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषाभावात्, याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च। अस्माकमपि स्मृतिपुराणाध्ययनविधिबलात्, तेषां तपोबलाच्च यज्ञमध्येऽपि तदन्तर्गतत्पाठे दोषाभावः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव। अत एव नदीसंज्ञासूत्रे भाष्ये—"छन्दोवत् कवयः कुर्वन्ति" इत्युक्त्वा "न ह्येषेष्टिरस्ति" इत्युक्तम्।**

Bloomfield and Edgerton give some instances of the interchange of *d* and *r* in the Vedic texts :

**मयि रायो मयि रक्षः। वाजसनेयिसंहिता। मयि दक्षो मयि क्रतुः। मैत्रायणी संहिता।**

**यदा राघति वरदः। वैतानसूत्र। यदा राखाटरौ वदतः। आपस्तम्बश्रौतसूत्र। यदद्याराध्यं वदन्तः। मानवश्रौतसूत्र।**

**अहर्दिवाभिरूतिभिः। वाजसनेयि-संहिता। वहद्दिव्याभिरूतिभिः। मैत्रायणी संहिता।** etc. etc.

अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः ?

सूत्रम्।

**सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥ १० ॥**

सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—व्याकरणस्य सूत्रमिति। किं हि तदन्यत् सूत्राद् व्याकरणं यस्यादः सूत्रं स्यात् ?

[ *Signification of the word Vyākaraṇa.* ]

Now what is the meaning of the word Vyākaraṇa ?

Rule.

*If rule be Vyākaraṇa the use of the genitive is incongruous.*

If rules be grammar then the sense of the genitive does not fit in the expression "vyākaraṇasya sūtram" ( rule of

grammar, for what other thing than the rules is this grammar that the rules may relate to that object ? ...

Under iii. 1. 26 we find :

तत्करोतीत्युपसंख्यानं कर्तव्यम् ।। किं प्रयोजनम् ? सूत्रयत्याद्यर्थम् ।। सूत्रं करोति सूत्रयति ।

इह व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयतीति वाक्ये षष्ठी, उत्पन्ने च प्रत्यये द्वितीया ।

कैयटः । लक्ष्ये लक्षणसमुदाये वा व्याकरणशब्दो वर्तते इति भेदनिबन्धना षष्ठी । यदा तु लक्षण एव सूत्रे व्याकरणशब्दो वर्तते तदा व्यपदेशिवद्भाव-निमित्ता षष्ठी । यदा व्याकरणं सूत्रं करोतीति सामानाधिकरण्यं तदा यथा मुण्डयति माणवकमिति भवति तथा व्याकरणं सूत्रयतीत्यपि भवति ।। उद्द्योतः । लक्ष्ये इति । व्याकरणशब्दः कर्मल्युडन्त इति भावः । लक्षणसमुदाये वेति । अष्टाध्यायीरूपेऽर्थे करणल्युडन्तः स इति भावः । यदा तु लक्षण एवेति । प्रतिसूत्रं व्याकरणशब्द इत्यर्थः । यदेति व्यपदेशिवद्भावाद्यनाश्रयण इत्यर्थः ।

भाष्यम् । योऽसौ सूत्रव्याकरणयोरभिसम्बन्धः स उत्पन्ने प्रत्यये निवर्तते ; अस्ति च करोतेर्व्याकरणेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति ।।

As a matter of fact व्याकरण is not सूत्र but सूत्रसन्तान.

**शब्दाप्रतिपत्तिः ।। ११ ।।**

शब्दाप्रतिपत्तिः प्राप्नोति—व्याकरणाच्छब्दान् प्रतिपद्यामह इति । न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते ।

किं तर्हि ?

व्याख्यानतश्च ।

ननु च तदेव सूत्रं विगृहीतं व्याख्यानं [1] भवति ।

न केवलानि* चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐच् इति ।

---

[1] सूत्रेष्वेव हि तत् सर्वं यद्वृत्तौ यच्च वार्त्तिके ।
सूत्रं योनिरिहार्थानां सूत्रे सर्वं प्रतिष्ठितम् ।

* Most editions read न केवलम्, but cf. न केवला प्रकृतिः प्रयोक्तव्या न केवलः प्रत्ययः under i.2.64.

किं तर्हि ?

उदाहरणं प्रत्युदाहरणं वाक्याध्याहारः—एतत् समुदितं व्याख्यानं भवति[1]।

*Non-comprehension of words.*

There arises also the non-comprehension of words, (and statements) like 'we learn correct words from grammar' (become absurd), for people do not learn words from rules alone.

What then ?

From the exposition also.

Excuse me, but the self-same rule when analysed becomes the exposition.

Merely the words of the rules e. g., "vṛddhiḥ āt aic" do not constitute the exposition.

What then ?

Examples , counter-examples, supplying of what is wanting in the sentence—all these together constitute the exposition.

**चर्चापदानि—चर्चा अभ्यासः। यथा वेदे अभ्यासार्थं विभक्तानि पदान्युच्यन्ते तद्वदुक्तानीत्यर्थः। वाक्याध्याहारः। आदैच् वृद्धिसंज्ञो भवतीति वाक्यशेषाध्याहार इत्यर्थः। अन्नंभट्टः।**

एवं तर्हि, शब्दः।

**शब्दे ल्युडर्थः॥ १२॥**

यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते*, व्याक्रियतेऽनेनेति व्याकरणम्। न हि शब्देन किञ्चिद् व्याक्रियते।

---

1 **उपोद्घातः पदञ्चैव पदार्थः पदविग्रहः।**
**चालना प्रत्यवस्थाश्च व्याख्या तन्त्रस्य षड्विधा॥**

* Many MSS. and printed editions have **व्याक्रियन्ते शब्दा अनेन**, but **न हि शब्देन किञ्चिद् व्याक्रियते** shows that the reading adopted in the text is the correct one.

केन तर्हि ?

सूत्रेण ।

If so, Sa'bda (word) is Vyākaraṇa.

*In the case of Sa'bda, the sense of lyuṭ is incongruous.*

If S'abda be Vyākaraṇa, then the sense of lyuṭ, does not fit in, when we say "Vyākriyate anena iti vyākaraṇam" (that by means of which analysis is made is grammar), for nothing is analysed by means of words.

By what then ?

By rules.

**भवे च तद्धितः* ॥ १३ ॥**

भवे च तद्धितो नोपपद्यते—व्याकरणे भवो योगो वैयाकरण इति। न हि शब्दे भवो योगः ।

क्व तर्हि ?

सूत्रे ।

*And the Taddhita in the sense of " bhava ".*

The taddhita in the sense of "bhava" (existing in) also in the statement—vyākaraṇe bhavo yogo vaiyākaraṇah (a rule found in grammar is vaiyākaraṇa or grammatical) does not fit in, for the rule never exists in the word.

Where then ?

In the rule.

**प्रोक्तादयश्च तद्धिताः ॥ १४ ॥**

प्रोक्तादयश्च तद्धिता नोपपद्यन्ते, पाणिनिना प्रोक्तम् पाणिनीयम्, आपिशलम्, काशकृत्स्नम् इति । न हि पाणिनिना शब्दाः प्रोक्ताः।

किं तर्हि ?

सूत्रम् ।

---

* Kielhorn reads simply **भवे** .

*And the Taddhitas in the sense of "prokta" (spoken by, etc.*

And the taddhita suffixes added in the sense of 'spoken by' as in Pāṇinīyam 'spoken by Pāṇini', Āpis'alam (spoken by Āpis'ali), Kās'akṛtsnam (spoken by Kās'akṛtsna). It is not words that were spoken by Pāṇini.

What then ?

Rules.

किमर्थमिदमुच्यते भवे प्रोक्तादयश्च तद्धिता इति, न प्रोक्तादयश्च तद्धिता इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ।

पुरस्तादिदमाचार्येण दृष्टम्—भवे च तद्धित इति, तत् पठितम् । तत उत्तरकालमिदं दृष्टं प्रोक्तादयश्च तद्धिता इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।

Why have the two rules 'bhave" and "proktādayas' ca taddhitāh" been both read and not the latter alone, for even in that case the taddhita in the sense of "bhava" would have been objected to (because of the word ādi in proktādi, all similar rules would have been included) ?

The renowned teacher [Kātyāyana] first thought of the taddhita in the sense of "bhava" and he said "bhave ca taddhitah", then he thought of the taddhitas in the sense of "prokta" etc., and he said "proktādayas' ca taddhitāh". Now Ācāryas do not cross out rules after once having framed them.

Patañjali evidently means : The word *ādi* in the Vārttika **प्रोक्तादयश्च तद्धिताः** not only includes : **उपज्ञाते । कृते ग्रन्थे ।** ४।३।११५-१६ etc., but also **तत्र भवः** ४।३।५३, since *ādi* here does not mean 'beginning with' but 'of the type of'. So **भवे च तद्धितः** is covered by **प्रोक्तादयश्च तद्धिताः** and ought not to have found a place here. But the fact is the author of the Vārttikas first

thought of तत्र भवः and framed the Vārttika भवे च तद्धितः, then he thought of तेन प्रोक्तम् etc. and added the Vārttika प्रोक्तादयश्च तद्धिताः, but did not expunge what he had written previously, for Ācāryas do not strike out rules once they have been laid down. This is what Kaiyaṭa means by saying : लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्त्तिकानामुपपत्त्या दोषाभावः। On this Nāges'a says : यथा कर्मधारयप्रकरणे, अलुक्प्रकरणे च। विजिगीषुकथायां ह्यभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय, इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः। पूर्वं सामान्य उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये। The Chāyā explains: लक्षणप्रपञ्चाभ्याम्। सामान्यसूत्रविशेषसूत्राभ्याम्। . . . यथेति। "विशेषणं विशेष्येण बहुलम्" [ २।१।५७ ] इत्यस्याग्रिमसूत्राणि प्रपञ्चभूतानि। तथा "अलुगुत्तरपदे" [ ६।३।१ ] इत्यस्याग्रिमाणि ॥ आचार्या महर्षयो वेदसम्मिता आत्मोक्तं न निवर्तयन्ति हि यतो व्युत्पादनाय व्याख्येयेऽर्थे तेषां तात्पर्यम्। आत्यन्तिकदोषासम्भवान्नेदृशलाघवादरस्तेषामित्येवं भाष्यस्य युक्तत्वेऽपि कैयटोक्ता दृष्टान्तेनोपपत्तिरयुक्तेत्याशयेनाह--पूर्वमिति।

न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति—Cf. प्रातिपदिकस्य च प्रत्यापत्तिः। ६।३।३४।२ प्रातिपदिकस्य च प्रत्यापत्तिर्वक्तव्या। एनी भार्यास्य एतभार्यः। श्येतभार्यः॥ स्थानिवत्प्रसङ्गश्च। ६।३।६४।३ स्थानिवद्भावश्च प्राप्नोति। पट्वी भार्यास्य पटुभार्यः। मृदुभार्यः। ...किमर्थमिदमुभयमुच्यते, न प्रातिपदिकस्य च प्रत्यापत्तिरित्येव स्थानिवद्भावोऽपि चोदितः स्यात्? पुरस्तादिदमाचार्येण दृष्टं स्थानिवत्प्रसङ्गश्चेति तत् पठितम्। तत उत्तरकालमिदं दृष्टम्—प्रातिपदिकस्य च प्रत्यापत्तिरिति तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥

अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे।८।२।६।९ अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते॥ प्रगृह्यसंज्ञायां च। ८।२।६।१० प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये। अमी अत्र। अमी आसते। अमू अत्र। अमू आसाते॥ ..किमर्थमिदमुभयमुच्यते न प्रगृह्यसंज्ञायामित्येव स्वरेऽपि बहिष्पदलक्षणे चोदितं स्यात्। पुरस्तादिदमाचार्येण दृष्टं स्वरे बहिष्पदलक्षण इति तत् पठितम्। तत उत्तरकालमिदं दृष्टम्

**प्रगृह्यसंज्ञायां चेति तदपि पठितम्। न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति।**

अयं तावददोषो यदुच्यते शब्दे ल्युडर्थ इति। नावश्यं करणाधिकरणयोरेव ल्युड् विधीयते।

किं तर्हि ?

अन्येष्वपि कारकेषु—कृत्यल्युटो बहुलम् [ ३।३।११३ ] इति, तद् यथा प्रस्कन्दनं प्रपतनमिति।

अथवा शब्दैरपि शब्दा व्याक्रियन्ते—तद् यथा गौरित्युक्ते सर्वे सन्देहा निवर्तन्ते—नाश्वो न गर्दभ इति।

The defect pointed out in the statement "S'abde lyudarthah" is no defect, for lyuṭ is not necessarily prescribed to denote the Instrumental or the Locative.

What then ?

To denote other case-relations also ; e.g., *praskandanam* that *upon* which something slips down, *prapatanam* that *from* which something falls down.

Or, (the statement 'nothing is analysed by means of words' is not correct, for) it is by means of words that words are analysed. Thus when we say "a cow" all doubts are set at rest—this is not a horse nor an ass.

**प्रस्कन्दनम्**—The Kās'ikā has **प्रस्कन्दनम् प्रपतनम्** as examples under **कृत्यल्युटो बहुलम्** vii. 3. 113 and **प्रपतनम्** under **भीमादयोऽपादाने** iii. 4. 74, but **भीमादयोऽपादाने** evidently refers to words formed with **उणादि** suffixes and so **प्रपतन** should be expunged from the bhīmādi-gaṇa. Kaiyaṭa, however, says :

प्रस्कन्दनमिति। यद्यप्ययं भीमादिः, तथापि "कृत्यल्युटो बहुलम्" [३।३।११३] इत्यस्यैव "भीमादयोऽपादाने" [ ३।४।७४ ] इत्ययं प्रपञ्च इति भावः। कैयटः। यथा "कृत्यल्युटो बहुलम्" इत्यादेः "भीमादयोऽपादाने" इत्यादिः प्रपञ्चः तथा "प्रोक्तादयश्च तद्धिताः" इत्यस्य "भवे" इति प्रपञ्च इति न पौनरुक्त्यदोषः, वार्त्तिकस्यापि सूत्रतुल्यत्वादित्यर्थः। अन्नंभट्टः।

Because of the magic word 'bahulam' the rule "*kṛtya-lyuṭo bahulam*" is very elastic and gerundive suffixes and lyuṭ may be added in other senses also. "Bahulam" is thus explained :

**क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।**
**विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥**

अयं तर्हि दोषः—भवे प्रोक्तादयश्च तद्धिता इति ।

एवं तर्हि

**लक्ष्यलक्षणे व्याकरणम् ।**

लक्ष्यं च लक्षणं* चैतत् समदितं व्याकरणं भवति ।

किं पुनर्लक्ष्यं लक्षणं च ?

शब्दो लक्ष्यः सूत्रं लक्षणम् ।

एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते, सूत्राणि चाप्यधीयान इष्यते वैयाकरण इति ।

नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्त्तन्ते†, तद् यथा पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नीलः‡ कपिलः इति । एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते ।

But the defect mentioned in the Vārttikas,—(1) bhave ...and (2) proktādayas' ca taddhitāh stands.

If that be so, then our definition will be—

*Words and rules (for their formation)—are grammar.*

---

* **उत्तमो लक्षणज्ञानी लक्ष्यज्ञानी तु मध्यमः ।**
**लक्ष्यलक्षणयोर्ज्ञानी तद्धि पात्रं प्रचक्षते ॥ अमोघानन्दिनी शिक्षा १२५**

† **दृश्यन्ते** v.l.

‡ Many printed books read **शुक्लो नीलः कपिलः कृष्णः** .

Words and rules (for their formation)—these two joint constitute grammar.

Now what is *lakṣya* and what *lakṣaṇa*?

Word is "lakṣya" and rule "lakṣana".

Even then there arises this defect. The word "Vyākaraṇa" denoting both (lakṣya and lakṣaṇa) should not be used to denote one of the two, as one reading the rules alone is also known as Vaiyākaraṇa.

This objection cannot stand, for words denoting the whole are found used in reference to the parts also; e g., the Eastern Pañcālas, the Northern Pañcālas, oil has been eaten, butter has been eaten, white, blue, tawny, etc. In the same way this word Vyākaraṇa denoting both (lakṣya and lakṣaṇa) is used with reference to one of the two.

अथवा पुनरस्तु सूत्रम् ।

ननु चोक्तम्—सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्न इति ।

नैष दोषः, व्यपदेशिवद्भावेन* भविष्यति ।

यदप्युच्यते—"शब्दाप्रतिपत्तिरिति । न हि सूत्रत एव शब्दान् प्रतिपद्यन्ते । किं तर्हि ? व्याख्यानतश्च" इति । परिहृतमेतत्—"तदेव सूत्रं विगृहीतं व्याख्यानं भवति" इति ।

ननु चोक्तम्—"न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐच् इति । किं तर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत् समुदितं व्याख्यानं भवति" इति ।

---

* Cf. S'aṃkara on BAU. i .1.: अथ घटस्य प्रागभाव इति घटस्य यत् स्वरूपं तदेवोच्येत, घटस्य इति व्यपदेशानुपपत्तिः । अथ कल्पयित्वा व्यपदिश्येत शिलापुत्रकस्य शरीरमिति यद्वत् तथापि घटस्य प्रागभाव इति कल्पितस्यैवाभावस्य घटेन व्यपदेशो न घटस्वरूपस्यैव । [यत्र सम्बन्धं कल्पयित्वा व्यपदेशः, तत्र न वास्तवो भेदो यथा राहुशिरसोः, तथात्रापि कल्पिते सम्बन्धे भेदस्य तथात्वात्, वास्तवत्वं सम्बन्धिनोरन्यतरस्य स्यात् । आनन्दगिरिः ।]

अविजानत एतदेवं भवति । सूत्रत एव हि शब्दान् प्रतिपद्यन्ते ।
आतश्च सूत्रत एव, यो ह्युत्सूत्रं कथयेन्नादो गृह्येत ।

Or let us go back to our earlier statemeut that grammar is rule.

But it was objected that if grammar be rule only then the sense of the genitive in such an expression as "vyākaraṇasya sūtram" 'rule of grammar' does not fit in.

This defect dces not arise, for the sense of the genitive will fit in acc. to the maxim of "vyapades'ivadbhāva".

The objection regarding non-comprehension of words that people do not learn words from rules alone but from the exposition also has already been answered by the assertion—the self-same rules when analysed become the exposition i.e., what is latent in the rule is patent in the exposition.

But it has been said "exposition does not merely mean the separate words of the rule"—e.g., vṛddhih, āt, aic, but example, counter-example, supplying of what is wanting in the sentence—all these together constitute exposition.

This is the case with the ignorant man. It is from the rules that people learn words. There is the additional reason in favour of our contention that people learn words from the rule alone: he who says something not warranted by the rules, what he says is not accepted.

व्यपदेशिवद्भाव is a well-known principle of grammar. Nāges'a, following Kaiyaṭa, explains it thus:

निमित्तसद्भावात् विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी यस्तु व्यपदेशहेत्वभावाद् अविद्यमानव्यपदेशः असहायः स तेन तुल्यं वर्तते कार्यं प्रतीति एकस्मिन्नसहायेऽपि तत् कार्यं कर्तव्यमित्यर्थः ।

That which has received a particular designation because of the presence of certain factors is *Vyapades'in*. When, however, something stands alone and consequently the conditions

not being present the particular designation does not attach to it, because of the absence of those factors, it may still be regarded for purposes of grammatical operations as the one to which the special designation was attached, just as we find in everyday life that when a man has only one son, that son may be regarded as his eldest son or as his youngest son. Thus the suffix इञ् is prescribed in the case of stems ending in अ, words like *dakṣa, aplksa* etc. end in अ and so admit the suffix, but the word अ meaning Viṣṇu does not end in अ, it itself is अ, still the suffix *iñ* is added to it in the sense of 'apatya'.

लोकेऽपि बहुपुत्रत्वे नैकस्मिन्ञ् ज्येष्ठत्वकनिष्ठत्वव्यवहारः—अयं मे ज्येष्ठः कनिष्ठो मध्यम इति।

Similarly we speak of राहोः शिरः 'the head of Rāhu' though Rāhu is nothing but the head. In exactly the same way we can speak of the rules of Grammar, though grammar is nothing but rules, regarding grammar as a whole and the rules as part of it.

आतः—नन्वात इति निपातसमुदायस्य न कश्चिदर्थः। अत आह [कैयटः]—आत इति निपातः, अतश्च हेतोरित्यर्थः। अन्नंभट्टः।

यो ह्युत्सूत्रं कथयेन्नादो गृह्येत—Here नादः evidently is to be dissolved as न and अदः, the pronoun referring to his words. This leaves the sentence without a correlative of यः in the first clause. This is highly irregular, but we must remember that Patañjali is lecturing to his students and in the colloquial style we have any number of such anomalies. Thus we find under 1. 2. 64. 29 : यो हि गामश्व इति ब्रूयात्, अश्वं वा गौरिति न जातुचित् सम्प्रत्ययः स्यात्।

Many commentators propose to take नादः as one word meaning 'sound'—the sound alone and not the sense will be recognised. नाद इति नैतदित्यर्थः। अथवा नादोऽर्थरहितत्वाद् घोषमात्रमेवेत्यर्थः। कैयटः। नाद इति पदद्वयमङ्गीकृत्याह—नैतदिति। ध्वनिपर्यायं नादशब्दमङ्गीकृत्याह—अथवेति। अन्नंभट्टः।

Language is the vehicle of thought. Thought is expressed in sentences. Therefore a sentence is the unit of language. A sentence when anlaysed is found to consist of words which may be broken up into base and suffixes. So Vyākaraṇa or analysis concerns itself with base and suffix. It has apparently nothing to do with the letters of the alphabet. Why should then the fourteen sūtras which are concerned with the enunciation of the letters of the alphabet form a part of grammar ? This question is discussed in this section.

अर्थप्रयुक्ते शब्दप्रयोगे धर्मनियमः। नात्रैतेऽर्थवन्तः। तत्रैतेषामुपदेशोऽनर्थकः। भर्तृहरिः।

अथ किमर्थो वर्णानामुपदेशः ?

**वृत्तिसमवायार्थ उपदेशः ॥१५॥**

वृत्तिसमवायार्थो वर्णानामुपदेशः।

किमिदं वृत्तिसमवायार्थ* इति।

वृत्तये समवायो वृत्तिसमवायः, वृत्त्यर्थो वा समवायो वृत्तिसमवायः, वृत्तिप्रयोजनो वा समवायः वृत्तिसमवायः।

का पुनर्वृत्तिः ?

शास्त्रप्रवृत्तिः।

अथ कः समवायः ?

वर्णानामानुपूर्व्येण सन्निवेशः।

अथ क उपदेशः ?

उच्चारणम्।

कुत एतत् ?

---

* Should we read : **किमिदं वृत्तिसमवाय इति ?**

दिशिरुच्चारणक्रियः। उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति।

Now, what is the enunciation of the letters for?

*Vṛttisamavāyārthaḥ.*

What is this Vṛttisamavāya?

Vṛtti-samavāya is vṛttaye samavāyah i.e, 'grouping for the sake of vṛtti' or vṛttyarthah samavāyah 'grouping for the purpose of vṛtti or vṛttiprayojanah samavāyah 'grouping having vṛtti as its result'.

What, again, is "vṛtti"?

The application of the science.

Now what is "upades'a"?

Enunciation.

How is this?

The root *dis'* means to enunciate (articulate), for have enunciated the letters, the author says these letters have been upadiṣṭa.

वृत्तिसमवायार्थो वर्णानामुपदेशः। न स्वेषां स्वरूपावधारणार्थ उपदेशः, किन्तु स्वानुपूर्व्यर्थः अनेनानुपूर्व्येण शास्त्रे किञ्चित् कार्यं यथा कुर्युरिति। शास्त्राङ्गोपसंग्रहार्थमेतदित्येवमर्थमाचष्टे। वृत्तेः समवायो वृत्तिसमवाय इति षष्ठीसमासोऽयम्। भेदस्तादर्थ्येन प्रदर्श्यते, अश्वघासवत्। वृत्त्यर्थो वा समवाय इति। समवायस्य वृत्तिं प्रति निमित्तभाव आख्यायते। यथासंख्यं हि सन्निवेशमात्रादेव प्रवर्तते। वृत्तिश्चासौ समवायश्चेति वृत्तिसमवाय इति, यथा शाकपार्थिव इति। वृत्तिप्रयोजनो वेति। पारम्पर्येण निमित्तभावो निर्दिश्यते। पारम्पर्येण शास्त्रप्रवृत्तिः समवायस्य प्रयोजिका। भर्तृहरिः।

का पुनर्वृत्तिः? शास्त्रप्रवृत्तिः। कुत एवम्? वृत्तिरिति क्रिया, क्रिया च साधनाकाङ्क्षिणी, तत्र प्राकरणिकं शब्दानुशासनशास्त्रं साधनत्वेन प्रतीयते शास्त्रप्रवृत्तौ यः समवायः तदर्थो वर्णानामुपदेशः। उपदिश्यतेऽनेनेत्युपदेशः।... इतरो भावसाधनमाचष्टे—उच्चारणम्।... यस्मिन् व्यापारे निर्वृत्ते, अनन्तरो यः शब्दः प्रयुज्यते तस्य तादर्थ्यं विज्ञायते। यथा भुक्तवत्सु प्रविष्टेषु ब्राह्मणेषु भुक्तं ब्राह्मणैः प्रविष्टा ब्राह्मणा इति। गम्यत एतत् नूनमयं भुजेः विशेषार्थः

इति। एवमिहापि वर्णेषुच्चारितेष्वनन्तरं पृच्छति--किमर्थं उपदेश इति। ते प्रतिपद्यामहे—दिशिरुच्चोरणक्रिय इति। भर्तृहरिः।

Nāges'a's remarks are very interesting :

वृत्तिसमवायार्थ इति। वृत्तिः शास्त्रप्रवृत्तिः, तदुपयोगी समवायः वर्णगतः क्रमविशेषः, स बोध्यत्वेन अर्थः प्रयोजनं यस्य सः तथोक्तः। सति ह्यक्षर-समाम्नायेऽजादिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिः "इग्यणः०" [१।१।२५] इत्यादौ यथासंख्यप्रवृत्तिश्चेति भावः। अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम्। [ अनेन उक्तार्थेकोक्तवार्त्तिकेन। अस्य वर्णसमाम्नायस्येत्यर्थः। छाया। ] अत एव मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं पठति [१।१।१ भाष्य] इति वक्ष्यति। अन्यकर्तृकत्वं च सूचितम्। पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश इत्युक्ते उपदेशे गुरुकर्तृकतायाः स्वरसतः प्रतीतेः, सिद्धोच्चारणेऽपि मन्त्रोपदेश इत्यादावुपदेशव्यव-हारात्। अनुबन्धकरणार्थं इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात्। तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः।

**अनुबन्धकरणार्थश्च ॥१६॥**

अनुबन्धकरणार्थश्च वर्णानामुपदेशः—अनुबन्धानासङ्क्ष्यामीति। न ह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम्।

स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च, वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम्, प्रत्याहारो वृत्त्यर्थः।

*For the purpose of making the Anubanbhas.*

The enunciation of the letters is also for the making of the Anubandhas—so that I may tag on the indicatory letters, for the anubandhas (indicatory letters) cannot be tagged on without enunciating the letters.

This enunciation of letters is for the purpose of grouping for the sake of (brevity in) the application of the science and grouping for the making of the anubandhas, and the grouping for the sake of (brevity in) grammatical application and the making of the Anubandhas are for the purpose of Pratyāhāra.

इष्टबुद्ध्यर्थश्च ।

इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः, इष्टान् वर्णान् भोत्स्य* इति । न ह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ।

*Also for the knowledge of the desired letters.*

The enunciation of the letters is also for the knowledge of the desired letters—so that we may have the necessary letters. The desired letters cannot be learnt without the enunciation of the letters.

**इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥१७॥**

इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः । एवंगुणा अपि हि वर्णा इष्यन्ते ।

आकृत्युपदेशात् सिद्धम् ।

अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति, तथेवर्णाकृतिस्तथोवर्णाकृतिः ।

*If the enunciation of the letters be also for a knowledge of the desired letters, the enunciation of the acute accent, the grave accent, the circumflex accent, the nasalized vowels, the long vowels and the prolated vowels.*

If the enunciation of the letters be for the knowledge of the desired letters, then the acute, grave and circumflex accents, the nasalized, long and prolated vowels should also be enunciated, for letters of these qualities are also postulated.

*The purpose is served by the enunciation of the class.*

The genus *a* being enunciated will include all varieties

---

* Most editions have **भोत्स्यामहे**, but **असंदेक्ष्यामि** under the previous Vārttika shows that **भोत्स्ये** is the correct reading.

of *a*, similarly the genus *i* and the genus *u* (will comprehend every shade of the vowel quality and every degree of stress or kind of tone).

**आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधः ॥१८॥**

आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः।

के पुनः संवृतादयः ?

संवृतः कलः ध्मातः एणीकृतः अम्बूकृतः अर्धकः ग्रस्तः निरस्तः प्रगीतः उपगीतः क्ष्विण्णः रोमश इति। अपर आह—

ग्रस्तं निरस्तमविलम्बितं हृत-
मम्बूकृतं ध्मातमथो विकम्पितम्।
सन्दष्टमेणीकृतमर्धकं द्रुतं
विकीर्णमेताः स्वरदोषभावनाः॥

इति। अतोऽन्ये व्यञ्जनदोषाः।

*If you say the purpose is served by the enunciation of the class, the exclusion of (the defects) Saṃvṛta etc. is necessary.*

If you say the purpose is served by the enunciation of the class, the exclusion of the defects Saṃvṛta etc. should be stated.

Now what are the defects Saṃvṛta etc. ?

Saṃvṛta (close), kala (lisping), dhmāta (blown), eṇīkṛta (indistinct), ambūkṛta (pronounced with closed lips), ardhaka (shortened), grasta (held at the root of the tongue), nirasta (pushed forward, jerked), pragīta (sung), upagīta (sung indistinctly), kṣviṇṇa (trembling) and romas'a (grave).

---

*In the Chāndogyopaniṣad we find :

**सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः, इन्द्रे बलं ददानीति। सर्वे उष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः—प्रजापतेरात्मानं परिददानीति, स्पर्शा लेशेनानभिनिहिता वक्तव्या :—मृत्योरात्मानं परिहराणीति। २।२२।५**

Another says :

Grasta (held at the root of the tongue ), nirasta (jerked), avilambita (rapid), hata (killed i. e. slurred over), ambūkṛta (pronounced with closed lips), dhmāta (blown), vikampita (quivering), sandaṣṭa (pressed closely together), eṇīkṛta (indistinct), ardhaka (shortened), druta (hasty) and vikīrṇa (flowing over) these are the varieties of vowel-defects.

Besides these there are faults (in the pronunciation) of consonants.

भावना गात्राणि। गात्रवत् प्रधानभूतानि। यथा शरीरस्यानेकविधा अवयवाः, तद्वत् तेषामप्यनेकभेदाः सन्तीत्यर्थः। अन्नंभट्टः। गोत्राणीति। स्वरदोषजातय इत्यर्थः। नागेशः।

संवृतादीनामिति। एकारादीनां संवृतत्वे दोषः, न त्वकारस्य तस्य संवृतगुणत्वात्। तत्र सन्ध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः। कलः स्थानान्तरनिष्पन्नः काकलीत्वेन प्रसिद्धः। ध्मातः श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते। एणीकृतः अविशिष्टः—किमयमोकारः, अथौकार इति यत्र सन्देहः। अम्बूकृतो यो व्यक्तोऽप्यन्तर्मुख व श्रूयते। अर्धको दीर्घोऽपि ह्रस्व इव। ग्रस्तो जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे। निरस्तो निष्ठुरः। प्रगीतः सामवदुच्चारितः। उपगीतः समीपवर्णान्तरगीत्यनुरक्तः। क्ष्विण्णः कम्पमान इव। रोमशः गम्भीरः। अविलम्बितः वर्णान्तरसंभिन्नः। हतः रूक्षः। सन्दष्टः वर्धित इव। विकीर्णः वर्णान्तरे प्रसृतः, एकोऽप्यनेकनिर्भासीत्यपरे। कैयटः।

Extracts from the Prātis'ākhyas and the S'ikṣās will be found in the notes at the end of the book.

नैष दोषः।

**गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिः ॥ १९ ॥**

गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति* ।

---

* Pandit Guruprasad Sastri thinks that after this there was a Vārttika **समुदायसाधुत्वार्थं तु गर्गादिबिदादिपाठः**, though none of the MSS. shows it.

अस्त्यन्यद् गर्गादिबिदादिपाठे प्रयोजनम् ।

किम् ?

समुदायानां साधुत्वं यथा स्यादिति ।

[**प्रत्यापत्तिवचनम् ।** * ]

एवं तह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि ।

सा तर्हि वक्तव्या ।

This defect does not arise.

*The exclusion of Saṃvṛta and other faults by the enunciation of the Garga and Bida groups.*

Saṃvṛta and other faults will be excluded by the enunciation of the Garga and Bida Groups.

There is another reason for the enunciation of the Garga and Bida Groups.

What is that reason ?

So that the correctness of the whole i. e., the stem with the suffix may be secured. (Had the words of the two groups not been stated, how could we have formed words by adding the desired suffixes to them ?)

[*Statement of restoration.*]

If so, I shall mention the restoration of *a* which is of

---

* Pandit Guruprasad Sastri surmises that there was a Vārttika **प्रत्यापत्तिवचनम्** here, though it is not found in any of the MSS. available to us. He says : **इदं वा वार्त्तिकम् 'प्रत्यापत्तिवचनात् सिद्धम्' इति वा वार्तिकमत्र लुप्तमिति विभाव्यास्माभिरत्रेदं वार्तिकं स्थापितम् । तत्त्वं तु भगवानेव वेत्ति ।** In view of the Uttarapakṣa Vārttika **लिङ्गार्था तु प्रत्यापत्तिः** it is possible that there was such a Vārttika here.

eighteen varieties and which is free from *kala* and other defects. (Just as in the case of अ which is Saṃvṛta, the author regards it for purposes of grammatical operations as Vivṛta, but in the very last rule restores it to its Saṃvṛta character ( अयम् अ अ इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति ), I shall frame a rule restoring the vowel in all its eighteen varieties to its pure character, free from the defects *kala* etc.).

That, then, must be stated (and the statement will involve *gaurava* or prolixity).

**यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात् समुदायसाधुत्वार्थोऽपि भवति। कैयटः। साधुत्वं निवृत्तकलादिदोषवत्त्वम्।...समुदायानामेतत्-प्रकृतिकयञन्तसमुदायानां साधुत्वं यथा स्यादित्ययं पाठश्चरितार्थो न कलादिदोषं निवर्तयेदित्येव भाष्यार्थः, "पाठश्चैव विशेष्यते" इत्यग्रिमभाष्यस्वरसात्। नागेशः।**

**निवृत्तकलादिकामिति। अकारस्य संवृतत्वात् "निवृतसंवृतत्वादिकाम्" इति नोक्तम्। अकारस्य निदर्शनार्थत्वात् सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः। कैयटः। निदर्शनार्थत्वात् उपलक्षणार्थत्वात्। अन्नंभट्टः। तत्रावर्णस्य "अ अः" [८।४।६८] इति कृतैव, तद्वत् तदनन्तरमन्येषामपि करिष्यामीति भावः। एतेनावर्णप्रत्यापत्तेः कृतत्वाद् वक्ष्यामीत्यनुपपन्नमिति परास्तम्। नागेशः।**

The Gargādi-gaṇa (iv. 1.105) and Bidādi-gaṇa (iv. 1.104) contain a large number of words. The vowels in these words have to be pronounced correctly. So the student will learn the correct pronunciation of the vowels and there will be no chance of defects like Saṃvṛta etc. creeping in.

It is curious that the Gargādi-gaṇa here precedes the Bidādi-gaṇa, though in the Aṣṭādhyāyī the former immediately follows the latter. Another curious fact is that ऐ and औ do not occur in either of these gaṇas. I am therefore inclined to read "gaurādi" (iv. 1.41) for "gargādi" here.

लिङ्गार्था तु प्रत्यापत्तिः * ॥ २० ॥

लिङ्गार्था सा तर्हि भवति ।

तत्तर्हि वक्तव्यम् ।

यद्यप्येतदुच्यते । अथवैतर्ह्यनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः । यदनुबन्धैः क्रियते तत् कलादिभिः करिष्यते । सिध्यत्यवम्, अपाणिनीयं तु भवति ।

यथान्यासमेवास्तु ।

*But the restoration is for the purpose of indicating something.*

That will then be for the purpose of indicating something (and the *gaurava*, serving, as it does, some other purpose, will be more apparent than real).

Then that must be stated.

Even if it be said, "Or it will now be unnecessary to enunciate many hundred Anubandhas, to frame (and define) the technical term *it* and to prescribe for the elision of what is *it*), the purpose of the Anubandhas will be served by Kala and other defects," (thus instead of the rule **अनुदात्तङित आत्मनेपदम्** i. 3. 22 we shall have **कलादात्मनेपदम्**, instead of **स्वरितञितः कर्त्रभिप्राये क्रियाफले** i. 3. 72 we shall have **ध्मातात् कर्त्रभिप्राये क्रियाफले** and so on), our purpose will no doubt be served in this way, but this will not be by the method of Pāṇini. So let let it be as it is.

**लिङ्गार्था कलादीनामात्मनेपदलिङ्गत्वसिद्ध्यर्थमित्यर्थः । अन्नंभट्टः । अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्त्यर्थेत्यर्थः । नाकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः, किन्तु सर्वानुबन्धेत्संज्ञाशास्त्राद्यकरणफलिकापीति न गौरवमिति भावः । तदेव विवृणोति—तत्तर्हीत्यादिना । धात्वादिगत-**

---

* **अकारोऽयमक्षरसमाम्नाये विवृत उपदिष्टस्तस्य संवृतताप्रत्यापत्तिः क्रियते । भाष्यम् ८।४।६८**

कलादिलिङ्गमित्यर्थः। अपाणिनीयम्। वर्णसमाम्नायसमर्थनाय प्रवृत्तस्य [ 'वृतादिग्रहणापत्तिलक्षणस्य ] एकदोषस्य परिहाराय सकलशास्त्रस्य व्याख्यान-सापेक्षगुरुप्रकारेणान्यथाकरणे वृश्चिकभिया पलायमानस्याशीविषमुखे निपात इति न्याय आपतति। नागेशः।

ननु चोक्तम् "आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेधः" इति।

परिहृतमेतत्—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति इति।

ननु चान्यद् गर्गादिबिदादिपाठ प्रयोजनमुक्तम्।

किम्?

समुदायानां साधुत्वं यथा स्यादिति।

But it has been objected : "If you say the purpose is served by the enunciation of the class, the exclusion of (the defects) Saṃvṛta etc. is necessary". This has been answered : The exclusion of Saṃvṛta and the like by the enunciation of the Garga-group and the Bida-group."

But another reason has been stated for the enunciation of the Garga and Bida groups.

What is that reason ?

So that the correctness of the whole may be secured.

एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते कलादयश्च निवर्त्त्यन्ते।

कथं पुनरेकेन यत्नेनोभयं लभ्यम्?

लभ्यमित्याह।

कथम्?

द्विगता अपि हेतवो भवन्ति। तद् यथा—आम्राश्च सिक्ताः

पितरश्च प्रीणिता इति। तथा वाक्यान्यपि द्विष्ठानि भवन्ति—श्वेतो धावति, अलम्बुसानां यातेति।

If so, then both purposes are served by it—the words are specifically mentioned and *kala* and other defects are excluded.

How can two things be obtained by one single effort ?

They can be obtained, says the author.

How ?

There are also causes that serve two purposes. Thus it is said mango-trees are watered and the Manes are gratified. (A person goes to the mango-grove and performs the tarpaṇa-ceremony there with water. The ceremony is performed and at the same time the trees are watered. Thus two birds are killed with the same stone, two flies are killed with one flap.)

Similarly, there are sentences also which convey two meanings ; e. g., *s'veto dhāvati* (*s'veto dhāvati* 'the white one runs' and *s'vā ito dhāvati* 'the dog is running away from here) and *alambusānāṃ yātā* (*Alambusānāṃ yātā* 'will go to the country of Alambusa' and *alam busānām yātā* 'able to go to the waters'. **बुसमित्युदकनाम**—Nir. v. 21. ).

एकस्यैव विषादिकादि [रोगजालं] दक्षो [भिषग् यथैकेनैव भेषजेन] निवर्तयत्येवं शब्देषु।...उपायद्वयञ्च लोके शब्दप्रयोगे [क्रमो वा] यौगपद्यं वा। कदाचित् क्रमवतः शब्दान् प्रयुङ्क्ते।...अक्षो भज्यताम्, अक्षो भुज्यताम्, अक्षो दीव्यतामिति। कदाचिदुपसंहृत्य क्रमं यौगपद्येनोच्चारयति—अक्षा भज्यन्तां भुज्यन्तां दीव्यन्तामिति। भर्तृहरिः।

पाठश्चैव विशेष्यते—तत्तत्प्रत्ययवैशिष्ट्येन बोध्यते। नागेशः। द्विगताः—द्वौ अर्थौ गताः प्रयोजनद्वयसम्पादकाः। कैयटः। द्विष्ठानि—द्वयोरर्थयोस्तिष्ठन्ति। नागेशः। आम्रा इति। आम्रमूले तर्पणे कृते प्रयोजनद्वयं

निष्पद्यते। नन्वर्थधर्मोऽयं न शब्दधर्म इति नेष्टसिद्धिः, अत आह [ कैयटः ] शब्दस्याप्यर्थवद् द्विगतत्वमिति । अन्नंभट्टः ।

को धावति ? कीदृशो धावति ? इति प्रश्नद्वयस्यैकमुत्तरम्—'श्वा इतः' इति पदच्छेदेनाद्यस्योत्तरम्, श्वेतो व्याधिविशेषयुक्तो निर्णजक इति द्वितीयस्य। कं जनपदं गन्ता ? को वा समर्थः ? इति प्रश्नद्वयस्य अलमित्युत्तरम्। आद्ये अलम्बुसानां जनपदविशेषाणां द्वितीये बुसानां पलालचूर्णानां गन्ता अलं समर्थ इत्यर्थः। अन्नंभट्टः। बुसानां पलालवर्णानां याता प्राप्तिमान् अलं समर्थः। नागेशः।

In the Padmapurāṇa (Sṛṣtikhaṇḍa 11.95) we find :

एको मुनिस्ताम्रकराग्रहस्तो ह्याम्रेषु मूले सलिलं ददाति ।
आम्राश्च सिक्ताः पितरश्च तृप्ता एका क्रिया द्व्यर्थकरी प्रसिद्धा ॥

A similar instance occurs in the S'abarabhāṣya on Jaimini Sūtra ii. 2.25 : अपि च दध्युभयमसमर्थं कर्तुं फलं साधयितुं होमञ्च। ननु कम्बलनिर्णेजनवदेतद् भविष्यति। निर्णजनं ह्युभयं करोति—कम्बलशुद्धिं पादयोश्च निर्मलताम्।

When a coarse blanket is cleaned by being beaten on on the feet, it incidentally serves to cleanse them also.

श्वेतो धावति etc. is quoted by S'abara under iv. 3. 4.

The आम्रसेचनपितृतर्पणन्याय occurs again in the Mahābhāṣya under viii. 2. 1 :

अथवा द्विगता अपि हेतवो भवन्ति। तद् यथा आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्ति। तथा वाक्यान्यपि द्विगतानि दृश्यन्ते। श्वेतो धावति। अलम्बुसानां यातेति॥ अथवा वृद्धकुमारीवाक्यवदिदं द्रष्टव्यम्। तद् यथा वृद्धकुमारीन्द्रेणोक्ता—वरं वृणीष्वेति। सा वरमवृणीत—पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीरन्निति। न च तावदस्याः पतिर्भवति, कुतः पुत्राः, कुतो गावः, कुतो धान्यम्। तत्रानयैकेन वाक्येन सर्वं संगृहीतं भवति।

Cf. यथेक्षुहेतोः सलिलं प्रसेचितं तृणानि वल्लीरपि तन्निषिञ्चति ।
तथा क्रिया धर्मनिमित्तमार्जिता सुखार्थलाभेऽपि न धर्महापिका ॥

Another instance is found in the Nyāyamañjarī : कालेन

**दन्तिनागाः** (**काले नदन्ति नागाः** and **कालेन कृष्णेन दन्तिना करिणा अगाः गतवान्**). Even the same words sometimes yield different senses. Thus ( "*Ibis redībis nunquam per bella perībis*" )

'Go ! you will return again

Never by the foeman slain.'

will mean one thing if we put a comma after *again*, and exactly the opposite thing if we put a comma after *never*.

अथवा इदं तावदयं प्रष्टव्यः—क्वेमे संवृतादयः श्रूयेरन्निति ?

आगमेषु ।

आगमाः शुद्धाः पठ्यन्ते ।

विकारेषु तर्हि ।

विकारा अपि शुद्धाः पठ्यन्ते ।

प्रत्ययेषु तर्हि ।

प्रत्यया अपि शुद्धाः पठ्यन्ते ।

धातुषु तर्हि ।

धातवोऽपि शुद्धाः पठ्यन्ते ।

प्रातिपदिकेषु तर्हि ।

प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते ।

यानि तर्ह्यग्रहणानि प्रातिपदिकानि ।

एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः । शशः षष इति मा भूत् । पलाशः पलाष इति मा भूत् । मञ्चको मञ्जक इति मा भूत् ।

---

* Cf. "**यद्यपि बहु नाधीषे तथापि पठ पुत्र व्याकरणम् ।**

**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृच्छकृत् ॥**"

आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ।

Or, he should be asked this: Where would these Saṃvṛta and other defects be heard?

In the insertions.

The insertions are read correctly.

In the substitutes, then.

The substitutes are also read correctly.

In the suffixes, then.

The suffixes are also read correctly.

In the roots, then.

The roots are also read correctly.

In the nominal stems, then.

The nominal stems are also read correctly.

Those nominal stems then which are not mentioned (in the Sūtras and Gaṇas)—for the knowledge of the vowels and consonants and their order in these nominal stems the letters should be enunciated, so that *s'as'ah* (hare) may not become *ṣaṣah*, *palās'ah* may not become *palāṣah*, *mañcakah* may not become *mañjakah*.

The insertions, the substitutes, the suffixes, along with the roots are enunciated (correctly), so these defects *kala* etc. cannot attach to them.

Here ends the first Āhnika of the first section of the first chapter of the Vyākaraṇa-mahābhāṣya composed by the venerable Patañjali.

- येऽप्येते गर्गादयः पठिता एतेऽपि न पाणिनिनोत्पादिताः । किं तर्हि ? एवंभूताः सन्तीति स्मर्यन्ते । यथैवैते एवंभूता एव स्मर्यन्ते, एवमन्येऽपि शब्दाः सामान्येन प्रतिपादिता उणादयो बहुलमित्यनेन प्रत्ययतः प्रकृतेश्च । तत्र शिष्टप्रयोगमभिसमीक्ष्य प्रकृतिरूहितव्यः प्रत्ययाश्च । भर्तृहरिः ।

यानि तद्ग्रहणानि प्रातिपदकानि । डित्थादीनि । एतेषामपि शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात् सर्वेषामत्र संग्रहः सिद्धः । कैयटः । अग्रहणानि कार्यविधावकृतानुवादानीत्यर्थः । एवं "संवृतादीनां प्रतिषेधः" इत्यस्मिन् प्रत्याख्याते इष्टबुद्ध्यर्थं इत्यपि प्रत्याख्यातप्रायमेव । नागेशः ।

Bhaṭṭoji explains the last section thus ;

नन्वेवं किं वर्णोपदेशेन ? न हि तद्बलेन कस्यचिच्छब्दस्य साधुत्वमवगम्यते । न च कलध्मातादिदोषरहितवर्णस्वरूपप्रतिपत्तिरेव तत्फलमिति वाच्यम्, लोकत एवाविप्लुतवर्णप्रतीतेरवश्यं वाच्यत्वात्, अन्यथा प्लुतादिपाठस्यापीह कर्तव्यतापत्तेः । तदुक्तम्—"इष्टबुद्ध्यर्थश्चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः" इति । तत्रैकश्रुत्या सूत्रपाठादुदात्तादिस्वरत्रयस्यापि पाठः कर्तव्य इत्युक्तम् । त्रैस्वर्येण पाठे हि अन्यतमस्योच्चारणादेव सिद्धौ द्वयोरेव कर्तव्यतां ब्रूयात् । अत एव च लोके त्रैस्वर्यमेकश्रुत्या विकल्प्यत इति ज्ञाप्यते ।

ननु निर्देशस्य जातिपरत्वात् प्लुतादिसंग्रहः सेत्स्यतीति चेत्, न, संवृतकलप्रभृतीनामपि संग्रहापत्तेः । तदुक्तम्—आकृत्युपदेशात् सिद्धमिति चेत् संवृतादीनां प्रतिषेध इति । तत्र ह्रस्वस्यावर्णस्य संवृतगुणकत्वेऽपि तदितरेषामचां संवृतत्वं दोषः । आदिशब्दात् कलः । स च स्वोचितस्थानभ्रष्टः । तथा श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घवल्लक्ष्यमाणो ध्मातः । एवं दीर्घोऽपि ह्रस्ववत् कालसङ्कोचेनोच्यमानोऽर्धकः । एवं करणादिभ्रंशादपि बहवो दोषाः शिक्षाप्रातिशाख्यादिषु प्रसिद्धाः । तत्तद्दोषविशिष्टानामप्यत्वादिजात्याक्रान्तत्वाज्जातिपरनिर्देशपक्षे तेष्वतिव्याप्तिरिति स्थितम् । न च गर्गादिबिदादिपाठस्य तन्त्रेणोभयार्थतया वर्णशुद्धिलाभः, अपठितेषु प्रातिपदिकेषु तथाप्यक्षतेः ।

स्यादेतत्, सर्वा अज्व्यक्तयो हल्व्यक्तयश्च शास्त्रान्ते शुद्धाः पठिष्यन्ते—अ अ इतिवत् । न चैवं गौरवम्, तद्बलेन सर्वेषामनुबन्धानां प्रत्याख्यानात्, इत्संज्ञालोपयोरपि त्यागात् । तथाहि शीङ्धातोर्ङकारं परित्यक्ष्यामः, ईकारं च कलं पठिष्यामः, "ङित आत्मनेपदम्" इत्यस्य स्थाने "कलादात्मनेपदम्" इति पठिष्यामः । कलश्च प्रक्रियादशायामेव, यथा ङकारः । प्रयोगे तु शुद्ध एव । प्रत्यापत्तेः शास्त्रान्ते करणमपि शास्त्रीयसकलकार्यं प्रत्यसिद्धतालाभाय । एवं च प्रक्रियायां दोषस्य कलादेराश्रयणेऽपि परिनिष्ठितरूपे न कश्चिद्दोषः । यथा यथान्यासपक्षेऽपि अकारस्य विवृतता प्रक्रियामात्रविषया, न तु प्रयोग-

समवायिनी, तद्वदिह पक्षे कलादयोऽपीति न कश्चिद्विशेषः। "धर्मिकल्पनातो हि धर्मकल्पना लघीयसी"ति न्यायश्चेह बोध्यः। ङकारादयो हि धर्मिण एव त्वया पाठ्याः। मया तूभयपठनीयस्य ईकारस्य कलत्वमात्रं कल्प्यमिति।

नन्वस्मिन् पक्षे "स्वरितञितः०" इत्यत्र कथं कार्यमिति चेत् "ध्मातात् कर्त्रभिप्राये" इति। इडाद्यागमाश्च निरनुबन्धाः कलाः पाठ्याः, आनुगादयो ध्माताः, डुकृञ् इत्यस्य स्थाने कृ इति द्विदोषं पाठ्यम्, "आदिरन्त्येन०" इत्यत्रापि "आदिकलौ सह" इत्युक्त्वा अ उ इत्यादिकाः संज्ञाः करिष्यन्ते। कलेनेति तृतीयानिर्देशे सति त्वप्राधान्यात् सिद्धान्त इव चरमवर्णस्य संज्ञा न स्यात्। "ढ्लोपे०" इत्यादौ "अणः" इत्यपनीय "अओः" इति करिष्यते। स्वरसन्धिस्त्वसन्देहाय न करिष्यते। तस्मात् सर्वमनुबन्धकार्यादिकं कलादिभिरेव सिध्यतीति चेत्, सत्यम्।

सिध्यत्येवमपाणिनीयं तु भवति—इति चेत्, अत्रोच्यते—इष्टसिद्ध्यर्थो वर्णोपदेशः। एवं चाकृत्युपदेशादेव उदात्तादिसिद्धिमङ्गीकृत्य कलादिध्वतिप्रसङ्ग इत्थं परिहार्यः—

आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः।
उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः॥

इति। यत्तु अग्रहणेषु प्रातिपदिकेषु प्राप्ता एवेति, तन्न, त्वयापि प्रतिपदपाठस्यावश्याश्रयणीयत्वात्, अन्यथा शश इत्यत्र षष इत्यपि स्यात्, मञ्चके मञ्जक इति, पलाशे पलाष इति।

स्यादेतत्, स्वरवर्णानुपूर्वीनिर्णयाय यदि प्रतिपदपाठस्तर्हि कलादिनिवृ रपि तत एवास्तु, उणादिसूत्रात् पृषोदरादिसूत्राद्वा साधुत्वाभ्यनुज्ञानम्, विशेषावधारणं तु निघण्ट्वादिनेति चेत्, कलादिनिवृत्तिरपि शिक्षादिग्रन्थेनास्तु। सत्यम्। आनुषङ्गिकी कलादिनिवृत्तिः, वर्णोपदेशस्य मुख्यं फलं तु प्रत्याहारनिष्पत्तिः। प्रत्याहारशब्दस्तु अणादिसंज्ञापरः, प्रत्याह्रियन्ते वर्णा एष्विति व्युत्पत्तेः। न च ग्रहणकशास्त्रेण निष्पादितास्वकारादिसंज्ञास्वतिप्रसक्तिः, योगरूढ्यभ्युपगमात्। तस्मात् "आदिरन्त्येन०" इत्येतत्सूत्रप्रसिद्धाः संज्ञाः प्रत्याहारशब्दवाच्याः, तन्निष्पत्तये च वर्णोपदेश इति स्थितम्।

Annaṃbhaṭṭa says in his Uddyotana :

अत्र विषयप्रयोजनाभावाच्छास्त्रानारम्भशङ्का तत्कथनेन, प्रतिपदपाठेनान्यथासिद्ध्या तदनारम्भशङ्का तदशक्तिकथनेन, जातिव्यक्त्योरन्यतरस्य

## Additional Notes.

St. 1. भद्रम् भदि कल्याणे सुखे च । इदित्वान्नुम् । भन्देर्नलोपश्च [ उ० ३।१३० ] इति रक्-प्रत्ययो नलोपश्च । S. on AV. i. 18. 1.

St. 2. p. 9, l. 4 cf. तां मा भगवाञ्छोकस्य पारं तारयतु । छान्दोग्योपनिषत् । ७।१

St. 3. पूर्वया निविदा—The Vedic seers sometimes speak of old hymns and sometims of new hymns. Thus in RV. 1. 143. 1 we find प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे। "A stronger, *newer* song I bring to Agni, lifting up heart and voice to that son of strength." P. Cf. Macdonell, *History of Sanskrit Literature :* "The poets of the older parts of the *Rigveda* themselves mention predecessors, in whose wise they sing, whose songs they desire to renew, and speak of ancestral hymns produced in days of yore."

St. 3, p. 14, l. 1 अर्यमेति तमाहुर्यो ददाति । तै० ब्रा० १।१।२।४

St. 4, p. 27. *Tyam ū etc.*—

"This very mighty one whom Gods commision, the Conqueror of cars, ever triumphant,

Swift, fleet to battle, with uninjured fellies, even Tārkṣya for our weal will we call hither." Griffith.

*Svasti no mimītām etc.*—

"May Bhaga and the As'vins grant us wealth and health, and Goddess Aditi and he whom none resist.

The Asura Pūṣan grant us all prosperity, and Heaven and Earth, most wise, vouchsafe us happiness.

Let us solicit Vāyu for prosperity, and Soma who is Lord of all the world for weal ;

For weal Bṛhaspati with all his company. May the Ādityas bring us health and happiness.

May all the Gods, may Agni the beneficent God of all men, this day be with us for our weal.

Help us, the Rihhus, the Divine Ones, for our good. May Rudra bless us and keep us from calamity.

Prosper us, Mitra, Varuna. O wealthy Pathyā prosper us.

Indra and Agni, prosper us ; prosper us, thou, O Aditi.

Like Sun and Moon may we pursue in full prosperity our path,

And meet with one who gives again, who knows us well and slays us not."

St. 4. द्यौष्पितः पृथिवि मातरध्रुगग्ने भ्रातर्वसवो मृलता नः ।
विश्व आदित्या अदिते सजोषा अस्मभ्यं शर्म बहुलं वि यन्त ॥
[ ऋ० सं० ६।५१।५ ]

"O Heaven, our Father, Earth our guileless mother, O Brother Agni, and Ye Vasus, bless us.

Grant us, O Aditi and Ye Adityas, all of one mind, your manifold protection." Griffith.

St. 6. Guṇaviṣṇu's commentary on this stanza :

नः अस्मभ्यम् इन्द्रः स्वस्ति शान्तिं दधातु । किम्भूतः ? वृद्धश्रवाः वृद्धवाक्यकारी* । तथा पूषा विश्ववेदाः सर्वज्ञः, तथा तार्क्ष्यः अरिष्टनेमिः अव्याहतगतिप्रसरः, तथा बृहस्पतिः, स्वस्ति नः दधातु ।

St. 8 भद्रं पश्येमाक्षभिर्यजत्राः—Cf. RV. X. 37. 7-8 :

विश्वाहा त्वा सुमनसः सुचक्षसः प्रजावन्तो अनमीवा अनागसः ।
उद्यन्तं त्वा मित्रमहो दिवेदिवे ज्योग्जीवाः प्रति पश्येम सूर्य ॥
महि ज्योतिर्बिभ्रतं त्वा विचक्षण भास्वन्तं चक्षुषेचक्षुषे मयः ।
आरोहन्तं बृहतः पाजसस्परि वयं जीवाः प्रति पश्येम सूर्य ॥

"Cheerful in spirit, evermore, and keen of sight, with store of children, free from sickness and from sin,

---

* Guṇaviṣṇu was evidently thinking of वृद्धस्य वचनं ग्राह्यम् · Later on while explaining सुश्रवः he says : शोभनं श्रवः यशः यस्य सः सुश्रवाः । शृणोतेः कर्मणि "सर्वधातुभ्योऽसुन्" [ उ० ४।८८ ] । छान्दसः सकारलोपः । हे सुश्रवः शोभनकीर्ते ।

Long-living, may we look, O Sūrya, upon thee uprising day by day, thou great as Mitra is!

Sūrya, may we live long and look upon thee still, thee, O far-seeing One, bringing the glorious light,

The radiant God, the spring of joy to every eye, as thou art mounting up o'er the high shining flood."

St. 8. Such prayers are frequent in the Vedas; e. g., **मा शूने भूम सूर्यस्य सन्दृशि भद्रं जीवन्तो जरणामशीमहि** RV. X. 37. 6 "Ne'er may we suffer want in presence of the Sun, and, living happy lives, may we attain old age."

St. 8. **स्थिरैः अङ्गैः**—Here **अङ्गैः** is to be taken as standing for 'unimpaired mental powers' also. **अङ्गैरित्युपलक्षणम्। तेन प्रज्ञादीनामपि संग्रहः।**) Cf. RV. vii. 61. 2.: **यस्य ब्रह्माणि सुक्रतू अवाथ आ यत् क्रत्वा न शरदः पृणैथे** "that ye may favour his prayers, ye wise ones, that ye may fill his autumns, as it were, with wisdom". (MACDONELL)

St. 9. This stanza is explained thus in the Vārarucaniruktasamuccaya:

गोतमो विश्वान् देवान् आयुः प्रार्थयते। शतम्। इत् नु इत्येतौ शब्दौ निपातितौ* पदपूरणौ। शरदः शरच्छब्दः संवत्सरपर्यायः। संवत्सरान्। शतसंवत्सरमायुरित्यर्थः। कुतः? उत्तरत्रायुर्ग्रहणात्। अन्ति अत सातत्यगमने इत्यस्यैतद्रूपम्। सातत्येन नित्यत्वं लक्ष्यते। नित्यम्। जरामरणनिर्मुक्तान् कुरुध्वमिति वाक्यशेषः। कीदृशं तदायुः? उच्यते। यत्रा नः। "ऋचि तुनुघमक्षु०" [६।३।१३६] इति दीर्घत्वम्। यत्र यस्मिन्नायुषि। नः अस्माकं चक्रा। लिण्मध्यमपुरुषस्य बहुवचनमेतद्रूपं भविष्यदर्थे द्रष्टव्यम्। करिष्यथ यूयमित्यर्थः। जरसं जराम्। तनूनाम्। तनुशब्दः शरीरवचनः। एतदुक्तं भवति—जीवन् भद्राणि

* Should we read **निपातौ**?

पश्यति* इति लोकसंवादात् सर्वसम्पत्साधनभूतमायुः शतसंवत्सरलक्षणमाशास्यते। उत्तरोऽर्धोऽस्यैव प्रपञ्चः। अस्मासु जीवत्स्वस्मत्पुत्रा अपि पुत्रवन्तो भविष्यन्तीत्यर्थः। प्रार्थनीयं हि तत्। यत आह [ मनु० ९।१३७ ]—

पुत्रण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अत्र पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

इति। तादृशमायुः। पुत्रासश्छान्दसस्त्वसुगागमः†। पुत्राश्च यत्र यस्मिन्नायुषि पितरो भवन्ति। भविष्यदर्थे लट्। भविष्यन्ति। मेति प्रतिषेधार्थो निपातो रीरिषतेत्याख्यातेन सम्बध्यते। नः अस्माकम्। मध्यशब्दात् सप्तम्येकवचनस्य "सुपां सुलुक्०" [७।१।३९] इत्याकारः। मध्ये। अपर्याप्त एव पुरुषार्थ इत्यर्थः। रिरिषत‡ रिषतिर्हिंसाकर्मा। मा रिरिषत‡ मा वधिष्ट। तत् आयुः उक्तलक्षणम् गन्तोः दृष्टादृष्टोपकारार्थभूतार्थान् प्राप्तुमित्यर्थः॥

---

* The full stanza runs thus :

न मृतो जयते शत्रूञ्जीवन् भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवाय कुतो जयः ॥

Cf. कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ [ रामायण ६।२२८।२ ]
विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम् ।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः ॥
[ रा० ५।१३।४५]

Cf. Hope springs eternal in the human breast ;
Man never is, but always to be blest. POPE

† The correct reading would appear to be छान्दसोऽसुगागमः or छान्दसोऽत्रासुगागमः.

‡ Should we read रीरिषत ?

St. 9. The Rigveda uses शरद् 'autumn', समा 'summer' and हिमा 'winter' in the sense of 'year', just as in English they speak of 'a girl of seven summers' and 'an old maid of seventy winters'. वर्ष (the rainy season) in the sense of 'year' makes its first appearance in the Atharva Veda.

धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥ १।६४।१४

"May we foster well, during a hundred winters, son and progeny, enjoying wealth, praiseworthy and active in all matters."

शतं नो रास्व शरदो विचक्षेऽश्यामायूंषि सुधितानि पूर्वा ॥ २।२७।१०

"Grant unto us to see a hundred autumns. Ours be the blest long lives of our forefathers."

त्वादत्तेभी रुद्र शन्तमेभिः शतं हिमा अशीय भेषजेभिः । २।३३।२

"By the most salutary medicines, given by thee, O Rudra, I would attain a hundred winters."

अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः ।
अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन् ॥ ३।३६।१०

"O Indra, Maghavan, impetuous mover, grant us abundant wealth that brings all blessings.

Give us a hundred autumns for our life-time. Give us, O fair-cheeked Indra, store of heroes."

इदं सु मे मरुतो हर्यता वचो यस्य तरेम तरसा शतं हिमाः ॥५।५४।१५

"Accept, O Maruts, graciously this hymn of mine that we may live a hundred winters through its power."

शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन १०।१८।४

"May they survive a hundred lengthened autumns and bury Death beneath this mountain."

दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम् १०।८५।३९

'Long-lived be he who is her lord; a hundred autumns let him live."

सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम् ।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान् ।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥१०।१६१।३-४

"With hundred-eyed oblation, hundred autumned, bringing a hundred lives have I restored him.

That Indra for a hundred years may lead him safe to the farther shore of all misfortune.

Live, waxing in thy strength, a hundred autumns, live through a hundred springs, a hundred winters.

Through hundred-lived oblation, Indra, Agni, Brhaspati, Savitar, yield him for a hundred."

Stanza 10 is thus explained in the Niruktasamuccaya :

अनेन गोतमोऽदितेर्देवमातुर्भूमानमाह—आदितिर्द्यौः । कार्यकारणयोरभेदोपचारेण कार्यस्य कारणव्यपदेशः । अदितिप्रभवत्वाद् द्यौरदितिरित्युच्यते । तथा अदितिरेवान्तरिक्षम् । अदितिर्माता निर्माता, निर्मात्री वृष्टिप्रदानेन सर्वस्य जगतः । स पिता सैव पिता पालयित्री तेनैव कर्मणा सर्वस्य भूतजातस्य । स पुत्रः सैव सर्वथा पुरु बहु त्रायत इति पुत्र इत्युच्यते । किञ्च विश्वे देवा अदितिः । देवमातृत्वात् सर्वे देवा अदितिरित्युच्यन्ते । पञ्च जनाः चत्वारो वर्णाः निषादः पञ्चम इति पञ्च जनाः गन्धर्वादयो वा । ते चादितिप्रभवत्वादेवमुच्यन्ते । किं बहुना अदितिः जातम् । अदितिकारणमेव यत् किञ्चिज्जगति जातम् । अदितिः जनित्वम् । अदितिकारणमेव जनिष्यमाणमुत्पत्स्यमानमपि । सा नः पातु सदादितिरिति वाक्यशेषः । नित्यपक्षेऽक्षीणा प्रकृतिरुच्यते । तद्विकारः सर्वमिति योज्यम् ।

## Abbreviations etc.

AB—ऐ० ब्रा० —Aitareya Brāhmaṇa. AV—अ० सं० —Atharva Veda. AGS—Ās'valāyana Gṛhya Sūtra. AS'S—आ० श्रौ० सू० Ā'svalāyana S'rauta Sūtra. उ०—उणादि सूत्र. ऋ० सं०—RV—Rigveda. GB—Gopatha Brāhmaṇa. Gk:—Greek. तै० ब्रा० —TB—Taittirīya Brāhmaṇa. तै० सं०—TS—Taittirīya Saṁhitā. नि०—Nirukta. निघ०—Nighaṇṭu. शा० श्रौ० सू०—S'S'S—S'āṅkhāyana S'rauta Sūtra. S'GS—Sāṅkhāyana Gṛhya Sūtra. LS'S—Lāṭyāyana S'rauta Sūtra. KS—Kāṭhaka Saṁhitā. MS.—Maitrāyaṇī Saṁhitā. VS—Vājasaneyi-Saṁhitā. रघु०—रघुवंश. श० ब्रा०—S'B—S'atapatha Brāhmaṇa. S.—Sāyaṇa. ह०—हरदत्तः।

# आनोभद्रीयं सूक्तम्

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवो नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥१॥
देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे ॥२॥
तान् पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् ।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥३॥
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौः ।
तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥४॥
तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम् ।
पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥५॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥६॥
पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥७॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥८॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥९॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥१०॥

# पादसूची

षष्ठ-वर्षं ] [अन्तिमं संख्यात्रयम्

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

Purusottamadeva's Bhāṣāvṛtti on Paṇini's grammar is a fairly well-known work, but far more important and interesting than the Bhāṣāvṛtti is the commentary of Sṛṣṭidhara who quotes profusely from Sanskrit Literature, gives rational explanations of many rules and technical terms. We propose to publish 16 pages of this work in every number of the Mānjūṣa besides short stories long stories, humorous skits, discussion on the Vedas, discussions on grammar, proverbs and proverbial sayings form English, Latin, Greek, etc., philological explanations of Pāṇini's rules etc. etc.

Subscribers are earnestly requested to send in their subscription for Vol. VII of the Mañjuṣā immediately on the receipt of this number. The September no. will be despatched on the 24th of September to those subscribers who had paid their subscription by that time. We are confident our esteemed subscribers will do everything in their power to help along the Mañjūṣa by sending in their subscription in time and by recommending the Mañjūṣā to their friends. We assure our subscribers that from the new year Mañjūṣā will appear regularly as before.

*Office* : 81, Shyambazar Street, Calcutta—4

Annual Subscription : Rupees Six only.

Foreign—Rupees Nine.

Vol. IV of tne Mañjūṣā ( 396 pages ) contains articles on सेविका vs. सेवका, विश्रम vs. विश्राम, पुत्र vs. पुत्त्र, भवतीप्रसादात् vs. भवत्प्रसादात् etc., discussions of various readings, a ticles on the Mahābhāṣya and Contamination in language, S'aṅkarācarya's Saccidānandānubhava-pradīpikā, short stories, long stories, humorous skits etc. etc. Rs. 6-8 only.

Vol. V of the Mañjūṣā contains 300+32+32 pages including "The S'iva sūtras and the Sanskrit alphabet" "Mahābhāṣya" "Critical studies on the text of Sāyaṇa's commentary on the Rigveda" etc. etc. Rs. 6/8/-

Vol. VI contains the Paspas'ā—Āhnika of the Mahābhāṣya ( pp. 33-120 ), the sublime आनोभद्रीय hymn of Rigveda with six commentries, discussions on Grammar, articles on Kālidāsa, Bhavabhūti, Bhāravi, and other writers, long stories, short stories, humorous skits etc. etc. Rs. 6/8/-

## मञ्जूषाया नियमावली

१। मञ्जूषाया वार्षिकं मूल्यं रूपकषट्कम्। ग्राहकवर्षस्य प्रथमसंख्यात एव ग्रहीतव्यम्।

२। प्रतिसौरमासं दशमदिने (आङ्लमासस्य चतुर्विंशे दिवसे) 81, Shyambazar Street, Calcutta 4 इत्यतो मञ्जूषा प्रकाश्यते।

३। मञ्जूषायास्तावद् भागत्रितयं वर्तते। तत्र प्रथमे भागे देवभाषां प्रविविक्षूणां कृते सरलाः श्लोकाः, आभाणकाः, कथाः, आख्यानानि च सन्निवेश्यन्ते, द्वितीये भागे दार्शनिकाः प्रबन्धाः, व्याकरणालङ्कारादीनां विमर्शाः, पाठविचाराः, जिज्ञासा मीमांसा च, पुस्तकपरिचयादयश्च प्रकाश्यन्ते ; तृतीये भागे सानुवादाः पारसीकानां गाथाः, ससंस्कृतानुवादं धम्मपदम् महाभाष्यम्, समूला भाषावृत्त्यर्थविवृतिर्मुद्र्यन्ते।

श्रीविश्वनाथ-चट्टोपाध्यायः।

८१ श्यामबाजार ष्ट्रीट्, कलिकाता ४।

81, Shyambazar Street, Calcutta 4.

Phone : B. B 4049.

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम्॥

# मञ्जूषा

June—August 1952. | आषाढ-श्रावण-भाद्राणाम् षष्ठवर्षस्य दशम्यादिसंख्यात्रयम् | Vol. VI Nos. 10-12.

## आभाणकादि

१। मौनं सर्वार्थसाधनम्।

(Gk) Poll' ekhei sige: kala.

मौनमावहति श्रेयांसि बहूनि।

Speech is silvern, silence golden.

(Germ.) Sprechen ist silbern, Schweigen ist golden.

राजतं भाषणं प्रोक्तं सौवर्णं मौनमुच्यते।

२। आत्मप्रशंसां परगर्हामिव वर्जयेत्।

Self-praise is no recommendation.

(Lat.) Laus in proprio ore sordescit.

Praise in one's own mouth is offensive.

उद्वेजयति भूतानि स्वमुखेन प्रशंसनम्।

3. One potter envies another.

(Gk.) Kai kerameus keramei: koteei.

(Lat.) Figulus figulo invidet, faber fabro.

The potter envies the potter, the smith the smith.

ईर्ष्यति कुम्भकाराय कुम्भकारः, कर्माराय च कर्मारः ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ।

4. Old men are twice children.

(Gk.) Ego: de g' anteipoim' an, ho:s dis pai:des hoi gerontes

अहन्तु प्रतिब्रूयाम्—जरन्तस्तावद् द्विर्बाला इति ।

(Lat.) Bis pueri senes.

(Lat.) Senex bis puer.

They say an old man is twice a child. *Hamlet.*

Now by my life, Old fools are babes again. *King Lear.*

Two boys, an old man twice a boy. *Cymbeline.*

५। अन्धानां काणो राजा ।

In the kingdom of blind men, the one-eyed is king.

(Germ.) Unter den Blinden ist der einaügige König.

यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥

श्रीः

## On the Interpretation of a Stanza of the Madhusukta.

[ KSHITISH CHANDRA CHATTERJI ]

मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ॥
मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः ।
मधु द्यौरस्तु नः पिता ॥
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ॥

'The winds waft honey for the man who observes the law, the rivers distil honey (for him). May the herbs be honeyed for us.'

'May we have honey at dawn and dusk (i.e., may night and morn be honeyed), honeyed be the terrestrial region, honeyed be our Father Heaven to us.'

'May the lord of the forest be full of honey for us, may the sun be full of honey, may our milch cow be full of honey for us.'

There is hardly an Indian who has not heard the above stanzas, there is hardly a Brahman who has not uttered this prayer at one time or another, there is hardly a religious man who has not been all the better for meditating on these sublime stanzas. But there is a good deal of difference of opinion regarding the exact meaning of the first stanza and an attempt is made in this paper to ascertain the meaning intended by the author of the hymn.

मधु वाता ऋतायते     मधु । वाताः । ऋतऽयते ।

मधु क्षरन्ति सिन्धवः ।     मधु । क्षरन्ति । सिन्धवः ।

माध्वीर्नः सन्त्वोषधीः ॥ ६ ॥     माध्वीः । नः । सन्तु । ओषधीः ॥६॥

*mā'dhu vā'tā ṛtāyate,*
*ma'dhu kṣaranti si'ndhavaḥ ;*
*mā'dhvīr naḥ santvo'ṣadhīḥ.*

The winds waft honey for the man who observes the law, the rivers distil honey (for him) ; may the herbs be honeyed for us !

वेङ्कटव्याख्यानम् ।

वाता मधु क्षरन्त्यस्मै सत्यमिच्छति यो नरः ।
तद्धि सूर्यसमं ज्योतिस्तदिच्छन्निह सिध्यति ॥
यत् सम्भरन्ति सरघाः पुष्पेभ्यस्तन्मधु स्मृतम् ।
अस्मै सत्यविदे सर्वे तत्क्षरन्तीति कीर्त्यते ॥

[ माध्वीः ] मधुमत्यः [ ओषधीः ] ओषधयश्च [ नः ] अस्माकं [ सन्तु ] भवन्तु ॥ ६ ॥

स्कन्दस्वामिभाष्यम् । मधुशब्दो रसविशेषवचनोऽन्तर्णीतमत्वर्थश्च, सामर्थ्याच्चेहोदके वर्तते। उदकनाम वा मधुशब्दः। साकाङ्क्षत्वाच्च क्षरन्तीत्याख्यातं पूर्वत्राप्यनुषक्तव्यम्, मधुमत् मधुरसं वृष्टिलक्षणमुदकं क्षरन्ति। लोडर्थे लट्। क्षरन्तु वर्षन्त्वित्यर्थः। के? वाताः। कस्मै? ऋतायते यज्ञं कामयमानस्य ममार्थाय। मधु क्षरन्ति सिन्धवः नद्यः। माध्वीः मध्वेव माध्वम्। स्वार्थिकस्तद्धितश्छान्दसत्वात्। तद्वत्यो माध्व्यः। ईकारप्रत्ययो मत्वर्थे ईवनिपौ छन्दसि* इति। मधुरसा इत्यर्थः। नः अस्माकं सन्तु ओषधीः ॥ ६ ॥

हरदत्तव्याख्या। मधुशब्दो रसविशेषवचनः सन्निह विनियोगसामर्थ्यान्मधुपर्कद्रव्ये वर्तते। वाता वायवः ऋतायते। ऋतशब्दः कर्मवचनः श्रौतस्मार्तलक्षणं कर्म कामयमानाय मह्यमित्यर्थः। क्षरन्तीत्युत्तरत्र श्रूयमाणमाख्यातमनुषक्तव्यम्। लट् च लोडर्थे। क्षरन्तु। सिन्धवः नद्यश्च मधु क्षरन्तु। माध्वीः मध्वेव माध्वम्, तद्वत्यो माध्व्यः। ईवनिपौ छन्दसि† इतीकारप्रत्ययः। मधुमत्य इत्यर्थः। प्रथमार्थे द्वितीयैषा। ओषधयः सन्तु भवन्तु नः अस्माकमोषधयोऽपि मधुप्रदा भवन्त्वित्यर्थः।

उवटभाष्यम्। मधु वाताः। गायत्रस्तृचो वैश्वदेव्यः। मधुमन्तो वा रसवन्तो वा वाताः। वान्त्विति शेषः। कस्मै? ऋतायते यज्ञमिच्छते। मधु क्षरन्ति सिन्धवः। मधु उदकं क्षरन्तु सिन्धवः

---

* Under **केशाद्वोऽन्यतरस्याम्** v. 2.109 occurs the Vārttika **छदसीवनिपौ च.** The Kāśikā has **छन्दसीवनिपौ च वक्तव्यौ** from the Mahābhāṣya.

† This would appear to be the correct reading. The printed com. has **ईद्वनिपोश्छन्दसि.**

स्यन्दमाना नद्यः। माध्वीः नः मधुमत्योऽस्माकं सन्तु भवन्तु [ओषधीः] ओषधयः।

महीधरभाष्यम्। ऋतं यज्ञमिच्छतीति ऋतयन् तस्म ऋतयते यजमानाय वाताः वायवो मधु मधुमन्तो रसवन्तो वान्त्विति शेषः। ऋतयतीत्यत्र "क्यचि च" [७।४।३३] इति प्राप्तस्येत्वस्य "नच्छन्दस्य-पुत्रस्य" [७।४।३५] इत्यभावः। "अश्वाघस्यात्" [७।४।३७] इत्य-श्वाघयोरेव क्यच्यात्वविधानात् "अकृत्सार्वधातुकयोः०" [७।४।२५] इत्यात्वमपि न। संहितायां तुच्छान्दसो दीर्घः। मधु। मधुमानित्यग्रे मतुप्-प्रत्ययदर्शनात् सर्वत्र मधुशब्दस्याग्रे मतुब् ज्ञेयः। सिन्धवः स्यन्द-मानाः—नद्यः समुद्रा वा मधु मधुमत् रसवत् उदकं क्षरन्ति। स्रवन्त्वि-त्यर्थः। "तिङां तिङः" [७।१।३९] इति लोटो लडादेशः। ओषधीः ओषधयः नः अस्माकम् माध्वीः मधुररसोपेताः सन्तु॥

सायणभाष्यम्। ऋत्विगाद्यर्थमाहृतं मधुपर्कं "मधु वाताः" इति तृचेन ऋत्विगादिः प्रतिग्रहीतावेक्षेत। तथा च श्रूयते—"मधु वाता ऋतायत इति तृचेनावेक्ष्य" [आ० गृ० सू० १।२४।१४] इति। ऋता-यते ऋतं यज्ञमात्मन इच्छते यजमानाय वाताः वायवः मधु माधुर्यो-पेतं कर्मफलं क्षरन्ति वर्षन्ति प्रयच्छन्तीत्यर्थः। तथा सिन्धवः स्यन्दन-शीला नद्यः समुद्रा वा मधु माधुर्योपेतं स्वकीयं रसं क्षरन्ति। एवं नः अस्मभ्यम् ओषधीः। फलपाकान्ता ओषधयः। ताश्च माध्वीः माधुर्योपेताः सन्तु भवन्तु। मधु। अस्मादुत्तरस्य मत्वर्थीयस्य "लुगकारेकाररेफाश्च वक्तव्याः" [काशिका ४।४।१२८]* इति लुक्। ऋतायते ऋतमात्मन इच्छति। "सुप आत्मनः क्यच्" [३।१।८]। "नच्छन्दस्यपुत्रस्य" [७।४।३५] इतीत्वदीर्घयोर्निषेधः। "अन्येषामपि

---

* Vārttika iv.4.128.2 runs thus : **लुगकारेकाररेफाश्च** and the Bhāṣya explains : **लुगकारेकाररेफाश्च प्रत्यया वक्तव्याः.**

दृश्यते" [६।३।१३७] इति सांहितिकं दीर्घत्वम्।* क्यजन्ताल्लटः शतृ। "शतुरनुमः०" [६।१।१७३] इति विभक्तेरुदात्तत्वम्। माध्वीः। मधोरञ् च" [४।५।१२९] इति मत्वर्थीयोऽञ् प्रत्ययः। "ऋत्व्यवास्त्व्य०" [७।४।१७५] इत्यादावञि यणादेशो निपात्यते। "वा छन्दसि" [६।१।१०६] इति पूर्वसवर्णदीर्घत्वम्। ओषधीः। ओषः पाकः आसु धीयत इत्योषधयः। "कर्मण्यधिकरणे च" [३।३।९३] इति कि-प्रत्ययः। "कृदिकारादक्तिनः" [४।१।४५ गणसूत्रम्] इति ङीष्†। जसि पूर्ववत्पूर्वसवर्णदीर्घः। दासीभारादिषु [६।२।४२] पठितत्वात्पूर्वपदप्रकृतिस्वरत्वम्। तच्च‡ घञन्तमाद्युदात्तम्।

तैत्तिरीयसंहिताभाष्यं सायणीयम् [४।३।९।३]। मधु वाता ऋतायत इति तिसृभिर्दध्ना मधुमिश्रेण कूर्ममभ्यज्य इति। ऋतं

---

* Printed books read: **अन्येषामपि संहितायां दीर्घत्वम्** which is mainfestly incorrect.

† There is not the slightest doubt that this gaṇasūtra, though found in all printed books and MSS. is an interpolation, for with **ङीष्** the word **ओषधी** will be accented on the final syllable, but it is found accented here, as elsewhere, on the first syllable. So Subodhinī says under **ओषधेश्च विभक्तावप्रथमायाम्** vi. 3.132: **न च कृदिकारादक्तिन इति ङीषा गतार्थता, अन्तोदात्ततापत्तेः, इष्यते त्वाद्युदात्तः "लघावन्ते०" इति फिट्सूत्रात्** [२।११]। It is **ओषधि** that is read in the gaṇa and not **ओषधी**. The word **ओषधि** should normally have been accented on the last syllable according to **गतिकारकोपपदात् कृत्** vi. 2. 139, but because of its inclusion in the **दासीभार** list it is accented on the first syllable. We really fail to understand why inspite of the words **जसि पूर्ववत् पूर्वसवर्णदीर्घः** editor after editor has thought it fit and proper to retain **कृदिकारादक्तिन इति ङीष्** in the body of the commentary.

‡ **तद्** here refers to **पूर्वपद** which is part of a compound.

यज्ञमात्मन इच्छतीति ऋतायन्, तस्मै यजमानाय वाताः वायवो मधु क्षरन्ति मधुरं रसं स्रावयन्ति। सिन्धवः समुद्राश्च मधुरं रसं स्रावयन्ति। ओषधीः ओषधयोऽपि नः अस्मदर्थं माध्वीः मधुररसोपेताः सन्तु।

सायणभाष्यम् ( तैत्तिरीयारण्यकगतम् )। ऋतायते ॠतं परं ब्रह्म तदिच्छते मह्यं वाताः वायवो मधु माधुर्योपलक्षितं सुखं यथा भवति तथा वान्त्विति शेषः। प्रबले तु वायौ रोगोत्पत्त्या तत्त्वज्ञानविघ्नः सम्पद्यते। अतः स मा भूदिति वायोरानुकूल्यं प्रार्थ्यते। एवमुत्तरत्रापि तदानुकूल्यं द्रष्टव्यम्। सिन्धवः नद्यः मधु क्षरन्ति। मधुरमारोग्यकरमुदकं सम्पादयन्त्वित्यर्थः। ओषधीः व्रीहियवादयोऽपि नः अस्माकं माध्वीः मधुराः पथ्यरूपाः सन्तु।

[ Since the stanza occurs here in the Āraṇyaka, Sāyaṇa with nice discrimination takes *ṛta* in the sense of Brahman.]

आनन्दगिरिव्याख्यानम्। वाताः वायुभेदाः मधु सुखम् ऋतायते वहन्ति। सिन्धवः नद्यः मधु क्षरन्ति मधुरसान् स्रवन्ति। ओषधीश्च* अस्मान् प्रति माध्वीः मधुररसाः सन्तु।

गुणविष्णुकृतं भाष्यम्। वाताः वायवः मधु ऋतायते वहन्तीत्यर्थः। सिन्धवः नद्यः मधु क्षरन्ति। ओषधीः धान्यादयः माध्वीः मधुयुक्ताः सन्तु। नः इति स्थानत्रयेऽपि योज्यम्।···ऋतायते इति वचनव्यत्ययः।

It will be noticed that both Ānandagiri in his commentary on the Bṛhadāraṇyakabhāṣya of S'aṅkarācārya and Guṇaviṣṇu in his Chāndogyamantrabhāṣya regard *ṛtāyate* as a finite verb in the sense of *vahanti*, but this is open to grave objections. In the first place, '*ṛtāyate*' is accented and that on the final syllable. A finite verb in the principal clause is, as a rule, unaccented, but even supposing that '*ṛtāyate*' is

* Read **ओषधीः ओषधयश्च।**

accented here acc. to *cādilope vibhāṣā* viii. i. 63, the accent is wrong. Whether '*ṛtāyate*' be formed with *-kyac* or with *-kyaṅ*, the ending ते will be unaccented acc. to तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः vi. i. 186. In the *second place* the nom. pl. वाताः can hardly be expected to agree with the singular verb ऋतायते. Of course, if वाता had been a neuter plural we could have construed it with a singular verb as in the well-known example धृष्णवे धीयते धना RV. i. 81. 3 or as in Greek, but वाता can by no stretch of the imagination be regarded as a neuter plural. In the third place '*ṛtāyate*' does not usually mean *vahati*. The word occurs again in the immediately following hymn :

त्वं सोम महे भगं त्वं यून ऋतायते ।
दक्षं दधासि जीवसे ॥

where the sense *vahati* would not be suitable. But the most fatal objection is that if *ṛtāyate* be taken to mean *vahanti* by having recourse to several *vyatyayas* and the dictum अनेकार्था हि धातवः taking धातवः in a very wide sense including नामधातु's, then the atmosphere would be honeyed for both the righteous and the unrighteous, but the seer asserts that the atmosphere is honeyed for the righteous alone. This is why he uses the indicative with *kṣaranti* and the imperative with *santu* though he might have easily used *kṣarantu* without detriment to the metre. The idea is : To the man who is holy the winds waft honey, the rivers distil honey ; we are holy, so naturally the wind will waft honey to us, the rivers will distil honey for us ; let the herbs be honeyed for us and so on. The sage prays in this way because he knows that he is a holy man. This reminds one of the well-known hemistich of Kālidāsa :

सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥

in which **सताम्** is the most important word, even as **ऋतायते** is the most important word in our mantra. But for the word *satām* the most inveterate sinner would be able to justify his most heinous deeds on the ground that his mind inclined in that direction, as many people actually do, by saying :

त्वया हृषीकेश हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥

The word *satām,* however, makes it clear that the principle holds good only in the case of men who are good by birth and education ( **निसर्गसंस्कारविनीत** ). As Kumārila Bhaṭṭa says in his Tantravārttika :

यथा रुमायां लवणाकरेषु मेरौ यथा वोज्ज्वलरत्नभूमौ ।
यज्जायते तन्मयमेव तत्स्यात्तथा भवेद्वेदविदात्मतुष्टिः ॥
एवं च विद्वद्वदनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ॥

From the above it will be clear that just as it is not possible to take **ऋजूयताम्** as a finite verb in

देवानां भद्रा सुमतिर्ऋजूयतां
देवानां रातिरभि नो नि वर्तताम् ।
देवानां सख्यमुप सेदिमा वयं
देवा न आयुः प्र तिरन्तु जीवसे ॥

the second stanza of the preceding hymn (i. 89), so it is not possible to take *ṛtāyate* in the Madhu-sūkta as a finite verb and we should take *kṣaranti* in its usual sense of 'distil' and not in the unusual sense of 'let them distil'.

। श्रीसदाशिवसमर्पणमस्तु ।

# भारविः सारविद्यः

[ श्रीमहालिङ्गशास्त्री ]

पद्धतिप्रवर्तकस्य भारवेः कविकुञ्जरत्वम् ।

भारवेरर्वाङ् महाकविर्माघः सर्वथा भारविक्षुण्णमेवाध्वानमनुसरन् स्वप्रज्ञाप्रभावं सफलयामास। यादवाभ्युदयावधीनि च महाकाव्यान्यनेकानि भारविप्रस्थानानुपातीन्येव । अस्ति किल सुगमान्तरा द्वयी महाकाव्यपद्धतिः ; तत्रैका कालिदासोपज्ञं प्रवृत्ता, इतरा च भारव्युपज्ञम् । द्वावप्येतौ महाकाव्यघण्टापथकविकुञ्जरौ । उक्तं श्रीनीलकण्ठदीक्षितैः—

अन्धास्ते कवयो येषां पन्थाः क्षुण्णः परैर्भवेत् ।
परेषां च यदाक्रान्तः पन्थास्ते कविकुञ्जराः ।। इति ।
उभौ विभिन्नदिक्कावपि तुल्यं यशः प्रत्यपद्येताम् ।
स्वस्वयूथसमस्कन्धमुन्नताविति समीचीनम् ।।

**भारवि-काव्यगुण-विवेकः**

कालिदासभारव्योः प्रत्येकविलक्षणां काव्यसमुत्कर्षरेखामुट्टङ्कयितुकामेन केनचिद् गूढार्थः प्रहेलिकाप्रायोऽयं श्लोकः उपक्षिप्तः—

अन्तरं कियदाख्यान्ति सन्तो रघुकिरातयोः ।
अन्तरं यावदाख्यान्ति सन्तो रघुकिरातयोः ।। इति ।

अस्यार्थः । काव्यनायकयोर्यदन्तरं तदेव काव्ययोरन्तरमिति फलति । तेन ह्येवं भावो ज्ञेयः—

रघुरिव रघुवंशं काव्यमेकान्तहृद्यं
मधुरमतिगभीरं मञ्जुलोदारवृत्तम् ।
अथ स इव किरातो भारवेः काव्यमेतद्
बहिरसरलमन्तर्भूरिमाहात्म्ययुक्तम् ।।

रघुर्मानुषोऽप्यमानुषप्रभावो वर्णितः कालिदासकाव्ये । किरातो दिव्योऽपि

मानुषविडम्बनामाचरन् वर्णितो भारविकाव्य। लोकातीतवृत्तान्त-मनोहारि रघुचरितं लौकिकनायकसम्बद्धमपि। अलौकिकनायक-सम्बद्धमपि किरातचरितं लोकधर्मानुवर्ति विहितं भारविणा। रघोरिन्द्रेण कृतं युद्धम्, दिग्विजयः, सर्वस्वदक्षिणो यज्ञः, कुबेराभियुयुक्षा, कोशागारे स्वर्णवर्षप्राप्तिः, कौत्सप्रीणनम्, पुत्रविवाहानन्तरं राज्यान्निवृत्य तुरीयपुरुषार्थसाधनमित्यादि चरितम् अतिमनोहरमपि, उदात्त-सन्मार्गनिदर्शनप्रवणमपि, प्रमितातिशायि कथाच्छायानुवृत्ति च सत् अर्थवाद इव भावप्राधान्यमश्नुते, लोकधर्मं तलस्पर्शितया नावगाहते। भारवीयं तु काव्यं क्वचित् कविसमयानुरोधेन अप्सरोगणमवतारय-दपि, प्रतिपादयदपि दिव्यास्त्रप्रभावाश्चर्यचर्यं युद्धम्, प्राधान्यतः लोकधर्ममेव प्रमाणीकृत्य सुजनदुर्जनसंघट्टे दुर्जनोदयम्, सुजनदौजन्यम्, प्राप्तोदयस्यापि दुर्जनस्य शङ्कान्तकशिथिलताम्, प्राप्तावग्रहस्यापि सुजनस्य अप्रकम्प्यां धृतिम्, साधुसमागमेन सुजनस्योत्थानम्, अविगीतमार्गोपहितं तस्य प्रयतनम्, तस्यैव सम्यगध्यात्मगुणस्थैर्यम् अन्ततः ईश्वरानुग्रहेण महार्घफलावाप्तिं, प्रतिष्ठां च महतीं यथावत् प्रतिपादयति।

शशिप्रभेव प्रह्लादं कालिदाससरस्वती।
तनोति भारवेर्वाणी प्रबोधं भा रवेरिव॥

तथा चोक्तं राजशेखरेण—

"कृत्स्नप्रबोधकृद्वाणी भा रवेरिव भारवेः।" इति।

तेन हीत्थं विवेचयितुं शक्यम्। कालिदासो भावकविः भारविः प्रज्ञा-कविरिति॥

रसभाववती वाणी कालिदासस्य कोमला।
शोभते सोपमोत्प्रेक्षा दृष्टान्तादिपरिष्कृता॥
स्वभावोक्तिपरा वाचो भारवेरपि गौरवम्।
यान्ति गम्भीरनिर्ह्लादा विन्यस्तार्थान्तरप्रियाः॥

अनयोरन्तरं चैतत् समासादुपवर्ण्यते ।
सौन्दर्य दृष्टवानाद्यः मर्त्यसंविदगोचरम् ।।
तत्त्वमाकलयत्यन्यो विवेकोर्जितया धिया ।।
चिदानन्दात्मकं ब्रह्म तद्धि योगिभिरिष्यते ।
प्रकाशाह्लादविप्रुड्भ्यां विकासिप्रतिभाम्बरे ।।
प्रसृताभ्यां ततश्चोभौ तौ कवी पारदर्शिनौ ।।
काचार्तं वलिरं काणमल्पाक्षं चाप्यचक्षुषम् ।
चरितार्थतया युङ्क्तः संसारं किञ्चिदन्तरा ।।

ईदृशमाशयं गर्भीकुर्वन्नेव प्राक्तनसहृदयानामाभाणको भारविमन्तरा प्रावर्तत—"**भारवेरर्थगौरवम्**" इति ।। इदमेव च भारवेः सारवित्त्वमस्मदभिमतम् ।।

यद्व्याचष्टे नयविवरणैरान्तरं लोकतत्त्वं
नारं नारायणमिव परं यन्निबध्नाति वीरम् ।
यश्चाशास्ते पशुपतिपदालम्बनं सर्वयत्नै-
स्तद्धि प्रौढिप्रचुरवचसो भारवेः सारवित्त्वम् ।।
पञ्चेन्द्रियाणि हृदयं वचसा गुरूणां
शम्भौ निधाय महिमानमवाप्नुवन्तु ।
अद्येति सूचितमिव प्रहितेन पान्थैः
शम्भोः पदं नरवरेण किरातकाव्ये ।।

इति शम्

अनुबन्धः (१)

प्राक्तनानि भारविप्रशस्तिपद्यानि ।

१ । उपमा कालिदासस्य भारवेरर्थगौरवम् । इति कस्यापि ।।

२ । नारिकेलफलसंमितं वचो भारवेः सपदि तद्विभज्यते ।
स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम् ।।

इति मल्लिनाथः ।।

३। अन्तरं कियदाख्यान्ति सन्तो रघुकिरातयोः ।
अन्तरं यावदाख्यान्ति सन्तो रघुकिरातयोः ॥

इति सूक्तिमुक्तावल्यां कस्यापि ॥

४। कृत्स्नप्रबोधकृद्वाणी भारवेः । इति राजशेखरस्य ॥

५। विमर्दव्यक्तसौरभ्या भारती भारवेः कवेः ।
धत्ते बकुलमालेव विदग्धानां चमत्क्रियाम् ॥

इति गङ्गादेवी ॥

६। प्रकृतिमधुरा भारविगिरः ॥ इति सदुक्तिकर्णामृते ॥

७। प्रदेशवृत्त्याऽपि महान्तमर्थं
प्रदर्शयन्ती रसमादधाना ।
सा भारवेः सत्पथदीपिकेव
रम्याकृतिः कैरिव नोपजीव्या ॥ इति कस्यापि ॥

८। तादात्म्यं भावरसयोः भारविः स्पष्टमूचिवान् ॥

इति कस्यापि ॥

९। भारविः सारविद्योऽसौ प्रतिभारविरेव नः ॥ इति वयम् ॥

## अनुबन्धः (२)

### "भारवेर्वाक्सारवित्त्वम्"

१। विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः ॥ २।३

२। परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम् ।
अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः ॥ २।४

३। अपवर्जितविप्लवे शुचौ हृदयग्राहिणि मङ्गलास्पदे ।
विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते ॥३।२६

४। स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।
रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित् ॥
२।२७

५। उपपत्तिरुदाहृता बलादनुमानेन न चागमः क्षतः ।
इदमीदृगनीदृगाशयः प्रसभं वक्तुमुपक्रमेत कः ।। २।२८

६। मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ।।२।३३

७। प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।
साकाङ्क्षमनुपस्कारं विष्वग्गति निराकुलम् ।। ११।३८

८। न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे ।
अप्रकम्प्यतयाऽन्येषामाम्नायवचनोपमम् ।। ११।३९

९। अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम् ।
औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव ।। ११।४०

१०। इदमीदृग्गुणोपेतं लब्धावसरसाधनम् ।
व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः ।।११।४१

११। अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ।। ११।४३

१२। सलेशमुल्लिङ्गितशात्रवेङ्गितः कृती गिरां विस्तरतत्त्वसंग्रहे ।
अयं प्रमाणीकृतकालसाधनः प्रशान्तसंरम्भ इवाददे वचः ।।
१४।२

१३। विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती ।।१४।३

१४। भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित्
प्रकाशताम् ।। १४।४

१५। स्तुवन्ति गुर्वीमभिधेयसम्पदं विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ।।
१४।५

---

# व्याकरणस्य बीजम्

[ श्रीकुमुदरञ्जन-रायः ]

भारतीयसाहित्ये सर्वशास्त्राणां सर्वग्रन्थानाञ्च मूलसूत्रं बीजभूतं पदं वाक्यं वा विद्यते। एवं वेदानाम् "एकं वा इदं वि बभूव सर्वम्" (ऋ० सं० ८।५८।२) "एकं सद् विप्रा बहुधा वदन्ति" (ऋ सं० १।१६४। ४६) इत्यादि, उपनिषदाम् "आत्मा वा इदमेक एवाग्र आसीत्," "एको देवः सर्वभूतेषु गूढः" इत्यादि, धर्मादिशास्त्राणाम् "एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः," "धर्मेण हि सहायेन तमस्तरति दुस्तरम्" इत्यादि (मनुसंहितायाम्), दर्शनशास्त्राणाम् "एवं तत्त्वाभ्यासात् परिशुद्ध-मुत्पद्यते ज्ञानम्" इति, रामायणस्य "मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः" इति, महाभारतस्य "यतो धर्मस्ततो जयः" इति, पुराणानां "पुरापरम्परां वक्ति पुराणं तेन वै स्मृतम्" इति पद्मपुराणे च दृश्यते। एवमष्टाध्याय्यां व्याकरणानां मूलभूतं पदमस्ति। तच्च "कर्मधारय" इति मे मतमुत्तमम्।

एष शब्दः बहुधा व्याख्यानसहः सन् एकतः व्याकरणस्य सर्वं प्रकरणं सुष्ठु गमयति, अन्यतः संसारतत्त्वं प्रकृतितत्त्वं मोक्षतत्त्वं च प्रख्यापयति। कर्मधारय इति समासविशेषस्य सुप्रसिद्धा संज्ञा। स च तत्पुरुषविशेषः। एव पाणिनिना सूत्रितम् "तत्पुरुषः समानाधि-करणः कर्मधारयः" (१।२।४२) इति। भाष्य-वृत्ति-कौस्तुभमनोरमादि-ग्रन्थे कर्मधारयशब्दस्य विशेषविश्लेषणं न लभ्यते, परन्तु सूक्ष्मेक्षिकया विश्लेषितश्चेत् एष सर्वसमासान् क्रोडीकरोति तिङ्कृत्तद्धितादींश्च वक्षसि वहति, अन्तरे च जगत्तत्त्वं प्रज्वलयति। तद् यथा—

धारयति इति धारि+श (कर्तरि)=धारयः, धारक इत्यर्थः। "अनुप-सर्गाल्लिम्पविन्दधारि—" (३।१।१३८) इति सूत्रेण। कर्मणो धारयः (धारकः) इति षष्ठीसमासेन कर्मधारयशब्दः तत्पुरुषं बोधयति। ततश्च संज्ञाविशेषे पर्यवस्यति। कर्मणा धारयः, कर्मणो धारयः, कर्मणि

धारयः इत्यादिरपि तत्पुरुषः सहसुपेति वा समासः सम्भवति। अर्थश्च "यः कर्मणां धारकस्तत्र दक्षो वा" इति। यद्वा कर्मरूपो धारयः (धारकः) इति उत्तरपदलोपिसमासः। कर्म च जगतो धारकम्, अतश्च कर्म एव संसारधारकम्। एवमर्थे कर्म एव धारय इत्यपि मयूरव्यंसकादिवत् समासो भवति। कर्म धारयः (धारको जगद्धारकः)इव इति कर्मधारयः,"उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" (२।१।५६) इति समासः। यतः कर्म विष्णुरिव प्रभविष्णु ग्रसिष्णु च। कर्म इव धारयः (धारकः), 'कर्म यथा सर्वं धारयति एवं पुरुषोऽपि स्यात्, "उपमानानि सामान्यवचनैः" इति समासः। पुनश्च, कर्म धारयं (धारकं) यस्मिन् संसारे, स कर्मधारयः (संसारप्रवाहः) इति बहुव्रीहिसमासोऽपि सम्भवति। कर्म विना संसारप्रवाहस्य असम्भवात्, ब्रह्मादिकीटपर्यन्तानां कर्माधीनत्वाच्च। यद्वा धारयति इति धारयः धारकः पालकः, श्रीविष्णुरित्यर्थः। कर्म च धारयश्च इति द्वन्द्वे सति कर्मधारयौ इत्यस्य स्थले कर्मधारय इति आर्षः सौत्रो वा संज्ञात्वात्। कर्म तथा संसारपालको विष्णुश्च इति द्वयमपि जगति प्राधान्येन अभिनिविष्टम्। श्रीभगवान् पालकोऽस्ति, कर्म च संसारचक्रं चालयति। तथा च श्रीगीतायामुक्तम् "भूतभावोद्भवकरो विसर्गः कर्मसंज्ञकः" इति। पुनश्च—धृ+णिच्+लोट् हि इति धारय धारणं कुरु इत्यर्थः। ततः कर्म धारय (कुरु) इति यस्मिन् काले संसारे च वर्तते तत् कर्मधारयम्। तिष्ठद्ग्वादिन्यायेन निपातनात् अव्ययीभावेन सिद्धम्। "तिष्ठद्गुप्रभृतीनि च" इत्यत्र च-कारस्य अनुक्तसमुच्चयार्थत्वमाश्रित्य च कथमपि समाधेयम्। अत एव श्रीगातायाम् उक्तम्—तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च" इति। जीवस्य कर्मवशात् जन्मपरिग्रहान्निर्दिष्टकाले निर्दिष्टक्रियाकरणाच्च एवं व्याख्यातुमुत्सहे। अस्यां प्रतिक्रियायां कर्मधारयम् इत्यर्थे कर्मधारय इति व्यवहार आर्षः सौत्रः संज्ञानिबन्धनश्च। एवं बहुधा व्याख्यातस्य अस्येदं हृदयम्—कर्मवशात् नियतं जीवस्य जन्म स्यात्, ततः स कर्म करिष्यति धारयिष्यति ; संसारचक्रानुवर्तनमनु-

गच्छति च ; एवं यथाकालं कर्मधारणात् ("न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" इति भगवद्वाक्यात्) स बहुव्रीहीन् अर्जयति, पश्चाद् दारपरिग्रहं कृत्वा द्वन्द्वो जायते, काले व्यतीते तत्त्वज्ञानाभ्यासात् स एव जीवस्तत्पुरुषो जायते, ब्रह्मस्वरूपं लब्ध्वा तत्पुरुषो भवति इत्यर्थः। पश्चाच्च साधनसमाधियोगेन, अव्ययात्मना एकीभूतत्वात् अव्ययीभावश्च जीवः स्यात्। अतः सार्थकनामासौ शब्दः मुख्य-लक्ष्य-व्यङ्ग्यार्थाश्रयणेन व्याकरणस्य समासजालं तिङन्त-कृदन्तप्रक्रियां तथा भङ्ग्यन्तरेण तत्त्वज्ञानं बोधयित्वा शब्दशास्त्रस्य प्रक्रियासमूहं समीहते, निःश्रेयसमाश्रयति च। सुष्ठु खल्वाह भगवान् पतञ्जलिः—"एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तश्च स्वर्गे लोके कामधुग् भवति" इति। तथा चोक्तं "गौर्गाः कामदुघा" इति।

तद्धितप्रक्रिया नानेन शब्देन लेशतोपि बोधिता इति चेत्, इत्थं योजनीयम्—ध्रियते प्राणान् धारयति इति धरः (धृ तुदादि+पचाद्यच्)। जीव इत्यर्थ। ततः धर एव धारः इति प्रज्ञाद्यण्। धारं (जीवं) याति गच्छति इति धार+या+क (कर्तरि)=धारयम्। यत् (कर्म) जीवम् अवश्यम् गच्छति प्राप्नोति वा। ततः—कर्म एव धारयम् (जीवानुगमकम्) इति समासे कर्मधारयम्, तत्स्थले कर्मधारय इति पुंस्त्वं पूर्ववत् आर्षत्वेन संज्ञात्वेन च समाधेयम्, संज्ञाशब्दस्य स्वतःप्रमाणत्वात्। यद्वा—कर्मणो धारयः (धारकः)। सः अस्ति अस्मिन् संसारे इति अर्श आद्यचि कर्मधारयः (संसारः)। एवं शब्देनानेन तद्धितमपि गम्यते। ततः समस्तव्याकरणप्रक्रियां व्यनक्ति समाजराष्ट्र-संसारतत्त्वं च प्रख्यापयति एकोऽसौ कर्मधारयशब्दः। यथा ब्रह्मणि तथा अस्मिन्नपि सर्वमेव प्रकारान्तरेण प्रतिष्ठितम्। अत एतदेव व्याकरणस्य व्यक्तेः जातेश्च बीजभूतं पदम्, ब्रह्मसमुद्भवं क्षात्रं तेज इव दुरासदम्। इत्यास्तां विस्तरः।

शास्त्रसागरनिष्णातं ध्यानाकाशमहाग्रहम्।
द्रष्टारं शब्दशास्त्रस्य वन्दे मुनिं महामतिम्॥

यदनुक्तं दुरुक्तं वा मतिमोहसमुद्भवम् ।
सन्तः सन्ततकारुण्यास्तत् सर्वं मर्षयन्तु मे ।।

---

# सुभाषितानि

उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्ग सुखात् सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनाढ्याः शुभकारिणः ।।

दुर्भिक्षादेव दुर्भिक्षं क्लेशात् क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृतं यान्ति दरिद्राः पापकारिणः ।।

महाभारतम् ।

उचितं नाम नारङ्ग्यां केतक्यामपि कण्टकाः ।
रसगन्धोज्झिते किं ते कण्टकाः कण्टकारिके ।।

शार्ङ्गधरपद्धतिः ।।

चन्दने विषधरान् सहामहे वस्तु सुन्दरमगुप्तिमत् कुतः ।
रक्षितुं वद किमात्मसौष्ठवं कण्टकाः खदिर सञ्चितास्त्वया ।।

श्लाघ्यं महत्त्वमेकस्य नभसो भुवनत्रये ।
परस्य वृद्धौ यन्नैव गणयत्यात्मनः क्षयम् ।।

महत्त्वं धिग्धिगेतस्य गगनस्यात्मवृद्धये ।
उद्वीक्षमाणमेवास्ते यत् परस्य परिक्षयम् ।।

तीव्रं रविस्तपति नीच इवाचिराढ्यः
पिच्छं शिखी त्यजति मित्रमिवाकृतज्ञः ।
तोयं प्रसीदति मुनेरिव चित्तवृत्तिः
कामी दरिद्र इव शोषमुपैति पङ्कः ।।

उदस्योच्चैः पुच्छं शिरसि निहितं जीर्णजटिले
यदृच्छाव्यापन्नद्विपपिशितलेशाः कवलिताः ।
गुहागर्भे शून्ये सुचिरमुषितं जम्बुक सखे
तदेतत् किं कुर्मो यदसि न गतः सिंहसमताम् ।।

---

# नामैकदेशग्रहणेन नाममात्रग्रहणम्

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

ऐतरेयब्राह्मणे श्रूयते—पथ्यां यजति [ १ अ० १ ख० ] इति। तत्र षड्गुरुशिष्येणोक्तम्—

पथ्येति त्वेकदेशेन पथ्यास्वस्तिर्हि कथ्यते।
भीमसेनो यथा भीमः सत्यभामा च भामिनी॥
भामेति चोच्यते देवी त्रैलोक्ये गुरुवल्लभा।
पुरस्तात्तु यजेदत्र पथ्यास्वस्तिं हि देवताम्॥ इति।

पुनरपि श्रूयते—'पथ्यां यजति' [ २ अ० २ ख० ] इति। तत्र च षड्गुरु-शिष्येणोक्तम्—"पथ्यास्वस्तिदेवतात्र पथ्येत्युक्तैकदेशतः' इति।

---

# विचित्रो विवेकः

[ श्रीउपेन्द्रनाथ-गङ्गोपाध्यायः ]

( २ )

प्रभूतान्वेषणेनापि पुनः प्रियमित्रसब्रह्मचारी कोऽपि नोपलब्धः। अगतिकतया च गौरीकान्तेन भृशनिन्दितो व्यवहाराजीव एव शरणीकृतः।

व्यवहाराजीवः करुणावसुः स्वीयं पारिश्रमिकं समादाय व्यवहाराजीवपत्रं धर्माधिकरणे प्रदत्तवान्। ततश्च पत्रादिकं परीक्ष्योक्तवान् 'वर्तते पन्थाः' इति।

गौरीकान्तः सकौतूहलमपृच्छत्, वर्तते ? को वा पन्था वर्तते ? इति।

ऋणादानावसरे सूर्यकान्तेन यत् तावत् पत्रं विलिख्य प्रदत्तम्

तस्य कालपूर्तेः पूर्वमेव प्रियमित्रः सूर्यकान्तेन प्रथमपत्रानुसारेण द्वितीयमपि पत्रं लेखितवान्। यथारीत्युभयमपि पत्रं न्यायाधीशस्य पुरस्तादुपस्थापितम् इति तु न पृथग् वक्तुमावश्यकम्।

करुणामयोऽवदत्, प्रथमपत्रे भवतः पितुर्यो नामसन्निवेशो वर्तते स द्वितीयपत्रगतैर्नामाक्षरैः सर्वथा न संवदति। अत एवोत्तरेणास्माभिर्वक्तव्यम्—द्वितीयपत्रस्य नामाक्षराणि कूटकानि। स्वाम्यनिवर्तनं मा भूदिति भवदीयपितुर्मरणादूर्ध्वं वादिपक्षेण द्वितीयं कूटपत्रं प्रणीतमिति।

पथो विवरणमाकर्ण्य गौरीकान्तस्य वदनकमलं विच्छायतामभजत्। स च मृदुनानुद्दीप्तेन च कण्ठेनावदत्, परं करुणामहोदय, पत्रस्य नवीकरणावसरे पितुः शरीरावस्था नितरामेव शोचनीयासीदिति द्वितीयपत्रस्य नामाक्षराणां कदाचित् कथञ्चिद्विसंवादः स्यादिति।

मतस्यास्य कमपि प्रतिवादमकृत्वैव करुणामयोऽवदत्, तत्तु स्यादेव, परं नामाक्षरवर्जं द्वितीयपत्रस्य किमपि वर्णं भवतः पितुर्हस्तान्न निर्गतम् इति तु सत्यम्? इति।

गौरीकान्तोऽवदत्, बाढं सत्यम्। परमवसरे तस्मिन् नामाक्षरसन्निवेशमन्तरेणापरस्य कस्यापि लेखने शक्तिर्नासीन्मे पितुरिति।

करुणामयोऽवदत्, तदपि सम्भवति, परमेतत् सर्वं प्रतिपक्षेणैव प्रमापयितव्यम्, न भवता। किञ्च, द्वितीयपत्रस्य विवृत्यंशः सूर्यकान्तमहोदयस्य नेदिष्ठ-स्वजनस्य भवत इति यावत् लेखो न भवति। उच्यतां तावदेतदपि सत्यं न वेति।

गौरीकान्तोऽवदत्, अथ किम्। सत्यमेव। परं पत्रस्य नवीकरणावसरे न खलु मयात्रावस्थितम्, कलिकातायामेवाहमासम्।

करुणामयोऽवदत्, तत्रापि कदाचिदासीथाः, परं तदपि प्रमापयितव्यं प्रतिपक्षेणेति।

यत्किमपि स वक्तुमिच्छति तत् सर्वमेव वादिपक्षेण प्रमापयितव्यमिति श्रुत्वा गौरीकान्तोऽपरं किमपि वक्तुं नोदसहत।

करुणावसुरवदत्, किञ्च, द्वितीयपत्रस्य दिननिर्देशत ऊर्ध्वं मूलस्य वा वृद्धेर्वा लेशतोऽपि प्रत्यर्पणस्य समुल्लेखो नास्ति। द्वितीयपत्रस्य कूटत्वप्रमापण एतदपि बाहुल्येन साहायकं करिष्यति।

कदाचित् कुर्यात्, परं मूलनीतिरेव कथमपि सूर्यकान्तस्य मनःपूता नाभवत्। पञ्चभ्यो वत्सरेभ्यः पूर्व प्रथमपत्रोक्तदिवसे प्रियमित्रेण गणनापुरःसरं पितुः पाणौ रूप्यकाणां सहस्रद्वितयं प्रदत्तम्। तत्र तस्य प्रत्यक्षतो विज्ञानं वर्तते। द्वितीयस्मिन्नपि पत्रे, सूर्यकान्तेन स्वयमेव नामाक्षराणि सन्निवेशितानीत्यपि सूर्यकान्तेन स्वयमेव तस्मै कथितम्। एवं गते कथ वा वक्तव्यं लेख्यं कूटमिति, अत एव व्यवहारस्याप्रसर इति। एवंविधेन विप्रलम्भेन स्वीयमृणं कथमपि निर्यात्येत, परं पितुर्ऋणं निर्यातयितुं शक्येत वा? ईदृशेन व्यतिकरेण धर्मो रक्षितो भवति वा? इति।

दरस्खलितकण्ठेन गौरीकान्तेनोक्तम्, परं करुणामहोदय, परमार्थतस्तु द्वितीयं पत्रं नैव कूटपत्रमिति।

गौरीकान्तस्य वचनमुपश्रुत्य करुणामयः कठोरकण्ठेनावदत्, अहो! प्रथममेवेदमाकर्ण्यते मयेति। ततश्च क्षणं तूष्णीमवस्थायावोचत्, तर्हि किमिति मत्समीपमागतो भवानिति सम्यग् नैव विभावयामि। अपि नाम वादिनो व्यवहाराजीवेन साकमेकतानं मन्मुखेनापि तदेवोच्चारयितुमिति?

किञ्चिदिव प्रतिपत्तिमूढो गौरीकान्तोऽवदत्, नहि, नह्यार्य। यदि भवान् वादिना यत् प्रार्थ्यते तस्य परिमाणं कथञ्चिद्ध्रासयितुं प्रभवेदिति अथवा प्रतिमासं यथासौकर्यं किञ्चिद्देयमिति व्यवस्थां कारयेदित्येतदर्थं भवत्समीपमागतोऽस्मि।

करुणामयोऽवदत्, मया चेद्वादिनः सविधेऽञ्जलिबन्धनं कारयसि तर्हि तथाविधा साशंसा दुराशंसा एव। यदि किञ्चित् सौकर्यं साधयितुं प्रभवेयं तर्हि चक्षुषी रक्तवर्णे विधायैव। वादिनो व्यवहारस्य

मूले बृहदाकारमाघातं निपातयितुं शक्नुयां चेत् तर्हि स्वल्पाकारं सौकर्यमाच्छेत्तुं सुकरं स्यात् इति ।

मुहूर्तं मनसा किमपि विमृश्य गौरीकान्तोऽवदत्, तर्हि प्रत्युत्तरमस्माकं कीदृशं स्यात् ? उच्यताम् । इति ।

करुणामयोऽवदत्, सामान्यतोऽस्माकमुत्तरं स्यात्, यस्य पत्रस्य बलेनाभियोगोऽयं प्रारब्धस्तदेव द्वितीयं पत्रं कूटपत्रमिति वादिनो व्यवहारः कालातिक्रमदोषेण प्रत्याख्यातो भवतु। परं यदि धर्माधिकरणस्य मतेन वादिनः प्रार्थनं यथाकथञ्चित् सप्रमाणमिति निर्णीयते तर्हीतः पूर्वमपरिमितं कुसीदं प्रदत्तमिति वादिनः प्रार्थितस्यार्थस्य परिमाणं ह्रासयित्वा प्रतिमासं स्वल्पमेव प्रदेयमिति निर्धारणीयम् इति ।

करुणामयस्य वचनमाकर्ण्य गौरीकान्तो विस्मितकण्ठमवदत्, अपि नामैकस्मिन्नेव प्रत्युत्तरे व्यवहारोच्छेदस्य स्वल्पशः प्रदानस्य च प्रार्थनं दोषाय न स्यात्। इति।

भ्रूकुञ्चनपूर्वकं करुणामयोऽवदत्, किमिति ! अपि नामेदं विप्रतिषिद्धमिव प्रतिभाति इति ।

कुण्ठितकण्ठेन गौरीकान्तेनोक्तम्, आर्य, अथ किम् । तथैव प्रतिभाति। इति।

करुणामयोऽवदत्, रामचन्द्रः ! लेशतोऽपि न तथा। एतत्तु नितरां साधारणमेव वचनं यत् खल्वस्माभिः सायम्प्रातरुच्यते। काले कालेऽस्माभिः कीदृशं प्रत्युत्तरं प्रदीयते तच्छ्रोष्यति भवान् ? तथाहि स्थालीविक्रयव्यवहारेऽस्माभिः प्रत्युच्यते प्रथमतस्तावद्विवादिना वादिनः सकाशाल्लेशतोऽपि स्थाली न क्रीता। द्वितीयतः यदि कदाचिद्वादिना स्थाली क्रीता स्यात्, तर्हि सच्छिद्रैव स्थाली क्रीता, अतश्च वादी स्थाल्या मूल्यं कथमपि नाधिगन्तुमर्हतीति ।

विस्मयातिरेकेण गौरीकान्तस्य नेत्रयुगलं विस्फारितं सञ्जातम्, तेन च चकितकण्ठमुक्तम्—'अहो आश्चर्यम् ! एतादृशमपि वचनं भवद्भिरुच्यते वा !' इति ।

करुणामयोऽवदत्, अथ किम्, अथ किम् ! बाढमस्माभिरेतादृशं वचनमुच्यते। व्यवहाराजीवानामाधिक्येनापत्रपा वर्तते—एवंविधमपवादं सहसा कोऽपि प्रदातुं न प्रभवेत् इत्युक्त्वा विहितस्तेनोच्चैर्हासः। क्षणादूर्ध्वं चासाववदत्, आपाततस्तावद् गुरुजातीयकं किमति प्रत्युत्तरं प्रदीयताम्, व्यवहारोऽयमवरतो वर्षस्यैकस्य कृते प्रलम्बमानं तिष्ठतु, अवकाशे चास्मिन् विविधानामवस्थानामुद्भवः सम्भवति। किमधिकं पक्षादमुष्मादपि कदाचिद् विनैव व्यवहारप्रयोगं समीकरणस्य प्रस्तावः समागच्छेत् इति।

पत्ना गिरिजायापि गौराकान्तस्य मुखात् सर्वमुपश्रुत्य व्यवहाराजीवस्यैवोपदेशं समीचीनममन्यतावदच्च, धर्मस्तावत्त्वदायत्त एव। व्यवहारस्यासाफल्येऽपि त्वञ्चेद् यथासौकर्यमृणं निर्यातयसि तर्हि लेशतोऽपि धर्महानि र्न स्यात्। अथचापाततः कतिचिद् दिनान्युच्छ्वसितुं प्रभविष्यसि इति।

अलम्बभूव वचनमिदं कथञ्चित् समाश्वासयितुं कुण्ठितं विवेकम्, गौरीकान्तश्च सम्मतोऽभवत्। यथाकालं प्रत्युत्तरं धर्माधिकरणे समुपन्यस्तम्।

प्रत्युत्तरसन्दर्शनेन प्रतिपक्षशिबिरे गभीरं चाञ्चल्यं प्रादुर्भूतम्। वादी प्रियमित्रः स्वव्यवहाराजीवं रामप्रसादचट्टोपाध्यायं साक्षात्कृत्य प्रोवाच, चट्टोपाध्यायमहोदय, धर्मस्य वार्तापि जगतोऽस्तमिता। सूर्यकान्तस्य तनयेनाप्युच्यते, द्वितीय ऋणपत्रे तस्य पितुर्हस्ताक्षरं मयैव कूटलेखनेन न्यस्तमिति।

रामप्रसादोऽवदत्, केवलमेतावदेवोक्तम्! प्रथममृणपत्रं यद्बलेन रूप्यकाणां सहस्रद्वितयं भवता ऋणरूपेण दत्तम् तदपि भवता कूटलेखेन लिखितमिति तु तेन नोक्तम्। एतदर्थं स धन्यवादानर्हति। व्यवहारस्य मार्गे विचरति भवान् प्रियमहोदय, व्यवहारस्य कण्टकेन पादयोर्वेधे विप्रतिपत्ति र्न कर्तव्या इति।

इदानीं को वोपायः कण्टकस्यास्य समुद्धरणे ?

अलमत्र चिन्तया । यथावसरं तस्य विधानं करिष्यते । हस्तलिपि-विशारदस्य साक्ष्यं प्रदेयं स्यात् ।

व्यवहारगतानि द्वित्राणि विषयान्तराण्यालोच्य प्रियमित्रो व्यवहाराजीवभवनान्निष्क्रान्तः ।

( ३ )

परं प्रायेण वर्षादूर्ध्वं समुपक्रान्ते व्यवहारे प्रतीतं न खलु हस्तलिपि-विशारदस्य साक्ष्येण व्यवहार-कण्टकः सर्वथा समुद्धृतः, तस्य कियांश्चन भागोऽन्तरवस्थाय खच्खचायते स्मेति । प्रतिपक्षीयव्यवहाराजीवस्य प्रश्नानामुत्तरमुखेण साक्षिणा तथाविधान्येकद्वानि वचनान्युक्तानि यानि खलु न प्रबभूवुः सूर्यकान्तस्य स्वहस्ताक्षरं प्रति विवादिनारोपितं कृत्रिमतापवादं सर्वथा समुन्मूलयितुम् ।

साक्षिणः प्रश्नमुखेन परीक्षणं समाप्यासनं परिगृह्य करुणामय-व्यवहारजीवेन सोल्लासं गौरीकान्तस्य कर्णे कथितम्, न खलु हस्त-लिपिविशारदस्योक्तिः सर्वत्र निरपायमस्त्रम्, अन्तरान्तरानया स्वकण्ठो निकृत्यते, अत्रापि कथञ्चितत् तथैव निकृत्तम् । साम्प्रतं यदि भवान् स्ववचने सर्वथाविचलित एवावस्थातुमलं स्यात्, तर्हि प्रतिपक्षस्य पण्यपूर्णाया नावो निमज्जनं सम्भाव्यते इति ।

गौरीकान्तेन साग्रहं मृदुकण्ठन पृष्टं—किं तावन्मे स्ववचनम् ? इति ।

भवदीयं वचनं—मम पितुः स्वाक्षरं कूटमिति ।

वर्षमेकं व्यवहाराजीवस्य गृहे गमनागमने विधाय प्रति-निर्दिष्ट-दिवसं च धर्माधिकरण समुपस्थानेन व्यवहारमधिकृत्य गौरीकान्तस्य मानसे मत्ततया कृतं पदम् । तेन करुणामयस्य कर्णे नीचैरुक्तम्, अलमत्र चिन्तया, अविचलित एव तिष्ठेयमहमस्मिन् वचन इति । करुणामयेन साकं प्रथमदिवसीयसंवादं संस्मृत्य तेनोक्तम्—पुरा कदाचिदहिंसनीते-रुपासक एवाहमासम्, परमधुना यदा गुलिकास्त्रमुत्तोलितं तदा मृगस्य शरीरं गुलिकयाविद्ध्वा नैव विरमामि । इत्युक्त्वा स्मितमकरोत् ।

अपरेषां केषाञ्चन साक्षिणामुक्तेरनन्तरं वादिपक्षस्य साक्ष्यं समाप्तिगमत् ।

तदा करुणामय आसनादुदतिष्ठत् । ततश्च प्रथमत एव तेन गौरीकान्तस्य परीक्षणं प्रारब्धम् । केभ्यश्चिद् भूमिकाप्रश्नेभ्योऽनन्तरं द्वितीयमृणपत्रं गौरीकान्तस्य पुरतः संस्थाप्य तेनोक्तम्, पश्यतु भवान्, किं तावदिदं पत्रम् ? इति ।

ऋणपत्रमान्तं पठित्वा गौरीकान्तेनोक्तम्—ऋणपत्रमिव प्रतिभातीति ।

अपि प्रभवति भवान् वक्तुम्—कस्येदं हस्ताक्षरमिति ?

न खलु प्रभवाम्यार्य ।

अपि पारयसि वक्तुं नामाक्षराणि केन लिखितानीति ।

तदपि न पारयामि ।

सावधानं निरीक्षतां भवान्, नामाक्षराणि भवतः पितुर्हस्ताक्षराणि वा न वेति ।

न हि न हि; नैवेमानि मम पितुर्हस्ताक्षराणि ।

भवतः पितुर्हस्ताक्षराणि भवतः परिचितानि ननु ?

सविशेषं परिचितानि ।

अपि कदापि प्रत्यक्षीकृतस्तत्रभवान् नामाक्षराणि सन्निवेशयन् ?

बहुशः प्रत्यक्षीकृतः ।

यदि कोऽपि ब्रूयात् इमानि परमार्थत एव भवतः पितुर्हस्ताक्षराणि तर्हि किं तावद्भवान् प्रतिपद्येत ?

मया वक्ष्यते– कूटमिति ।

प्रथममृणपत्रं पत्रनिचयान्निष्कास्य गौरीकान्ताय दर्शयित्वा करुणामयेन पृष्टम्—दृश्यतां तावत् कस्येदं हस्ताक्षरमिति ।

गौरीकान्तेनोक्तम्—इदं मम पित्रा लिखितमिति ।

आमूलान्तम् ?

आमूलान्तम् ।

नामाक्षरांशः ?

नामाक्षरांशोऽपि ।

द्वित्रानपरानावश्यकप्रश्नान् संपृच्छ्य करुणामयः ससन्तोषमासनं पर्यगृह्णात् ।

तदानीं वादिनो व्यवहाराजीवो रमाप्रसादचट्टोपाध्यायो गौराकान्तं प्रतिप्रष्टुमुद्यतोऽभूत् ।

( क्रमशः )

---

# निर्वचनम्

[ श्रीक्षिताशचन्द्र-चट्टोपाध्यायः ]

किं तावदश्वतरशब्दस्य निर्वचनम् ? अश्वशब्दात् ष्टरच्प्रत्यय इति वैयाकरणाः ।

पाणिनिः । वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे । ५।३।९१ (ष्टरच्)

चन्द्रः । वत्सोक्षाश्वर्षभानां तनुत्वे । ४।३।७४

वत्सादीनां स्वभावस्य तनुत्वे गम्यमाने ष्टरज् भवति । शैशवस्य तनुत्वे वत्सतरः, यौवनस्य तनुत्व उक्षतरः । अश्वभावस्य तनुत्वेऽश्वतरः । सामर्थ्यस्य तनुत्व ऋषभतरः । वृत्तिः ।

जैनेन्द्रः । वत्सीक्षाश्वर्षभाद् ध्रासे ४।१।१९८ ( तरट् )

शाकटायनः । वत्सोक्षर्षभाश्वाद्ध्रासे ३।४।१०४

सरस्वतीकण्ठाभरणम् । वत्सोक्षर्षभाश्वेभ्यः स्वार्थतनुत्वे । ५।३।११४

हेमचन्द्रः । वत्सोक्षाश्वर्षभाद्ध्रासे पित् ७।३।५१

वत्स उक्षन् अश्व ऋषभ इत्येतेभ्यः शब्दप्रवृत्तिनिमित्तस्य स्वार्थस्य ह्रासे गम्यमाने तरट्प्रत्ययो भवति ; स च पित् । ह्रसितो वत्सः वत्सतरः । वत्सः प्रथमवयस्को गौः, तस्य ह्रासः द्वितीयवयःप्राप्तिः । ह्रसित उक्षा उक्षतरः । उक्षा द्वितीयवयास्तरुणः, तस्य ह्रासस्तृतीयवयःप्राप्तिः । ह्रसितोऽश्वोऽश्वतरः । अश्वेनाश्वायां

जातोऽश्वः, तस्य ह्रासो गर्दभपितृकता । आशुगमनाद्वाश्वः, तस्य ह्रासो गमन मन्दता । सर्वथाश्वतरशब्दो जातिशब्दः । ह्रसित ऋषभ ऋषभतरः । ऋषभोऽनड्वान् बलीयान्, तस्य ह्रासो भारवहने मन्दशक्तिता । प्रत्यासत्तेः शब्दप्रवृत्तिनिमित्तस्य ह्रासे भवति । इह मा भूत् । कृशो वत्सो वत्सतर इति ।*

संक्षिप्तसारः । वत्साद् बाल्यमुक्ते । उक्ष्णस्तारुण्यमुक्ते । अश्वाद् गर्दभजाते । ऋषभाद्भारवहनाशक्ते । तद्धितपरिशिष्ट ११७३-७६ ।

गोयीचन्द्रटीका । बाल्येन मुक्ते वाच्ये वत्सादुत्तरे तरट् भवति । वत्सतरो मुक्तबाल्यः प्राप्तयौवनो वत्स उच्यते । तारुण्येन मुक्ते वाच्ये उक्ष्णस्तरट् स्यात् । उक्षतरस्त्यक्तयौवनः प्राप्ततृतीयवया उक्षोच्यते ।

मुग्धबोधम् । शुण्डोक्षाभ्योऽपकर्षे रष्टरौ । ४९२

रामतर्कवागीशटीका । उक्षतरीति त्यक्तयौवनेत्यर्थः । यद्यपि अपकर्षसामान्ये त्यः [ प्रत्ययः ], तथापि विशेषपरतया तारुण्यापकर्षोऽवगम्यत इति । एवं वत्सतरी । अत्र बाल्यापकर्षः । ऋषभतरीत्यत्र भारवहनापकर्षः । अश्वतरीत्यत्र अश्वगर्दभजातत्वात् अश्वगर्दभत्वक्रियापकर्षः ।

• सुपद्मम् । वत्सतरोऽतिबाल्ये । उक्षतरोऽतियौवने । अश्वतरः खरजे स्यात् । ऋषभतरो मन्दे । ५।४।१७८-१८१ ।

In *vatsatara'* (f. -rī') 'weanling' *as'vatarā*[1] 'mule', and *dhenuṣṭarī* 'cow losing her milk', the application of the suffix is peculiar and obscure. Whitney, *A Sanskrit Grammar*, § 1242 b.

The suffix *-tara* ..forms··· a few substantives in which the meaning of the suffix is somewhat obscure : *as'vatara'*, (AV.) mule (f. -ī'). Perhaps 'more (like a) horse' (than an ass). Macdonell, *Vedic Grammar*, 213 and f. n.

---

* The Cintāmaṇi-laghuvṛtti of Yakṣavarman on the corresponding rule of S'ākaṭayana is practically identical with this.

Après substantifs, la formation est relativement libre, soit qu'elle donne des diminutifs (en *tara-*)···*as'vatara-* P. "mulet"...Louis Renou, *Grammaire Sanscrite* §190.

प्रथमतस्तावदश्वतरशब्दस्य वैशिष्ट्यद्वितयं नयनपदवीमवतरति । यद्यपि तरप्प्रत्ययः प्रायेणानुदात्तस्तथाप्यश्वतरादिशब्दा अन्तोदात्ताः । किञ्च, तरप्प्रत्ययान्तशब्दानां स्त्रियां टाब् भवति, अश्वतरादिशब्दानां पुनः स्त्रियां ङीष् भवति । अत एव पाणिनिना महर्षिणान्तोदात्तार्थं चकारस्य ङीषर्थं षकारस्य चानुबन्धस्यासञ्जनेन ष्टरच्प्रत्ययः कल्पितः ।

वेदे तावद् वन्ध्या गौरित्यर्थे स्तरीशब्द उपलभ्यते—

शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गाम् [ ऋ० स० १।११६।२२ ] इति । अस्य च स्तरीशब्दस्य सकारलोपेन तरीशब्दस्योद्भवः । तथाच श्रूयते—अथैतेषां व्रीहीणामर्धानवघ्नन्ति, अथेतरान् गार्हपत्य एककपालानधिश्रित्य भर्जन्ति, अथ य उ न फलन्ति तास्तर्यः ..अथैनान् भृग्णान् बध्नन्ति । तेषां यानि च क्षुद्राणि याश्च तर्यस्ता उत्सेके संप्रकिरन्ति [ मैत्रायणी संहिता ] इति ।

सन्ति च बहवः शब्दा येषामाद्यस्य सकारस्य पाक्षिको वा नित्यो वा लोप उपलभ्यते । ऋग्वेदे तावच्चौरार्थकः तायु-शब्दः सन्दृश्यते, वाजसनेयिसंहितायामयमेव स्तायुरूपं परिगृह्णाति । स्तेन-स्तेयादिष्वपि शब्देषु सकारो जागर्त्येव । आङ्लभाषायां steal-शब्देऽपि सकारो विलसति, परं शब्दस्यास्य निर्वचनमद्यापि तमश्छन्नं वर्तते । आवेस्तायां चौरार्थकः "तायुः" चौर्यार्थकश्च "तायः" उपलभ्येते । ग्रीक्-भाषायां निःसकारकः tētaomai ससकारकश्च stereδ विराजतः । सर्वस्यास्य पर्यालोचनेन 'स्तायु 'शब्द एव सकारस्य मोषेण 'तायु'रूपेण पर्यवसित इति प्रतीयते । एवमेव तारा-तारकाशब्दौ निःसकारकौ परं स्तृशब्दः ससकारकः, अस्य च प्रथमाबहुवचने 'तारः' इति पदं भवति । आवेस्तायां स्तर्, ग्रीक्भाषायां aster, लाटिन-stella ( *ster-la ), जार्मान-stern, आङ्ल star, सर्वत्रैव सकारो देदीप्यते ।

यथा ग्रीक्भाषायां अप्रजाता कुमार्यपि steira-शब्देन बोध्यते विगतप्रजननशक्तिर्वृद्धापि steira-शब्देन बोध्यते एवं स्तरशब्दोऽपि अप्राप्तप्रजननशक्तौ बालेऽपि वर्तते अविद्यमानप्रजननशक्तौ वन्ध्येऽपि वर्तते। अत एव वत्सतरशब्दस्यार्थोऽल्पवया वत्स इति। तथाच कालिदासप्रयोगः—

महोक्षतां वत्सतरः स्पृशन्निव
द्विपेन्द्रभावं कलभः श्रयन्निव ।
रघुः क्रमाद् यौवनभिन्नशैशवः
पुपोष गाम्भीर्यमनोहरं वपुः॥ रघु ३।३२

इति। अत एव महर्षिणा पाणिनिना तदनुसारिभिश्च सूत्रे "तनुत्वे" इत्युक्तम्। अत एव च वार्त्तिककृतोक्तम्—वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः [ ५।३।९१।१ ] इति। व्याख्यातञ्च भाष्यकृता—वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः। कृशो वत्सो वत्सतर इति मा भूदिति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्, न च कार्श्यस्य भावाद् द्रव्ये वत्सशब्द इति।

यच्च "अतिशायने तमबिष्ठनौ" [ ५।३।५५ ] इति सूत्रस्य भाष्ये दृश्यते—गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च। गौरियं या समां समां विजायते। गोतरेयं या समां समां विजायते, स्त्रीवत्सा च। अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छतीति, तत्र अश्वतरशब्दस्तरप्प्रत्ययान्तो न पुनः ष्टरच्प्रत्ययान्तः।

सर्वस्मादेतस्मात् प्रतीयते—अश्वतरादिषु शब्देषूत्तरपदं स्तर इति, यस्य स्त्रियां स्तरीति रूपम्। उष्मद्वयस्य निरतिशयसन्निकर्षादेकस्य लोपः सञ्जातः। स्तरः अश्वः अश्वस्तरः। पोटा-युवति-स्तोक-कतिपय-गृष्टि-धेनु-वशा-वेहद्-बष्कयणी-प्रवक्तृ-श्रोत्रियाध्यापकधूर्तैर्जातिः [२।१।६५ ] इति सूत्रे स्तरस्य वा तरस्य वान्तर्भाव आवश्यकः। अत एव

'स्तरेण च वक्तव्यम्' इति वार्त्तिकं विरचनीयम्। "प्रथमानिर्दिष्टं समास उपसर्जनम्" [ १।२।४३ ] इत्युपसर्जनत्वात् "उपसर्जनं पूर्वम्" इति सूत्रेणोपसर्जनस्य स्तरशब्दस्य पूर्वनिपातः। "समासस्य" [६।२।२२५] इति समस्तपदस्यान्तोदात्तत्वम्।

स्तरशब्दस्य चार्थो वन्ध्यः निष्फलः, प्रजननसामर्थ्यशून्यः इति। अस्यैव ज्ञाति ग्रीसीय stei:ra, तस्य चार्थः—यया गर्भो न गृहीत इति। ओडीसीकाव्ये stei:ran bou:n (x. 522) [="स्तरीं गाम्"] उपलभ्यते। यस्याः स्त्रिया गर्भग्रहणवयोऽतिक्रान्तं सापि stei,ra उच्यते, कुमार्यपि steira उच्यते। ग्रीक्भाषायां steriphos-(संस्कृत*स्तरिभ) शब्दस्यार्थो वन्ध्यो निष्फल इति। लाटिन-sterilis गथिक-stairo चास्यैव स्तरीशब्दस्य सनाभी। आङ्लभाषायां sterile-शब्देऽपि स्तरस्य स्वजनः सन्दृश्यते।

अश्वतरस्य च प्रजननशक्तिविकलत्वं वेदे सुप्रसिद्धम्। तथाच तैत्तिरीयसंहितायां [७।१।१।१-२] श्रूयते—

अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत, ता अग्निष्टोमेनैव पर्यगृह्णात्। तासां परिगृहीतानामश्वतरोऽत्यप्रवत। तस्यानुहाय रेत आदत्त, तद् गर्दभे न्यमार्ट्। तस्माद् गर्दभो द्विरेताः। अथो आहुः—वडवायां न्यमार्डिति। तस्माद् वडवा द्विरेताः।..तस्मादश्वतरो न प्रजायते। आत्तरेता हि। इति।

ऐतरेयब्राह्मणेऽपि [ १७।३ ] श्रूयते—

अश्वतरी-रथेनाग्निराजिमधावत्, तासां प्राजमानो योनिमकूलयत्, तस्मात् ता न विजायन्त इति।

अश्वगर्दभसाङ्कर्येण जाताः स्त्रीव्यक्तयोऽश्वतर्यः। तद्युक्तेन रथेनायमग्निराजिमुद्दिश्य धावनं कृतवान्। तदानीं प्राजमानः प्रकर्षेणाश्वतरीः प्रेरयन्। "अज पशुप्रेरणे" इति धातुजन्योऽयं शब्दः। तत्प्रेरणकाले तासां पूर्वपुच्छभागमपस्पृश्य योनिमकूलयत् दग्धवान्। तस्माद् दग्ध-

योनित्वात् ता अश्वतर्यो न विजायन्ते विजननम् अपत्योत्पादनं न कुर्वन्ति ।* सायणभाष्यम् ।

अश्वतरी गर्भं गृह्णाति, स तु तस्या नाशायैव भवतीति लोकप्रसिद्धिः । अत एव पञ्चतन्त्रे दृश्यते—

सकृद्दुष्टं सखायं यः पुनः सन्धातुमिच्छति ।
स मृत्युमेव गृह्णाति गर्भमश्वतरी यथा ।। इति ।

योगवासिष्ठे [ वैराग्य १४।८ ] चोक्तम्—

अविश्रान्तमनाः शून्यमायुराततमीहते ।
दुःखायैव विमूढोऽन्तर्गर्भमश्वतरी यथा ।।

इति । व्याख्यातञ्चेदं टीकाकृता—अश्वाद् गर्दभ्यामुत्पन्ना अश्वतरी । तस्या उदरविदारणेनैव गर्भनिर्गमनं प्रसिद्धमिति ।

---

## समासान्तः ।

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

केनापि वैयाकरणम्मन्येन कवयित्रा हरनयनमित्थमुपवर्णितम्—

धूमध्यामककुम्भि भूधरतटत्रुट्यद्द्विषन्ति स्फुटा-
टोपोल्लुण्ठितसागराम्पि विफलव्यालोकभास्वन्ति च ।
दृप्यत्तूर्णमरुन्ति कातरतरभ्रश्यज्जगन्ति प्रभो-
रुद्यन्ति त्रिपुरान्तकृन्ति नयनादर्चींषि पुष्यन्तु वः ।।

सदुक्तिकर्णामृतम् १।१४।१

अत्र केषाञ्चन व्यञ्जनान्तशब्दानां नपुंसकलिङ्गानां प्रथमाबहुवचनगतानि रूपाणि प्रदर्शितानि । तत्र स्फुटाटोपोल्लुण्ठितसागराम्पिपदं

* *Mule*, a cross between a jack (male) ass and a horse mare. The hybrid is sterile . . ., but very occasional cases of mule mares producing foals have been reported. *Chambers's Encyclopaedia*.

समुद्वेगमेवोपजनयति सहृदयानाम्, "ऋक्पूरब्धूःपथामानक्षे" [ पा० ५।४।७४ ] इति प्रसिद्धतमानुशासनविरोधात्। व्याकरण-ग्रन्थेषु परिदृश्यमानं स्वाम्पिपदं साध्वेव, तत्र "न पूजनात्" [ पा० ५।४।६९ ] इति सूत्रेण समासान्तस्याप्रवृत्तेः। कविनानेन स्वाम्पिपद-सादृश्येन स्फुटाटोपोल्लुण्ठितसागराम्पि-पदं प्रयुक्तम्। तच्च समा-सान्तविधेरनित्यत्वमाश्रित्य कथञ्चित् साधनीयमिति शम्।

---

## Cinema-शब्दस्य निर्वचनम्।

मञ्जुला-सम्पादकस्य भागिनेयी नितरां चलच्चित्रव्यसनिनी। प्रायेण प्रतिदिनमेव तया मातुलस्य सविधमागम्योच्यते, आर्य, अभिनवं चलच्चित्रं समागतम्, नूनं मया भवदनुमत्या द्रष्टव्यमिति। एकदा मातुलेनोक्तम्, वत्से, Cinema-शब्दस्य निर्वचनमेव निवारयति जनांस्तद्दर्शनात्। तथाहि आङ्लभाषायां सी ( see ) शब्दस्यार्थः—पश्य। फरासीसभाषायां ने (ne)-शब्दस्यार्थः—न, संस्कृतभाषायां माशब्दो वारणार्थकः। अत एव शब्दत्रयस्यास्य सम्मेलनेन समुत्पन्नस्य Cinema-शब्दस्यार्थः—मा मा द्राक्षीरिति। तच्छ्रुत्वा सम्पादक-दुहित्रोक्तम्, तात, एतत्तु विपरीतमेवोक्तम्। परमार्थतस्तु सी-शब्दस्यार्थः—पश्य, नेशब्दो वङ्गभाषामयोऽनुनयार्थकः, माशब्दोऽपि मातृवाचकः ; अत एव Cinema-शब्दः श्रोतॄश्चलच्चित्रदर्शने प्ररोचयति, तस्य चार्थः—पश्य मातः पश्य, पश्य वत्से पश्य (वङ्गभाषायां—देखे ने मा) इति।

---

## स्वैर्दोषैर्भवति शङ्कितो मनुष्यः।

काचन महिला नातिशिक्षितासीद्धूमशकटचालने। तथापि स्त्रीजन-सुलभेनाशिक्षितपटुत्वेन गर्वमावहन्ती सहचरीसमेतैकदा धूमशकटं प्राचालयत्। ततश्च सङ्कीर्णेन मार्गेण गच्छन्ती शाखाच्छेदनार्थं वृक्षमारोहन्तौ पुरुषौ दृष्ट्वा सहचरीमवदत्, अये, अपि मे शकटचालनं तथा भीषणं येनेमौ प्राणभयाद् वृक्षाग्रमाश्रयत इति।

# Study of Sanskrit Literature

"The study of Indian classics is the foundation for the study of one of the major civilisations of the world", said Dr. John Brough, M. A., D. Litt., Professor of Sanskrit in the University of London, in his Sir George Birdwood Memorial Lecture to the Commonwealth Section of the Royal Society of Arts in London recently.

If it was accepted that a study of classical literature and civilisation was a worth-while pursuit, said Professor Brough, then his task was simply to show that the Sanskrit classics of India need not fear comparison with the established masterpieces of Greece and Rome. It was now more than 150 years since the west discovered the existence of of India's classical language and literature but in Europe hardly anything of this literature had become known outside the very narrow circle of specialists. In giving reasons for this neglect, Professor Brough referred to the minute of Lord Macaulay advising the then Government of India that the whole range of Sanskrit literature consisted of puerilities and fairy tales and said that it was unnecessary to comment that Macaulay's opinion was not founded upon an adequate knowledge of Sanskrit. There was the further misfortune that Sanskrit had been very badly served by translations into English.

The study of Classical India in the widest sense would include history, archaeology, art, the history of science and religion; and in all these fields there remained a great deal of new research work waiting to be done. But he intended to confine himself to a few aspects of Indian thought and literature.

*Linguistic Study.*

One of the most notable intellectual achievements of India was the early development of linguistic study. In the phonetic and morphological analysis of their language the

Indians had achieved by the 4th century B. C. results far in advance of anything known in Europe until modern times. It is well known that the Sanskrit Grammar of Pāṇini was to a large extent the stimulus which brought into being modern comparative linguistic studies at the beginning of the 19th century. In addition to purely formal analysis of language, the problems of general linguistics and the theory of meaning were discussed with a penetration and insight which still command our admiration. The majority of important problems in these fields were already familiar in the early centuries of the Christian era, and were summed up in masterly fashion in the 7th century A. D. by Bhartṛhari in his "Vākyapadīya."

Closely related to the theory of meaning is the theory of knowledge and of inference ; and here also the Indians made considerable progress in the early centuries of the Christian era. The well-known criticism of J. S. Mill of the Aristotelian syllogism—namely, that the consequence cannot be deducted from the major premise, since the major premise itself cannot be known to be true unless the consequence is already known to be true—would not be applicable to the Indian syllogism. This was normally propounded in five propositions, the major premise being explicitly derived by induction from experience. The development of logic is in fact a good example of the independence of Indian thought. Such an eminent authority as Barnett went so far as to say that of all the peoples in the world, only the Greeks and the Indians seem to have produced philosophies, and that in the case of the Indians there were grounds for believing that their philosophy was ultimately due to Greek influence. It seemed to him very doubtful whether such an influence could be legitimately claimed.

*Theory of Meaning.*

The theory of meaning in connection with linguistic studies was later developed and expanded by writers on aesthetics to

include poetic meaning. The outstanding work here was the "Dhvanyāloka" of Ānandavardhana, in the 9th century A. D. The study of poetics in India is of course very much older than this. But most of the earlier works on the subject are formal studies of rhetoric, minutely analysing and classifying the figures of sound and sense. Alongside this formal treatment there developed the theory of "rasa," or poetic emotion, which was in the first place propounded in connection with the aesthetic appreciation of the drama. Ānandavardhana saw the essence of poetic meaning in the suggested or implied sense rather than in the literal meaning of the words of the poem. The most important kind of poetic meaning, he maintained, was the suggestion of the poetic emotion, "rasa," which is clearly something quite different from the actual experience of the corresponding emotion in everyday life.[1] This doctrine of suggestion was severely criticised in succeeding centuries. Kuntaka, for example, denied the existence of the implied sense and, reviving an older theory, maintained that the essence of poetry was the striking and effective use of unusual, non-everyday language ("vakrokti").[2] In the end the theory of suggestion prevailed, and together with the classification of poetic emotions formed the keystone of almost all the important

---

[1] प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥
काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥ ध्वनिकारिका १।४-५
रसभावतदाभासतत्प्रशान्त्यादिरक्रमः ।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः ॥ ध्व० २।३

[2] शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि ।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि ॥
उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः ।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते ॥ वक्रोक्तिजीवितम् १।७,१०

works on poetics after the 12th century. A fair proportion of the vast literature on poetic theory in Sanskrit is somewhat arid rhetoric. But even when this is discounted, there remains much interesting literary criticism and aesthetic theory at least as well worth reading as Aristotle's "Poetics" or Horace's "Ars Poetica," and in many ways much more sensitive in its approach to poetry than either of these works.

Professor Brough then gave indications of the scope and general characteristics of the literature of Sanskrit which is worth reading for its own sake. He chose for quotation a hymn to Varuṇa from the "Rigveda" which he described as strongly reminiscent of the penetential Hebrew pslams :

उत स्वया तन्वा सं वदे तत् कदा न्वन्तर्वरुणे भुवानि ।
किं मे हव्यमहृणानो जुषेत कदा मृळीकं सुमना अभि ख्यम् ॥
किमाग आस वरुण ज्येष्ठं यत् स्तोतारं जिघांससि सखायम् ।
प्र तन्मे वोचो दूळभ स्वधावोऽव त्वानेना नमसा तुर इयाम् ॥

"And I said in my heart : when shall I appear before the presence of God ? How shall he leave his anger and delight in my sacrifice ? When shall I in gladness behold the merciful God ? What was the sin, O Varuṇa, that I have greatly sinned that thou so afflictest thy servant who sings thy praises ? For thou art blessed and art not deceived. O tell me, that I may in innocence swiftly come before thee in adoration." (RV. vii. 86.2,4)

*Great Epics.*

Passing on to the great epics, the "Mahābhārata" and the "Rāmāyaṇa", he pointed out that while the former was the work of generations of poets the latter was in the main the work of a single poet. In later times Vālmīki, the author of the "Rāmāyaṇa," was accorded the title of "First of Poets," a judgment which was largely justified, for the "Rāmāyaṇa" contained a definite attempt at conscious

poetic embellishment; and in the use of similes and other figures of poetry most of the chief characteristics of later classical poetry are fore-shadowed.

Professor Brough quoted a single example of a striking simile taken from a brilliant description of winter :

रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः ।
निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

"The moon's beauty is usurped by the sun, and she shines but feebly, shrouded in mist, like a mirror blind with breath."

Between the epics and the form already fully matured in the works of As'vaghoṣa in the 2nd century A. D., Professor Brough felt, there was a gap in the tradition and much had undoubtedly been lost. There was, however, some evidence of the type of development which Indian poetry was undergoing between the end of the Vedic age and the earliest classical poems.

In the classical Sanskrit poetry, he said, India shows a marked contrast to Greece. In the latter case most of the great literature was already written before the spread of Hellenistic civilisation. In India on the other hand the greatest flowering of Sanskrit poetry comes at a time when the language was no longer living and developing as a popular speech. This is a surprising state of affairs and it is almost as if mediaeval Latin or Byzantine Greek had produced poets to outshine Virgil and Homer. None the less, Sanskrit had remained so vigorously alive as the language of all educated men that the situation is perhaps not so paradoxical as at first sight it may appear.

In some of its less admirable characteristics, classical Sanskrit does indeed show tendencies similar to those of Alexandrian Greek literature. Thus both indulged in trivialities, such as the composition of stanzas which could be written in the shape of an axe or an altar. And in one

direction Sanskrit was able to go far beyond the artificiality of Alexandria, namely, in paronomasia ( श्लेष ). The Sanskrit language has a most alarming capacity for punning ; and in later times the art of equivoke was developed to such a degree that we find poets who compose whole epics with a double meaning in every stanza, so that a single work may be read in one way as the story of the Mahābhārata, and in another way as that of the Rāmāyaṇa. Even triple punning on this epic scale is not unknown.

*Intellectual Exercise.*

To be fair to the authors of these works, it must be admitted that the unravelling of their meanings involves an intellectual exercise at least comparable to chess, and rather superior to the modern crossword puzzle. And, of course, there are occasions when a double meaning can be used with pleasing effect. Thus, for example, in Bhavabhūti's drama "Mālatī-mādhava" the heroine's maid-servant brings a message to the hero who is engaged in weaving a garland of flowers ; and with the modesty which the situation demands she speaks to him apparently only about the flowers :

[अथ तस्याः करेणुकारोहणसमय एव ततः सखीकदम्बकादन्यतमा वार्योषिद्विलम्ब्य कुसुमावचयक्रमेण नेदीयसी भूत्वा प्रणम्य कुसुमापीडव्याजेन मामेवमुक्तवती ] महाभाग, सुश्लिष्टगुणतया रमणीय एष सन्निवेशः । कुतूहलिनी च नो भर्तृदारिकास्मिन् वर्तते । अस्यामभिनवो विचित्रः कुसुमेषुव्यापारः । तद् भवतु 'कृतार्थता वैदग्ध्यस्य । फलतु निर्माणरमणीयता । समासादयतु सरस एष भर्तृदारिकायाः कण्ठावलम्बनमहार्घताम्" इति ।

"Sir, the even spacing of the flowers on the thread makes your plaiting most attractive, and my mistress is curious about it. Such skilful floral work is quite new to her. She would like very much to have this fresh garland to wear round her neck."*

* महान् भागो भागधेयं यस्य ।...आकृतिविशेषेणैवोपलक्ष्यमाणमहाभाग्यातिशयेत्यर्थः । एष सन्निवेशः कुसुमसन्निवेशनप्रकारः स्रग्विरचनावैदग्ध्यं सुश्लिष्ट-

But by the punning force of some of the words, her speech can also be taken to mean :

"Sir, the excellent qualities of both of you, being mutually compatible, would make the union of such noble persons desirable, and my mistress is eager for it. The working of the god of love is new and strange to her. May you fall in love with her, and come to clasp her in an embrace.*"

---

गुणतया सुसंघटितग्रन्थिमत् सूत्रत्वेन रमणीयो मनोहरः। कुतूहलिनी चास्मिन् विदग्धातिशये कुसुमदामविरचनाविशेषे चास्माकं भर्तृदारिका। तस्यामधिकरणभूतायामभिनवोऽन्यत्रादृष्टपूर्वो विचित्रश्चमत्कारकारी कुसुमेषु विषये व्यापारः माल्यग्रथनरूपोऽस्ति। स्वयमस्यां कुसुमरचनायामतिशयेनासाधारणीं प्रसिद्धिमुपागता स्ववैदग्ध्यसदृशं भवतो माल्यग्रथनकौशलमुपलभ्येदानीं कौतुकाक्रान्तमानसा वर्तत इत्यर्थः। तत् तस्मात्त्वदीयस्य वैदग्ध्यस्य कुसुमदामरचनाप्रावीण्यस्य कृतार्थता विदग्धया तयोपलालनाच्चरितार्थता भवतु। यथाह—"आ परितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्" इति। अस्या अपि स्रजो निर्माणस्य रमणीयता अभिज्ञजनमनोरञ्जनेनैव फलेन फलतु। अपचितकुसुमानां स्वस्वफलाजनकत्वेऽप्येतदेव फलमस्त्वित्यर्थः। तदेष ते सरसोऽम्लानः, तथा सारस्येन चातुर्येणान्वितः, तथा त्वयानुरागेण समर्पितः, कुसुमव्यापारो भर्तृदारिकायाः कण्ठावलम्बनेन ग्रीवालङ्कारतया धारणेन महार्घतां महामूल्यतामासादयतु प्राप्नोतु। यथा किञ्चिदुत्तमं रत्नमुत्तमकनकभूषणस्थापितं महामूल्यं भवति, तथेदमपि बकुलदाम रत्नभूतं भर्तृदारिकाकण्ठाभरणत्वेन महामूल्यं भवत्विति प्रकृतोऽर्थः।

* अन्यस्तु—एषोऽस्मादृशस्य सखीजनस्य तटस्थसहृदयलोकस्य चाशास्यत्वेन बुद्धौ विपरिवर्तमानः सन्निवेशो भवतोः सम्बन्धोऽभिलाषमात्रम्। तस्यां विषयेऽभिनवः केनापि विरहिणाननुभूतपूर्वः, अत एव विचित्रो विस्मयकारी कुसुमेषोर्व्यापारः। त्वामुद्दिश्य स्मरेण बलवदभिभूयत इत्यर्थः। तत्तस्मादन्योन्यसमागमेनोभयोर्वैदग्ध्यस्य सकलकलापरिज्ञानस्य कृतार्थता भवतु। त्वदीयवैदग्ध्यसारं सैव लोके वेदितुमर्हा, तस्याश्च त्वमेवेत्यन्योन्यसदृशाभिज्ञविषयलाभादुभयोर्वैदग्ध्यं चरितार्थमस्त्वित्यर्थः, ।..निर्माणस्य भवदुभयसृष्टिलक्षणस्य विधातृव्यापारस्य रमणीयता सर्वलोकातिशायिसौन्दर्यसम्पादकत्वेन मनोहरता

Tricks of this sort, however, are merely embellishments of poetry, and in a great poet like Kālidāsa they appear hardly at all. They are indicative nevertheless of a general characteristic of classical Sanskrit poetry, namely, that it is a highly intellectual literature.

Referring to this characteristic, Professor A. B. Keith, former teacher of Professor Brough, wrote in the Preface to his "History of Sanskrit Literature": "The neglect of Sanskrit Kāvya is doubtless natural. The great poets of India wrote for audiences of experts: they were masters of the learning of their day, long trained in the use of language, and they aim to please by subtlety, not simplicity of effect. They had at their disposal a singularly beautiful speech, and they commanded elaborate and most effective metres. Under these circumstances it was inevitable that their works should be difficult."

*Kāvya Literature.*

The range of this literature is very considerable. At the summit stand the great epics, "mahākāvya", most of which take their themes from the old epics or the legends of the Purāṇas. Here we have the famous names of As'vaghoṣa, Kālidāsa, Bhāravi, Bhaṭṭi, Māgha, and a whole host of lesser writers. Here we have no reason to dissent from the judgment of Ānandavardhana given in the 9th century:

"अस्मिन्नतिविचित्रकविपरम्परावाहिनि संसारे कालिदासप्रभृतयो द्वित्राः पञ्चषा वा महाकवय इति गण्यन्ते।

"Out of the constant succession of competent poets which the passing years bring before us, only a mere handful—Kālidāsa and a few others—rank as great poets." In the

---

भवदुभयसमागमेनैव फलेन फलतु, अन्यथेदृक् सृष्टिश्रमगुणोज्ज्वलस्त्रीपुंसनिर्माणप्रयासो विधेर्व्यर्थ एव भवेदिति भावः। तदेष त्रिभुवनरत्नभूतः सरसः सानुरागः रसिकाग्रणीश्च भवांस्तस्याः कण्ठावलम्बनेन कण्ठालिङ्गनेन महार्घतां प्राप्नोतु। त्रिपुरारिः।

shorter kāvya, poem ("khaṇḍa-kāvya"), Kālidāsa is equally pre-eminent ; and his masterpiece in this field, the "Cloud Messenger" ("Meghadūta"), inspired such a multitude of imitations that "messenger poems", both in Sanskrit and the later Indo-Aryan languages, form by themselves a distinct literary type.

In the drama, India has nothing directly comparable to the great tragedies of Greece, and tragedy as such is definitely excluded by the dramatic theory. There are nevertheless in some of the great dramas moments of pathos handled with great tenderness and imagination ; and although Aristotle's pity and terror tend not to come together in Sanskrit, both are recognised among the emotions ("rasa") proper to drama. A wide range is covered by the extant plays, from the romantic legends of Kālidāsa's "S'ākuntala" and "Vikramorvas'īya" to the political intrigue of Vis'ākhadatta's "Mudrārākṣasa", from short one-act comedies such as "The Saint and the Lady" ("Bhagavadajjukīya") to the ten-act "Balarāmāyaṇa" of Rājas'ekhara. Sanskrit drama is not likely to attract the western reader for its dramatic qualities. It is in general weak in characterisation and with few exceptions uninventive in plot. On the other hand, in its best examples it contains much excellent poetry, and is worth reading for this alone. We are of course not in a position to judge the full artistic impact of an ancient Sanskrit play which in its presentation on the stage made full use of the arts of music and dancing.

Professor Brough then goes on to quote examples which convey something of the quality of the poetry which when translated preserves at least some fragment of the force of the original. One stanza of Bhaṭṭi he chose was rendered :

"He saw at dawn the waters before him inlaid with the sun's rays ; it was as if the beams, melted by the sun's own heat, had been gathered together in one place on the earth."

[तिग्मांशुरश्मिच्छुरितान्यदूरात् प्राञ्चि प्रभाते सलिलान्यपश्यत् ।
गभस्तिधाराभिरिव द्रुतानि तेजांसि भानोर्भुवि सम्भृतानि ॥२।१२]

The stanza, he said, was a variant of an idea which had earlier been used more effectively by Ārya S'ūra, who described the tropical sea in the calm before a storm as : "The sapphire-blue sea, as if the sky had melted in the heat of the sun". This had provoked an anonymous critic to exclaim : 'S'ūra is a poet, S'ūra is indeed a great poet. He described the sea as melted sky !"

Another canto he quoted of Bhaṭṭi's showed that the poet was not without a sense of humour. Here the demon Rāvaṇa sends his servants to seek the aid of Kumbhakarṇa in the fight against Rāma, and these envoys act in true demonic fashion.

राक्षसेन्द्रस्ततोऽभैषीदैक्षिष्ट परितः पुरम् ।
प्रातिष्ठिपच्च बोधार्थं कुम्भकर्णस्य राक्षसान् ॥
तेऽभ्यगुर्भवनं तस्य सुप्तं चैक्षिषतांथ तम् ।
व्याहार्षुस्तुमुलाञ्छब्दान् दण्डैश्चावधिषुर्भृशम् ॥
केशानलुञ्चिषुस्तस्य गजान् गात्रेष्वचिक्रमन् ।
शीतैरभ्यषिचंस्तोयैरलातैश्चाप्यदम्भिषुः ॥
नखैरकर्तिषुस्तीक्ष्णैरदाङ्क्षुर्दशनैस्तथा ।
शितैरतौत्सुः शूलैश्च भेरीश्चानीनदन् दृढाः ॥
स तान्नाजीगणत् सर्वानिच्छयाबुद्ध च स्वयम् ।
अबूबुधत मां कस्मादप्राक्षीच्च निशाचरान् ॥१५।१-५

"Then the king of the demons was afraid, and looked all around the city ; and despatched demons to inform Kumbhakarṇa. And they came to his dwelling, and found him asleep. And straightway they uttered confused cries, and beat him with sticks. They pulled out his hair, and drove elephants over his limbs ; they poured cold water over him, and burnt him with red-hot coals. They scratched him with their sharp nails, bit him with their teeth, prodded him with sharpened stakes, and beat drums in his ears. But he

regarded them not at all, and at length awoke of his own accord."

In conclusion Professor Brough said that many Europeans found that Indian literature was too far removed from their own standards to afford them much pleasure. But the importance of the study of Sanskrit went far beyond the aesthetic value of literature. It was in fact the key to almost all branches of the study of Indian civilisation and the contributions of this civilisation to the development of human thought and culture generally were very considerable. The study of the Indian classics was the foundation for the study of one of the major civilisations of the world. From the purely practical point of view, he believed that a University degree in Sanskrit could offer the student an intellectual, literary and philosophical training in every way comparable in value to a Classical Tripos or an Honours School of Literae Humaniores. More generally, the study of the great Asiatic civilisations demanded far more attention than it had hitherto received in the West, if they were to rid themselves of the provincialism which tacitly assumed that the history of Western Europe was the history of mankind. *

---

# वैयाकरणानां सरणिः

संज्ञा च नाम यतो न लघीय इति प्रामाणिकवचनं शिरसि कुर्वद्भिर्देवनन्दिवोपदेवप्रभृतिभिर्वैयाकरणप्रवरैः प्रायेण शब्दानां प्रथममेवाक्षरं संज्ञात्वेन व्यवह्रियते। वर्षेभ्यः कतिपयेभ्यः पूर्वमीदृशं संक्षिप्तीकरणमुद्दिश्य प्रथिततमायाम् Punchपत्रिकायाम् A. P. Herbert महोदयेन लिखितम्—

* *Re-printed with additions from the "Hindu" (Madras).*

So many troubles has John Bull,
Such numerous officials,
He cannot name them all in full
But has to use initials ;
Old poets sang of English soil
And how we kept it free,
But our tongues refuse the toil,
We call it A. R. P.

*But praises be*
*To H. M. G.*
*Applaud the P. C. too !*
*And shout "Hooray !*
*H. M. the K. !*
*Likewise H. M. the Q. !"*

The President of the B. O. T.
Has sent a commissar
To do a deal for H. M. G.
With dear U. S. S. R.
In "Buckhouse" now resides the Court,
And Scapa's going strong ;
But if our time is quite so short,
Why not have names less long ?

*Oh, H- M. Gov.*
*We dearly love :*
*And H. M. Cab. as well.*
*Sing, three times three,*
*The H. of C.*
*Likewise the H. of L. !*

Our wordy ancestors no doubt
Had much more time to waste ;
So they could spell things slowly out ;
We moderns have to haste.

But though I see the point of view,
The piece of news I crave
Is "What exactly do we do
With all the time we save ?"

*Yet praises be*
*To H. M. G.*
*Applaud the P. C. too !*
*And shout "Hooray !*
*H. M. the K. !*
*Likewise H. M. the Q. !"*

---

# पाठविमर्शः

[ श्रीक्षितीशचन्द्र-चट्टोपाध्यायः ]

रघुवंशस्य द्वितीयसर्गस्थं

तदीयमाक्रन्दितमार्तसाधोर्गुहानिबद्धप्रतिशब्ददीर्घम् ।
रश्मिष्विवादाय नगेन्द्रसक्तां निवर्तयामास नृपस्य दृष्टिम् ॥

इति श्लोकं व्याचक्षाणेन सुमतिविजयेनोद्धृता कारिका—

व्याददाने चतुर्थी स्याद् दर्शने कथनेऽपि च ।
आदाय करणे योगे सप्तमी कैश्चिदिष्यते ॥

इति । अत प्रथमार्धे सम्प्रदानचतुर्थ्याः कतिचित् स्थलानि प्रदर्श्यन्ते । अत एव "व्याददाने" इत्यत्र व्यकारानुरोधेनानुप्रासानुरोधेन च "द्रव्यादाने" इति पठनीयमिति प्रतिभाति । अत्र "क्रियया यमभिप्रैति स सम्प्रदानम्" इति सूत्रेण सम्प्रदानसंज्ञा । ततश्च दर्शने—

तत्तद्भूमिपतिः पत्न्यै दर्शयन् प्रियदर्शनः ।
अपि लङ्घितमध्वानं बुबुध न बुधोपमः ॥

[ रघु० १।४७ ] इत्यादिषु । कथने च—

यूपवत्यवसिते क्रियाविधौ कालवित् कुशिकवंशवर्धनः ।
राममिष्वसनदर्शनोत्सुकं मैथिलाय कथयाम्बभूव सः ॥

[ रघु० ११।३७ ] इत्यादिषु च "क्रियाग्रहणमपि कर्तव्यम्" इत्यादि-वार्त्तिकेन च सम्प्रदानम्। "रश्मिष्विवादाय" [रघु० २।२८] इत्यादि-स्थले दाधातोर्योगेऽपि चतुर्थी न भवति, करणे तृतीया भवति, केषाञ्चिन्मते सप्तमी भवतीति द्वितीयार्धेनोक्तम्—"आदाय-करणे योगे सप्तमी कश्चिदिष्यते" इति ।

---

# कालिदास-भवभूती ।

[ स्वर्गत-द्विजेन्द्रलाल-रायः ]

नायकेन सर्वगुणान्वितेन भाव्यम् इति यो विधिर्वर्तते तस्येदमेव तात्पर्यं यत् नाटकस्य वस्तुनोदात्तेन भवितव्यमिति । अत एव प्रायेण नाटकानां नायका राजानो वा राजपुत्रा वा। पृथिव्यां श्रेष्ठकला-विद्भिः कार्यद्वारा सम्भावितोऽयं विधिः । शेक्षपीयरस्य सर्वश्रेष्ठानां नाटकानां नायकाः सम्राजो वा राजानो वा राजतनया वा । (म्याक्-बेथ आयत्यां राजैवाभवत्, ओथेलोऽपि सेनापतिरेव । इटालीदेशस्य श्रेष्ठतमैश्चित्रकरैर्यीशुखृष्टस्यैव जीवनवृत्तान्तः स्वचित्रेषूपवर्णितः । होमारस्येलियड् काव्यमपि राज्ञां युद्धमधिकृत्य विरचितम् ।

इदानीन्तने नाट्यसाहित्ये नैवानुस्त्रियतेऽयं नियमः । महाकविना इब्सेनेन विरचितानां नाटकानां नायकाः सर्वे एव मध्यवित्तगृहस्थाः । गृहस्थानां वृत्तान्त एव सामाजिकनाटकस्य वस्तु । हिस्पानीया ओलन्दाजीया आङ्लाश्च चित्रकरा अकिञ्चित्करान् मनुजान् वस्तूनि चाङ्कयित्वा त्रिजगद्वन्दनीयाः सञ्जाताः । परं शेक्षपीयरस्य श्रेष्ठतमानां

नाटकानां तुलामधिगन्तुं नैव प्रायेण प्रभवेयुरिब्सेनीयानि नाटकानि। एवमेव Raphael, Titian, Michael Angelo एतेषां नामभिः समस्वरेण Rubens इत्यस्य Turner इत्यस्य वा नामोच्चारयितुं को वोत्सहेत प्रेक्षावान्।

सामान्यतः संस्कृतालङ्कारशास्त्रीयो विधिरयमतिमात्रं समीचीनः। विषयस्योदात्तताभावे नाटकगतानां कार्याणां गरिमा नानुभूयते। केनापि महाचित्रकरेणेष्टकास्तूपमात्रं नाङ्कितम्। कदाचित् तेनेष्टकास्तूपो नितरां स्वाभाविकतया निर्दोषतया चाङ्कयितुं प्राभविष्यत, परं चित्रमिदं कदाचिदपि Raphael–विरचितस्य Madonna चित्रस्य समशीर्षिकामारोढुं नैवालमभविष्यत्। केनापि श्रेष्ठेन नाटककारेण कोऽपि लेखकः (clerk) नाटकस्य नायकपदे नैवाभिषिक्तः। ईदृशस्य चित्रस्याङ्कने कदाचित् कवेः शक्तिः स्फुटतामियात्, तत्र च सुसूक्ष्मा वर्णना दार्शनिकं च विश्लेषणं यथेष्टमवतिष्ठेत, परमीदृग्विधं नाटकं Shakespeare विरचितस्य Julius Caesar नाटकस्यार्धासनमारोढुं नैव प्रभवेत्। ईदृशेन चित्रेण नायकेन वा दर्शकस्य श्रोतुर्वा हृदयं स्तम्भं वा स्पन्दनं वा नापद्यते, केवलं कलाविदः प्रकृतिविज्ञानेन सहर्षो विस्मयो मनसि पदं करोतीत्येव। यत्र कलाविदो नैपुण्यमेवोदयमभिविन्दति मानसे, स ह्यतीव तुच्छो व्यापारः। महीयसि व्यापारे दर्शको वा श्रोता वा कवेः सत्तामेव विस्मरिष्यति, तस्य रचनयाभिभूत एव स्थास्यति। Irving-महोदयस्याभिनयसमये यदि मनसि समुदियात्, अहो रमणीयताभिनयस्यारभिङ्महोदयस्य तर्हि सोऽभिनय उत्तमतया परिगणयितुं न युज्यते, यदा तावच्छ्रोता द्रष्टा वा ह्यामलेटरसेन Irving-महोदयस्यास्तित्वमपि विस्मरति तदैव तस्याभिनयः साधुरिति वक्तुं साम्प्रतम्। ग्रन्थकारविषयेऽप्ययं नियमः। यत् तावन्नाटकं वाचयन् पाठको मन्यते अहो कौशलं ग्रन्थकारस्य, अहो शक्तिः, अहो सूक्ष्मेक्षिका, अहो सौन्दर्यज्ञानं न खलु तन्नाटकं समुन्नतश्रेण्यां सन्निवेशनमर्हति। यन्नाम नाटकं पाठकं तन्मयमेव विदधाति, वाचकस्य

सर्वाश्चिन्ताः, सर्वा अनुभूतीः, सर्वा मनोवृत्तीः संग्रसते, तदेव नाटकं श्रेष्ठकोटौ निवेशयितुं युक्तम्।

राज्ञः प्रेम, राज्ञो युद्धम्, राज्ञ उन्मत्तता—एतेषु कापि मोहिनी शक्तिर्वर्तते, राजेति शब्द एवाधारो भावविशेषस्य। स च भावोऽयमेव—अत्रभवान् निखिलानां पौराणां प्रतिनिधिः, सर्वे एव तस्यानुवर्तिनः, स खलु सर्वेषां पौराणां महिमा च बन्धनञ्च केन्द्रञ्च। राज्ञि रथ्यायामागते सर्वे एव सन्दर्शनाय रथ्यायां सम्मिलन्ति। तस्मिन् राजसभामलङ्कुर्वति, सर्वे एव निमेषशून्यैर्नयनैस्तमापिबन्ति। राज्ञो व्यापारेषु किमपि निगूढत्वं विलसतीव। यदासावुत्तिष्ठति राजा उत्थित इति वादः, यदासौ शेते राजा शयित इति च वादः प्रसरति। राजा लम्पटोऽपि राजैव। शिशुरपि राज्ञो वृत्तान्तमाकर्णयितुं वाञ्छति। अत एव पितामही कथां कथयति—आसीदेको राजा, स चैकदा मृगयां गच्छन्नपश्यत् काञ्चन परमरमणीयां राजकुमारीमिति। न खलु राजकन्यामन्तरेण भवत्याख्यायिका हृदयहारिणी। परम् अतिमात्रमिदं विस्मयस्थानं यद् वक्ता वा श्रोता वा राजानमधिकृत्य किमपि न विजानातीति। एतस्मादेव कारणाद् व्यापारेऽस्मिन्नेवंविधा मोहिनी शक्तिरिति मे प्रतीतिः। यं खलु विषयमधिकृत्य किमपि न जानामि अथच यमधिकृत्यान्तरान्तरा किञ्चिच्छृणोमि, तस्य समधिकज्ञानाय कुतूहलि सञ्जायते मानसम्। किञ्च, न खल्वयं यः कोऽपि, राजैवायम्। स खलु ऊर्ध्वप्रेरिताभ्यामेव नयनाभ्यां द्रष्टुं शक्यते, इङ्गितेनैव तस्य लक्षः सैन्याः समरक्षेत्रं प्रति धावन्ति, तस्यार्थः प्रतिदिनं लक्षपरिवारान् पोषयितुमलम्, तस्य प्रासादः गहनमिव काननं कक्षावलीनाम्। एभिरेव कारणै र्व्यापारोऽयं सम्मोहक इव प्रतिभाति।

नाटककारा अपि राज्ञो वृत्तान्तं वर्णनीयतया मन्यन्ते। तेऽपि काङ्क्षन्ति प्रशस्तं कार्यक्षत्रं—यत्र कार्यस्य गतिः स्यादप्रतिहता, अन्तरेण समुद्रं कस्य वा तरङ्गान् प्रदर्शयन् सुखमधिगच्छेद्दर्शयिता।

एतस्मादेव कारणात प्रायेण श्रेष्ठानां नाटकानां नायको

नरपतिरेव। एतावता विषयो महान्जातः। तत्रापि स चेद्राजा निखिलगुणगणमण्डितः स्यात् तर्हि महत्तरः सञ्जायेत विषयः।

नाटकस्य विषयेणोदात्तेन भाव्यमिति विधिः समीचीन एवेति मे मतम्। परं राजैव नायको विधेय इति नियमोऽर्थशून्यः। न खलु दुर्लभा महती वृत्ति र्गृहस्थेष्वपि। कदाचित् प्राकृतोऽपि जनः परमार्थत एव वीरो भवेत्। पारमार्थिकं शौर्यं पारमार्थिकं धैर्यं पारमार्थिकं च कर्तव्यपरायणत्वं प्राकृतजनस्यापि कार्यावलिषु प्रदर्शयितुं शक्यते। गृहस्थोऽपि नाटकस्य नायको भवेत्, परं गृहस्थेन तेन महता भवितव्यम्।

नायकः सर्वगुणसम्पन्नो वा दोषलेशरहितो वा स्यात् इति विधिर्नितरां नियन्त्रकमेव कविस्वातन्त्र्यस्य। एतादृशस्य कठोर-विधेर्दोषद्वयं सन्दृश्यते। प्रथमतस्तावत् सर्वाणि नाटकानि समान-संस्थानानि सञ्जायन्ते। द्वितीयतश्च पात्रमतिमानुषं भवति, स्वभावानुगतं नैव जायते। प्रतिमानुषं ह्यल्पो वा बहुलो वा दोषो वर्तत एव। समुपवर्णिते मनुजे दुष्प्रवृत्तीनां सर्वासामसद्भावे स मनुजो जीवञ्छ्वसंश्च न भवति। स केषाञ्चिद् गुणानां पिण्डे परिणमति। एतच्च idealistic नाटकेषु सम्भवति। परं Realistic School-गतान्यपि नाटकानि जगति वर्तन्ते, आवश्यकान्यपि तानि। तत्र चेद्दोषरहिता मनुजा नायकपदे व्रियन्ते अप्राकृतो भवति नायकः।

परमेतदपि निश्चितम्, न खलु लम्पटो वा पाषण्डो वा कस्यापि नाटकस्य वा काव्यस्य वा नायको भवितुमर्हतीति। तथाविधस्य चरित्रस्य चित्रणेन जगतः सुषमा सन्दर्शयितुं न शक्यते। न खलु यदेव प्राकृतं तदेव सुन्दरम्। तथात्वे सुन्दरशब्द एवोच्छिद्येत। कुत्सितं वर्तत इत्येव केषाञ्चन पदार्थानां सुन्दरव्यपदेशेन तेभ्यः पृथक्करणमावश्यकं भवति। न खल्वसुन्दरो नाटके नायको विधातुमुचितः, न खलु कोऽपि महांश्चित्रकरो वा कविर्वा असुन्दरं

जनं पदार्थं वा केन्द्रीयं चित्रं विधायालेख्यमङ्कितवान्। परं सुन्दरं तुलनया सुन्दरतरतया प्रदर्शयितुं कुत्सितं चित्रयितुं युज्यते।

कामं महाकविना शेक्षपीयरेण नैवानुसृतोऽयं विधिः, तस्य सर्वोत्कृष्टस्य नाटकस्य विषयो महान्, परं नायकानां तस्य विशेषतः केऽपि गुणा न वर्तन्ते, पितृभक्तिरेवैको गुणो ह्यामलेटस्य, परं समाप्त एव नाटके तस्याव्यवस्थितचित्ततैव स्फुटीभवति, King Lear उन्मत्त एव। केवलं मौखिकमुच्छ्वासमेवासौ सन्तानस्य पितृभक्तेः परिचायकं मन्यते। किञ्च तदीयं प्रधानं दुःखं दुहितृभ्यां रेगान्गोनिरिल्भ्यां तस्य पार्श्वचरा दूरीकृता इति। तयोश्च पितृभक्तेरभावं दृष्ट्वासौ परिदेवयते—Ingratitude, thou marble-hearted fiend, अकार्तज्ञ्य, रे अश्महृदय दानव इत्यादि। तस्य विलापा उन्मत्तानामिव प्रलापाः प्रतीयन्ते। Othello ईर्ष्यापरवशस्तथान्धीभूतो यथा प्रमाणानपेक्ष एव साध्वीं सहधर्मिणीमवधीत्। Macbeth तावत् कृतघ्न एव। Julius Caesar साटोपाहङ्कृतिदुष्टः। परं नाटकेष्वेषु शेक्षपीयरेण तेषां चरित्रदौर्बल्यानां पापप्रवृत्तीनां वा विभीषणः परिणामः प्रदर्शितः। सर्वत्रैव पापस्य नैष्फल्यमात्मघातो वा प्रदर्शितः। गेटे-विरचिते Faust-नाटकेऽपि तथैव।

परं शेक्षपीयरेण ग्रन्थेष्वेषु तावतामुदात्तानां पात्राणां समावेशो विहितो यथा तैर्नायकानां समन्ताद् भास्वरं ज्योतिर्विकीर्य प्रोज्ज्वलितानि नाटकानि। Hamlet-नाटके Horatio, Polonius, Ophelia, Lear-नाटके Kent, Fool, Edgar, Cordelia, Othello-नाटके विशुद्धचरित्रा Desdemona, तदीया सहचरी च; Macbeth-नाटके Banquo तथा Macduff; Antony and Cleopatra-नाटके Octavius; Julius Caesar-नाटके Brutus, Portia, सर्वऽप्येते नायकान् स्वेन ज्योतिषा समाच्छादितवन्तः।

तथापि कथं वा शेक्षपीयरेणैवं विहितम्? तस्य कारणमिदमेव प्रतिभाति—स धनेन शक्त्या च गर्वित आङ्ल इति। पार्थिवशक्तिरेव

तस्य समधिकलोभनीयतया प्रतीयते। न खलु महच्चरित्रं तं तथा मोहयति स्म यथा विराजं चरित्रम्। विराजा शक्तिः, विराजा बुद्धिः, विराजो विद्वेषः, विराजासूया, विराजा प्रतिहिंसा, विराजो लोभः— तस्य सविध इम एव समधिकं लोभनीया आसन्। मन्ये तन्मतेन निरीहः शिशुः, परदुःखकातरो बुद्धः, भक्तो वा चैतन्योऽतिमात्र-मकिञ्चित्करं पात्रम्। न खलु तेन सर्वथा स्वार्थत्यागस्य माहात्म्यं नावबुद्धं, परं तेन शक्तिमाहात्म्यस्याडम्बरमाहात्म्यस्याधस्तादेव स्थापितं चरित्रमाहात्म्यम्। ( क्रमशः )

---

## नरपति-पारिषद-संवादः

[ श्रीपञ्चाननकाव्यतीर्थ-ज्योतिर्विनोदः ]

गौडेषु गोपालनामा नरपतिरुवास। एकदा उषसि शयनागारं विहाय बहिरायातः स मलहारकमवलोकितवान्। निशावसान-समय एव पापावलोकनेन स भृशं चुकोप, मलहारिणो वधमादिदेश च। निरपराधः स मलहारको राजरोषात् विमूढो जातः। नरपतेः सदसि सुमतिनामैको मतिमान् पारिषद आसीत्। स रहसि मलहारकं बभाषे—वधसमये आदौ मम समीपम् आयाहि मां च किमपि वद। तदहं तव वधरोधं करोमीति। सायं वधभूमौ नीतो मलहारी जनतया करुणमवलोकितः सुमतिसमीपं गतवान्, रहसि च तं किमपि बभाष इव। अथ राजा सुमतिमाहूय उवाच—मलहारी किमवददिति। स उवाद—दिनादौ नृपतेरवलोकनादेव जीवननाशो मे भवति परं ममाव-लोकनेन भूभृतः किमपि न घटते; अतः आवयोः कतरः पापीयान् इति विचारयतु। राजावदत्—किं तवानुकथनमासीत्? सुमति-रुवाच—किमपि न। ततो भूमिपालः मलहारिणो नैतिकभाषणं यथा-यथं भावयन् तं वधादेशं रहितवान्। स च मुदा निजावासं यातः सुमतेः सुचिरं जीवनं विभुं ययाचे। बलात् कौशलं बलीयः।

---

## राष्ट्रभाषीयः

[ आचार्यकृष्णस्वामी ]

—१—

कवरः—(cover)—करवरः> कवरः। करो हस्तो लिपिर्लेख इति यावत्, तस्य वर आच्छादः।

करदः—(card)—करे दीयते। करदे पत्र गोप्यं नास्ति।

कर्जी (debtor)—(Hindi) [पा० ५।२।११५]

करण्यः, कर्मण्यः—(good at work) करणे, कर्मणि साधुः [पा० ४।४।९८]

गमन्यः (good pedestrian)

गायन्यः (good at music)

टेकरः, टीकरो वा (ticket) [टिकृ टीकृ गतौ]

तरण्यः (good at crossing, fit to cross ; one to be passported) तरणे साधुः, तरणमर्हतीति वा।

तारकः (passport)

दानीयः (worthy to be helped, one deserving) [पा० ८।४।२५]

धर्म्यः ( to be achieved by धर्म) धर्म्यं पुरुषार्थत्रयम्।

नाव्यः—(to be ferried by boat) नावा तार्यः।

न्याय्यः (approved by justice) न्याय्यो विधिः [ पा० ४।४। ९१, ९२ ]

पुस्तकडपः, ०डिपो वा (book depot) [डप डिप संघाते चुरादौ] एवं तारडिपः (tram depot)

एनामिकः (Hindi)—इनाममर्हति। [पा० ५।१।६३]

रैक्षः (rickshaw-puller) (Hindi) [पा० ४।३।८०]

लेखक: (clerk) लैपिको वा (one filling forms for others at any office and receiving a small remuneration)

लेखन्य: (one who writes beautifully) लेखने साधु: ।

लिपिकर: (copyist)

वासित: शम्ब: (scented soap), धुन्य: शम्ब: (washing soap)

स्नान्य: शम्ब: }
स्नानीय: फेनलो वा } (bathing soap)

—२—

आपूपिक: (वणिक्)—(cake-seller) [पा० ४।४।५१]

आपूपिको (वर्णी)—(whose food is cake) [पा० ४।४।६१]

आपूपिक:—(ऋत्विक्) (to whose health cake is conducive) [पा० ४।४।६५]

आपूपिक: (छात्र:)—(one who receives cake on appoined terms ) [पा० ४।४।६६]

क्रैडनिक: (dealer in articles of games) [पा० ४।४।५१]

ग्रान्थिक: (book-seller)

ग्रान्थिक: (one to be bound) ग्रन्थिमर्हति ।

चायिक: (tea-seller) (Hindi)

ताम्बूलिक: (seller of pān)

ताम्बूली—तम्बोली (Hindi) [पा० ५।२।११५]

पानिक: (seller of pān) (Hindi)

मैष्टिक: (sweet-meat-seller)

लैखनिक: (pen-dealer)

लैखनिक: (journalist) [पा० ४।४।६१]

वास्त्रिक: (cloth-dealer)

शास्त्रिक: (seller of arms)

—३—

वर्गः (class) अध्यापकः (teacher)
उपाध्यायः (reader) प्राध्यापकः (lecturer)
आचार्यः (professor) महाचार्यः (D. Litt.)
परापरज्ञः (Ph. D) मुनिः (research fellow)
अनुकः (secretary) [पा० ५।२।७४]
रहोऽनुकः (private secretary)
अभिकः, अभीको वा (counsellor) [पा० ५।२।७४]
मण्डलः (cabinet)
माण्डलिकः (member of the cabinet)
पार्श्वकः (underground worker) [पा० ५।२।७५]
पदिकः, पत्कः (pedestrian) [ पा० ४।४।१०]
आचयकः (fund collector) [पा० ५।२।६४]
जित्वरः, जयकः (expert rider)
दीपकः (lamplighter)
अश्मकः (collector of stones)
दूत्यः (the portion of an ambassador) दूतस्य भागः। (work of an ambassador) दूतस्य कर्म। [पा० ४।४।१२०]

---

## समालोचनम्

**ऋग्वेदसंहिता।** पदादिसूच्यात्मकः पञ्चमो भागः। सोनटक्के इत्युपाह्वः श्रीपादसूनुः नारायणशर्मा काशीकरोपाह्वो गणेशसूनुः चिन्तामणिशर्मा इत्येताभ्यां सम्पादितोऽयं ग्रन्थः, पुण्यपत्तनस्थवैदिकसंशोधनमण्डलेन प्रकाशितः। मूल्यं पञ्चाशद्रूप्यकाणि।

विदितमेवैतत् प्रायेण प्रियपाठकमहाभागानां यत् पुण्यश्लोकस्य तिलकमहोदयस्य स्मरणार्थं प्रतिष्ठापिततिलकविश्वविद्यालयतः

सोनटक्केकाशीकरमहोदयाभ्यां महता श्रमेण प्रभूतेन चार्थव्ययेन भारतवर्षस्य तेभ्यस्तेभ्यः प्रदेशेभ्यः सुबहूनि हस्तलिखितानि वेदपुस्तकानि संगृह्य सायणभाष्यभूषिताया ऋग्वेदसंहितायाः भागचतुष्टयं प्रकाशितम्। इदानीमन्तिमं भागं प्रकाश्य ऋग्वेदसंहिता सभाष्या समाप्तिं नीता। अस्मिंश्च पञ्चमे भागे—

पदसूची ( १-६९२ ), उत्तरपदसूची ( ६९३-७८३ ), खिलपदसूची ( ७८४-८६९ ), मन्त्रसूची ( ८६९-१००३ ), खिलमन्त्रसूची ( १००४-१०१४ ), ऋषिसूची (१०१५-१०२४), देवतासूची ( १०२५-१०३९ ), छन्दःसूची (१०४०-१०४८), सर्वानुक्रमः ( १०४९-११२० इत्येताः सूच्यो विलसन्ति। ऋग्वेद एवादिमो ग्रन्थ आर्याणाम्, अत एवात्र कानि वा पदानि वर्तन्ते, किं वा तेषां स्वरूपमिति ज्ञातुं के वा न समुत्कण्ठन्ते। आभिः सूचीभिर्जिज्ञासूनाममीषां परमोपकारः स्यादित्यत्र लेशतोऽपि संशयो नास्ति।

अत्रोपोद्घाते षष्ठपृष्ठ उक्तम्—

Another suggestion made was to publish lists of passages or sūtras quoted from different works in Sāyaṇabhāṣya, such as Pāṇini's grammar, Yāska's Nirukta···This, in our opinion, would involve much labour and additional expense without any material gain. In his commentary on the first Maṇḍala, Sāyaṇa has made a comprehensive attempt at explaining each and every word occurring in the Ṛgveda on the basis of Pāṇini's grammar and has, therefore, quoted the various sūtras often and often. Further he has left that practice considering that the elucidation made in the commentary on the first Maṇḍala covered practically everything. ..Therefore it did not matter much if a particular Sūtra of Pāṇini was found quoted in the commentary on a particular mantra.

सर्वमेतदविचारितरमणीयम्। अस्माभिरेव सोनटक्के-महोदयस्य सविध उक्तम्—ईदृशी सूत्रसूची वार्त्तिकादिसूची च महत उपकारायैव

स्याद् भाष्याध्येतॄणामिति। तथाहि—ऋतश्छन्दसीति सूत्रं प्रायेण विस्मृतमेव भाष्यकृद्भिः। अन्तत एतत् तैः स्मृतं वा, स्मृतञ्चेत् क्व वा स्मृतमिति ज्ञातुं कस्य वा कौतूहलं न भवति? भाष्ये "क्रियाग्रहणमपि कर्तव्यम्" इति वर्तत आहोस्वित् "क्रियाग्रहणं कर्तव्यम्" इति आहोस्विदुभयम् इति ज्ञानमपि सर्वथापेक्षितम्। एवञ्च समग्रं भाष्यमेकेनैव विदुषा विरचितमाहोस्विद् द्वाभ्यामुताहो बहुभिरित्यपि निर्णेतुं शक्येत। किञ्च न केवलं प्रथम एव मण्डले भाष्यकृद्भिः सविस्तरं व्याख्याता व्याकरणप्रक्रिया, उत्तरत्राप्यन्तरान्तरा तथा विहिता, किंवात्र बीजमित्येतदपि निर्णेतव्यम्। आशास्यते खण्डान्तरे सर्वेषामेतेषामालोचनं विधीयेतेति।

यैरादिमं खण्डचतुष्टयं संगृहीतं तेषामवश्यं संग्राह्यं खण्डमिदम्, यैश्च न संगृहीतं तैरप्यवश्यं संग्राह्यमिदम्। चिरं जीवतां श्रीमन्तौ सोनटक्के-काशीकरमहाभागौ प्रकाश्य च सुविशुद्धानि सव्याख्यानानि वेदान्तराणि सेवेतां च सुरसरस्वतीमिति प्रार्थ्यते।

**किराते-अर्जुने।** श्रीभुजङ्गभूषणरायकाव्यसांख्यतीर्थविरचितो वङ्गभाषामयः प्रबन्धः। सत्यव्रत लाइब्रेरी १६७, कर्णओयालिस् ष्ट्रीट्, कलिकाता ६ इत्यत्र लभ्यम्। मूल्यं सपादो रूपकः।

सुमनोहरेऽस्मिन् प्रबन्धे भारवि-विरचितस्य किरातार्जुनीय-समाख्यस्य प्रथिततमस्य महाकाव्यस्य सारः सुललितया वङ्गभाषयोपनिबद्धः। भूमिकायां च भारविगताः किंवदन्त्योऽपि सुनिपुणमुपवर्णिताः। पण्डितोत्तंसस्य श्रीभुजङ्गभूषणरायमहोदयस्य देवभाषायां च मातृभाषायां चातिमात्रं प्रावीण्यं वर्तते, कवित्वमपि प्रतिपदमेव स्फुरति। तेन प्रबन्धोऽयं परमोपादेयः संवृत्तः। येषां छात्राणां किरातार्जुनीयस्य कियांश्चन भागोऽध्येयतया निर्दिष्टो वर्तते; येषां चाध्यापकानां किरातार्जुनीयमध्याप्यतया निर्णीतमस्ति, येषां च विदुषां किरातार्जुनीयकाव्यगतं कौतूहलं वर्तते सर्वैरेवामीभिरवश्यं संग्राह्योऽयं वङ्गभाषामयो ग्रन्थः। मुद्रणसौष्ठवमप्यस्य प्रशंसनीयमेव।

**जैमिनीयमुपदेशसूत्रम्।** Critically edited with his own commentary in Sanskrit, exhaustive introduction in English, translation into English and appendices by Prof. K. V. Abhyankar, M. A., Retd. Professor of Sanskrit, Gujrat College. Published by Gujarat Vidyasabha, Ahmedabad. Demy 8vo., pp.120, 245. Price *Rupees Eight only.*

ज्योतिषशास्त्रीयं जैमिनीयमुपदेशसूत्रमतिमात्रं समीचीनं परममुपादेयञ्च प्रेक्षावताम्। यैस्तावज्ज्यौतिषिकमतान्तरेण गणनादिकं क्रियते तैरप्यायुर्गणनार्थं जैमिनीयमेव मतं शिरसि धार्यते। परं सूत्रात्मकोऽयं प्रबन्ध इति प्रायेण दुर्बोधतया व्याख्यासापेक्षोऽयं संवृत्तः। व्याख्याश्च प्राचीना अस्य नैवोपलभ्यन्ते, अर्वाचीनाः, काश्चनोपलभ्यमाना अपि नैव सर्वान् संशयानुच्छिन्दन्ति। अत एव महदिदमुपकृतमभ्यङ्करमहोदयेन यद् दुर्बोधस्यास्य ग्रन्थस्य सुमनोरमेयं टीका निरमायि। प्रथमतः परःशतेषु पृष्ठेषु गणितफलितज्योतिषगतानि सुबहूनि तत्त्वान्याङ्लभाषया विशदीकृतानि। व्याख्यातुर्मतेन यद्यपि उपदेशसूत्रस्य रचयिता पूर्वमीमांसासूत्राणां प्रणेतुर्विभिन्न एव तथापि प्रायेण तस्यैवाभ्युदयकाले प्रादुर्भूतः। तत्र च शब्दद्वितयं प्रमाणत्वमगाहेते। स्वात् स्वामिनः कण्टकादिष्वपारदौर्बल्यम् [२।३।१६] इत्युपदेशसूत्रेऽपारदौर्बल्यमुपलभ्यते, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौबल्यमर्थविप्रकर्षात् [३।६।१४] इति मीमांसासूत्रेष्वप्युपलभ्यते। पूर्वमीमांसासूत्रे पारदौबल्यमित्यस्यार्थः—उत्तरोत्तरस्य दुर्बलतरत्वमिति। उपदेशसूत्रेऽपि अपारदौर्बल्यशब्दस्य तद्विपरीत एवार्थो भवितुमर्हति—उत्तरोत्तरस्य बलीयस्त्वमिति। यद्यपि केनापि टीकाकृता नायमर्थः स्वीकृतस्तथापि प्रकरणाद्यनुरोधेनायमेवाङ्गीकरणीय इति प्रतिभाति। किञ्च, पापैः कीकटे इत्युपदेशसूत्रे [२।२।२७] कीकटशब्दः समुपलभ्यते। तत्राभ्यङ्करमहोदयेनोक्तम्—

* Kīkaṭa—The name of this people occurs only in one passage of the Rigveda, where they appear as hostile to

तृतीयस्थाने पापग्रहस्य योगे दृष्टौ वा कीकटे नाम अनार्यनिवासे मगधादौ देशे मरणं स्यात्। कीकटशब्द ऋग्वेदे तृतीयमण्डले विश्वामित्रस्यार्षे किं ते कृण्वन्ति कीकटषु गावः [३।५३।१४] इत्यत्र दृश्यते। तद्व्याख्यानं यास्काचार्यैः "किं कृताः किं क्रियाभिरिति प्रेप्सा वा" [ निरुक्त ६।३२ ] इति शब्दैरनार्यनिवास इति कृतम्। कीकटशब्दप्रयोगोऽत्र सूत्रकाराणां प्राचीनत्वं यास्कसमानकालीनत्वरूपं दर्शयतीत्यूह्यम्। इति।

ग्रन्थेऽत्र १२० पृष्ठात्मिका विविधविषयविचारभासुरा भूमिका, १६० पृष्ठात्मिका सव्याख्याना तृतीयाध्यायस्य तृतीयपादान्ता सूत्रराजिः, ततश्च तृतीयाध्यायस्यान्तिमपादस्य, चतुर्थाध्यायस्य च पादचतुष्टयस्य सूत्रं मूलमात्रम्, ततश्च प्रथमे परिशिष्टे जैमिनिसूत्रकारिका द्वितीयाध्यायान्ते, द्वितीये च परिशिष्टे चतुर्दशाध्यायात्मकमथर्ववेदोक्तमथर्वज्योतिषापरनामकम् आत्मज्योतिषम्, ततश्च प्रथमद्वितीयाध्यायगतानां सूत्राणामाङ्ग्लानुवादो विलसति। यद्यपि सर्वत्राभ्यङ्करमहोदयेन साकमस्माकं मतस्यैक्यं नास्ति तथापि भूमिकायां व्याख्यायां च तस्यानितरसाधारणं पाण्डित्यं प्रतिपदमेव प्रकटीभवतीति निर्मायमेवोच्यते। अवश्यं संग्राह्यमिदं पुस्तकं ज्योतिषशास्त्रानुरागिभिरिति शम्।

---

the singer and as under the leadership of Pramaganda. Yāska declares that Kīkaṭa was the name of a non-Aryan country, and later, Kikaṭa is given as as a synonym of Magadha. Hence Zimmer concludes that the Kikaṭas were a non-Aryan people living in the country later known as Magadha. Weber holds that this people were located in Magadha, but were Aryan, though at variance with other Aryan tribes, perhaps because of heretical tendencies, for Magadha was later a seat of Buddhism. But the identification is uncertain and doubted by Oldenberg and Hillebrandt. *Vedic Index.*

**संस्कृतशिक्षासहचरः।** A co-ordinated course of reading, grammar and composition. (द्वितीयं खण्डम् ।) श्रीफटिकलाल दास बि, ए, से आ पे विरचितः। वङ्गभाषामयस्य ३६०-पृष्ठात्मकस्य सुबृहतोऽस्य पुस्तकस्य मूल्यं सार्धरूपकमात्रम् । चन्दननगर, हुगली (Chandernagore, Hooghly, W. Bengal) इत्यत्र ग्रन्थकारसकाशाल्लभ्यम् ।

पुस्तकस्यास्य प्रथमं खण्डं पूर्वमेव समालोचितमस्माभिर्मञ्जूषायाम् । तदैव गणितशास्त्रनिष्णातस्य संस्कृतभाषाविशारदस्य च ग्रन्थकर्तुः फटिकलालदासमहाशयस्य परिचयोऽपि प्रदत्तः । अत्र च पुस्तके प्रथममेव मङ्गलाचरणत ऊर्ध्वं संस्कृतभाषामयी विज्ञप्तिर्विलसति । तत्र च स्वप्रयास इत्थमुपवर्णितो ग्रन्थकृता—

नवां रीतिं समाश्रित्य शिक्षाविज्ञानसम्मताम् ।
बालानां सुखबोधाय सर्वत्र विहितः श्रमः ॥
यथा विद्यातिभारेण नावसीदन्ति बालकाः ।
तथा मे सर्वतो दृष्टिर्वृथा नो चेद्विचेष्टितम् ॥
यदेव बालबोधाय श्रेयस्तल्लिख्यते मया ।
विबुधानां विबोधाय नात्र काचिद्विडम्बना ॥ इति ।

अत्र भाषाया मूलं वाक्यम् इति मतमनुसृत्य प्रथमत एव वाक्यं सन्निविष्टिम्, तदुपयोगीनि च सुबन्तानि तिङन्तानि च पदानि प्रदर्शितानि । एवं च प्रतिपाठमेव केषाञ्चन सुबन्तानां तिङन्तानामव्ययानां च शिक्षणेन छात्राणामतीव सौकर्यं भवति, अनायासेन च तत्तच्छब्दरूपाणि धातुरूपाणि च गुडूचीलागं लगन्ति तेषां मानसेषु। अत्र प्रथमतः संस्कृतभाषामयाणि वाक्यानि वङ्गभाषामयाश्च तदर्था दृश्यन्ते, ततश्च कानिचन संस्कृतानि पदानि तेषामर्थाश्च, ततश्च केचन धातवः, तेषामर्थाश्च, ततश्च प्रयोगप्रदर्शकानि वाक्यानि, ततश्च भाषान्तरारोपणार्थं संस्कृतानि वङ्गीयानि च वाक्यानि । ततश्च प्रतिपाठं हास्यरसात्मकं संस्कृतव्याकरणस्य तत्तद्विशेषप्रदर्शकं

भूदारचन्द्रोपाख्यानम्। एवं च क्रमेण निपातानाम् अर्थोल्लेख: प्रयोगप्रदर्शनं विविधलकाराणां विविधविभक्तीनामर्थकथनं प्रयोगप्रदर्शनञ्च ग्रन्थेऽस्मिन्नतीव सरलया रीत्या विहितम्। वङ्गीयेषु विद्यालयेषु पुस्तकमिदं पाठ्यतया निर्देक्ष्यते इत्यस्माकं बलवती प्रत्याशा। चिरं जीवतात् फटिकलालमहोदयः, ईदृशानाञ्चापरेषामपि प्रबन्धानां विरचनेन परिचरताच्च सुरसरस्वतीमिति प्रार्थ्यते।

१। **प्रवेशपाठावलिः।** A First Reader of Sanskrit by Prof. Y. Mahalinga Sastri. Price As. 10.

२। **संस्कृतमध्यमपाठावलिः।** A Middle Reader of Sanskrit by Prof. Y. Mahalinga Sastri. Price As. 12.

३। **संस्कृतप्रौढपाठावलिः।** An Advanced Reader of Sanskrit by Prof. Y. Mahalinga Sastri. Price As. 12. Publishers: B. G. Paul Co., 4, Fancis Joseph Street, G. T. Madras.

सस्कृतभाषायां प्रवेशं व्युत्पत्तिं चाधिगन्तुमिच्छूनां बालानां कृते रचितानीमानि परममनोरमाणि पुस्तकानि विद्वत्प्रवरेण श्रीमता महालिङ्गशास्त्रिमहाभागेन। तत्र प्रथमे पुस्तके अतिमात्रसरलया भाषया सरसान्युपाख्यानानि सन्दृब्धानि, रामायणगतानि सरलानि च पद्यानि सन्निविष्टानि, भर्तृहरिप्रभृतीनां महाकवीनां च वाक्यानि सरलया संस्कृतभाषया समुपनिबद्धानि।

संस्कृतमध्यमपाठावलौ—गणेशगीतम्, योगनन्दाख्यायिका, मार्गानुयोगिभीतः, मनःसदृशी सिद्धिः (पद्यम्), हरस्वामिकथा, मुनिमूषिककथा (पद्यम्), चिरदातुः कथा, कर्पटिकाख्यायिका (पद्यम्), भोजनं देहि राजेन्द्र, सन्तोषपुष्टानां परिव्राजकानाम् (प), अलसनाथः, पौरुषकथा (प), क्षमावतो मुनेः (प), विक्रमौदार्यम्, एकबलीवर्दस्वामिनः कथा (प), लोकानुवर्तनम्, छागभक्षकाणां ग्राम्याणाम्, क्षीरिणीवाहीकः, मूषकाख्यवणिक्पुत्रस्य (प), सातवाहनकथा, अजगरपतिव्रतयोः (प), अविमारके विदूषकचन्द्रिकयोः (भासनाटकात्), दिलीपगोरक्षण-

कथा, रघुकौत्सयोः, अजगजयोः, दशरथशापः, मायामृगः (प), समुद्रक्षोभणम् (प) जन्मभूमिप्रशस्तिः (प), अक्षरक्रमोपदेशमालिका (प) इत्येते विषया विराजन्ते ।

संस्कृतप्रौढपाठावलौ श्रीकृष्णलीलागीतम्–मृद्भक्षणम्, अलसः कश्चन बालः, धौम्यशिष्य उपमन्युः, वटुचापलम् (प), कैलासभीतः, गजदर्शिनोऽन्धाः (प), मूर्खपण्डिताः, हरिशर्माख्यायिका (प), कौलिकराक्षसः, अर्थवर्म-भोगवर्मणोः (प), कुक्कुटानां बिडालस्य च, कोटिद्वयम्, अलीकमन्त्रिणः कथा, निरवसाना कथा, समुद्रशूरकथा (प), रूपकस्येतिवृत्तम् (modelled on Addison's essay on *The Adventures of a Shilling*), अम्बुवाहः (Translation of Shelley's *The Cloud*), अच्छोददर्शनम्, रामस्यायोध्याप्रवेशः (रघु १४), कुशस्यायोध्याप्रत्यक्षम् (रघु १६), ऋतुसंहारसारः, शिवगीतम्, निगमनम् इत्येते विषया वर्तन्ते । एषां केचन शिक्षाप्रदाः केचन हास्यरसोद्रेकिणः, सर्व एव चित्ताकर्षिणः । पुस्तकत्रितयमिदं विद्यालयेषु पाठ्यतया निर्दिष्टं चेच्छात्राणां महानुपकारः स्यात् ।

**श्रीशिवकैवल्यचरितम् ।** कैकिण्युपनामकेन श्रीमञ्जुनाथात्मजेन डाः व्यङ्कटरावसाहित्यभूषणेन सन्दृब्धं महाकाव्यम् । मूल्यं रूप्यकमात्रम् । Popular Book Depot, Lamington Road, Bombay 7 इत्यतो लभ्यम् ।

बहोः कालात् पूर्वमनेके सारस्वतब्राह्मणा कश्मीरतः प्रस्थाय दाक्षिणात्यमनुप्रपद्यमानाः गोयापत्तनान्तर्गते कुशस्थलीग्रामे वसतिं कल्पयामासुः । ततश्च गोयाप्रदेशे पर्त्तुगीजैरधिकृते कौशिकगोत्रसम्भूतैः पण्डितोपाह्वैरेभिर्मनीषिभिः कारओयारप्रदेशान्तर्गते कैकिणीग्रामेऽवस्थितिर्विहिता । एभिश्च कुलदेवता शान्तदुर्गापि कैकिणीमानीता, तत्र च सुमनोहरं मन्दिरं निर्माय यथाशास्त्रं प्रतिष्ठापिता । अस्मिन्नेवान्ववाये प्रादुर्भूताः श्रीकैवल्ययोगीश्वरशिवानन्दयोगिप्रवराः । तेषामेव

महनीयं चरितमत्रोपवर्णितं प्रसादरम्येणानुष्टुप्छन्दसा भिषक्चक्रचूडामणिना ग्रन्थकृता।

अत्र प्रस्तावनायां गन्थकारमहोदयेनोक्तम्—यथा चीनदेशस्य राष्ट्रभाषा चीनी, इङ्ग्लण्डदेशस्य ईङ्लीशम्, तथा भारतस्य भाषावश्यमेव भारती (संस्कृतम्) भवति। अधुना हिन्दीभाषा विशेषकारणानुसारेण राष्ट्रभाषापदं नीता। तथाप्यचिराद् गीर्वाणभाषाखिलभारतस्य राष्ट्रभाषापदं प्राप्स्यतीत्यनेकेषां दृढो विश्वासः। जगति प्रचलितानेकभाषाणां जननीभूता गीर्वाणभाषा भारतस्य राष्ट्रभाषा भूत्वा देशस्य गौरवमसंशयं वर्धयिष्यति। गीर्वाणभाषा मृतभाषेति प्रतिपादनं नूनं परिहासविजल्पितमेव" इत्यादि।

प्रशंसनीयतमोऽयं प्रयासः किङ्किणीमहोदयस्य। अत्रत्येषु पद्येषु बहुत्र प्राणस्पन्दनमनुभूयते। काव्यमिदमस्मद्देशे समादरं लप्स्यत इति नः प्रतीतिः।

**Pearls beyond Price** compiled by Prof. S C. Gupta, M.A. Published by Kumar Prakashan (Publications), Moradabad. Price Annas Fifteen only.

सुदर्शने सुमनोहरे सुमुद्रितेऽस्मिन् "अमूल्यमौक्तिक"समाह्वे आङ्लभाषामयसुभाषितग्रन्थे विविधानि सुभाषितानि संगृहीतानि। न केवलं वैदेशिकान्येव सुभाषितान्यत्र सन्निवेशितानि वेदादिभ्योऽपि हृदयङ्गमानि वाक्यान्युद्धतानि, रवीन्द्रनाथ-राधाकृष्णन्-जहरलालप्रभृतीनामपि मञ्जुलानि वचनान्यन्तरान्तरा संयोजितानि। विषयानुसारेण सुभाषितानां सन्निवेशे वाचकानां सौकर्यं स्यात्, आशास्यते पुनर्मुद्रणकाले तथैव विधीयतेति। पुस्तकमिदं छात्राणां प्रभूतमुपकारं विधास्यतीति नः प्रतीतिः। मुद्रणसौष्ठवेन चित्रबाहुल्येन च सन्दृष्टमात्रमेवैतन्मनो हरति।

**गौडपादीयमागमशास्त्रम्।** महामहोपाध्यायविधुशेखरशास्त्रिरचितया वृत्त्या सहितम्। कलिकाता विश्वविद्यालयतः प्रकाशितम्। मूल्यं साधष्टिरूप्यकम् (Rs. 8/8/-)।

**वैदिकदर्शन।** ( हिन्दीभाषामयः प्रबन्धः ) डाः फतहसिंह एम् ए, बी टी, डी लिट् विरचितम्। प्रकाशक—संस्कृति सदन, कोटा, राजस्थान। मूल्यं रूपकपञ्चकम्।

भूयान् खलु कालो व्यतीतः समधिगतस्य समीचीनतमस्यास्य प्रबन्धद्वितयस्य। आगामिन्यां संख्यायामवश्यमेव विधास्यते समालोचनम्।

Deccan College Post-Graduate and Research Institute Poona 5 इत्यतः प्रकाशितान्यधोलिखितानि पुस्तकानि समालोचनार्थमागतानि विभूषयन्ति नः पाठागारम्। सर्वाणीमानि सम्पादकानां पाण्डित्यातिशयं च भूरिपरिश्रमं च संसूचयन्ति। क्रमेणैषां विस्तरेणालोचनं विधास्यते। त्वर्यतां वाचकमहाभागैरेतेषां संग्रहायेति शिवम्।

**Historical Grammar of Apabhrams'a** by Gajanan Vasudev Tagore, M.A., B.T., PH.D. Rs. 21/-

**Historical Grammar of Inscriptional Prakrits** by Madhukar Anant Mehendale, M.A , PH.D. Rs. 21/-

**Cultural History from the Vāyupurāṇa** by Devendrakumar Rajaram Patil, M.A., LL.B., PH.D. Rs. 15/.

**Citations in Sabara-Bhāṣya** by Damodar Vishnu Garge, M.A , PH.D. Rs. 16/-

**Anekārtha-Tilaka of Mahīpa** critically edited by Madhukar Mangesh Patkar, B.A. Rs. 6/-

**The Amaramaṇḍana of Kṛṣṇasūri** critically edited by V. Raghavan, M.A., PH.D. Rs. 3/-

**Verbal Composition in Indo-Aryan** by Ramchandra Narayan Vale, M.A., B.T., PH.D. Rs. 18/-

---

## संस्कृत-मासपत्रिका

**मधुरवाणी।** प्रधानसम्पादकः—पं गलगली रामाचार्यः। सम्पादकः—पण्डितः पण्ढरीनाथाचार्यः। वार्षिकं मूल्यं रूपकपञ्चकम्। प्राप्तिस्थानम्—बागलकोट्, बीजापुर।

यास्तावद्देवभाषामय्यः पत्रिकास्तृणीकृतस्वार्थाः प्रचरन्ति भारतभूम्यां तेष्वेवेयमन्यतमा प्रधानतमा च मधुरवाणीत्यन्वर्थनाम्नी मासपत्रिका। अस्याश्च सम्पादकवर्यैर्महतीमपि हानिमुररीकृत्य साम्प्रतमपि प्रकाश्यते मधुरवाणीति सहस्रशस्ते धन्यवादानर्हन्ति। प्रियवाचकमहाभागाः, आसीदस्माकं बलवता प्रत्याशा यद् भारतवर्षस्य स्वाधीनतासमधिगमादनन्तरं पुनरपि प्रोड्डीना स्याद्देवभाषा-वैजयन्ती सर्वत्रैवाप्रतिहतम्। परं के वयमेवमाशंसितुम्। दुर्भाग्यतः खल्वस्माकमिदानीं सर्वैरपि हिन्दी हिन्दीति रारटयते संस्कृतभाषायै चासूय्यते। आर्याः, हिन्दीभाषाया अपि मूलं संस्कृतमेव, हिन्दीभाषाया अप्यभ्युदयो नान्तरेण संस्कृतभाषाविज्ञानं सुघटः संसाधयितुमिति न खलु विस्मर्तव्यं भवद्भिः। अत एव संस्कृतभाषामयपत्रिकादीनां समुन्नतिविधौ सर्वात्मना प्रयतनीयमेव।

साम्प्रतमस्माभिर्मधुरवाण्याः षोडशवर्षस्य ४-५ सञ्चिकाः समधिगताः। अत्र च मङ्गलाचरणम्, मासावतरणिका, सम्पादकालोकः, आर्यसंस्कृतिः, किर्लोस्कर-दिल्लीविशेषाङ्कः, संस्कृतभाषाया अन्तःशक्तिः, मैथिलीपते, कविता कामिनी कौतुकाय, संस्कृतसाहित्ये गद्यकाव्यविरलतायाः कारणम्, मधुरवाणीशुभाशंसनम्, अनामिका सार्थवती बभूव, वैजयन्ती, सङ्गीतसम्राट्, अहो विस्मरणम्, समासविचारः, संस्कृत-समाचारः, सम्पादकानां संस्कृतभाषणम् इत्येते गद्यपद्यप्रबन्धा विलसन्ति। सम्पादकमहोदयानां लेखाः पीयूषयूषकल्पाः प्रतिपदमेव मधु निष्यन्दमाना कस्य वा सचेतसश्चेतो न विद्रावयेयुः। अन्येषामपि लेखा नितरामेवावर्जयिष्यन्ति मानसानि सहृदयानामित्यस्माकं बलीयसी प्रतीतिः। संस्कृतभाषायां व्युत्पत्तिमधिगन्तुकामैश्छात्रैर्व्युत्पन्नैश्च प्रवयोभिः सर्वैरेव मधुरवाण्या ग्राहकत्वमङ्गीकर्तव्यम्। चिरं जीवतु मधुरवाणी, अनुदिनं च समेधमानवैभवा संसाधयतु हितं भारतवर्षस्य भव्यं च भारतवर्षीयाणामिति भगवान् भूतभावनः प्रार्थ्यते। वार्षिकं मूल्यं रूप्यकपञ्चकमात्रम् Pandit Pandharinathacharya Galgali, House no. 472, Bagalkot, Bijapur इत्यत्र प्रेषणीयम्।

शब्दार्थत्वे शास्त्रस्याव्यापकत्वदोषेणानारम्भशङ्का उभयार्थत्वकथनेन, शब्दार्थ-सम्बन्धानित्यत्वे अन्योन्याश्रयादिदुष्टतयानारम्भशङ्का सिद्ध इत्यादिना तन्नित्यत्व-कथनेन च निरस्तेत्युपोद्घातत्वेनेदमाह्निकम् । चतुर्दशसूत्र्या अपि शास्त्र-प्रवृत्त्यर्थत्वात् तत्समर्थनमप्युपोद्घात एव । अत एवेदं पस्पशाह्निक-मित्युच्यते । शास्त्रारम्भसमर्थकोपोद्घातग्रन्थसन्दर्भस्य पस्पशाशब्देन वृद्धै-र्व्यवहारात् ।

शास्त्रस्यारम्भको ग्रन्थ उपोद्घात इतीरितः ।
स एव ग्रन्थसन्दर्भः पस्पशः कथितो बुधैः ॥

Mādhava says in his Dhātuvṛtti under स्पश बाधन-स्पर्शनयोः—

पस्पशा । यङ्लुगन्तादचि टाप् । संज्ञापूर्वको विधिरनित्य इति नाभ्यासस्य दीर्घः ।..अत्र स्वामी पष इत्येके इति, तेन पाषण्डः पाषाण इत्याह । दुर्गशाकटायनयोरप्ययमेव पक्षः । अनयोः पाठे "प्रति स्पशो वि सृज तूर्णितमः" [ ऋ० सं० ४।४२।३ ], उपसर्गश्च स्पशः, शब्दविद्येव नो भाति राजनीतिरपस्पशा [ शिशुपालवधः २।११२ ] इत्यादिप्रयोगा अननुगुणाः ।

Vallabha says under S'is'u ii. 112:

अपस्पशा अनुक्तप्रयोजना । अविद्यमानः पस्पशः प्रयोजनग्रन्थो यस्याः सा अपस्पशा । यावन्न तत्रोक्तम्—"रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इति तावन्न तत्र गौरवं स्यात् ।

Mallinātha says under the same stanza:

पस्पशः शास्त्रारम्भसमर्थक उपोद्घातसन्दर्भग्रन्थः ।

One MS. of the commentary Kalā on Nāges'a's Laghu-Mañjūṣā (p. 90 f. n.) reads :

स्पश्यते स्पृश्यत उपोद्घाततया तावदुपगम्यते इति स्पशः कर्मण्यङि बाहुलकाद् द्वित्वे रूपम् ।

Bhaṭṭoji in his Prauḍhamanoramā contents himself with quoting the view of Mādhava.

Jñānendrabhikṣu says in his *Tattvabodhinī* :

पस्पशा । यङन्तादचि "यङोऽचि च" [ २।४।७४ ] इति लुक् । "अजाद्यतः०" [ ४।१।४ ] इति टाप् । "दीर्घोऽकितः" [ ७।४।८३ ] इत्य-भ्यासस्य दीर्घो न भवति, संज्ञापूर्वकविधेरनित्यत्वादित्याहुः ।

It is most unfortunate that Indian grammarians do not postulate a root *spas'* in the sense of 'seeing'. We can easily detect the root in that sense in the words *spaṣṭa* 'evident' and *spas'* 'spy'. It is found with the loss of the initial sibilant in *pas'yati*, *apas'yat* etc. which have nothing to do with *dṛs'* except in sense. The English words *spectator, spectacles, species, spy* etc. are derived from the European counterpart of this root. Lat. *specere* means 'to see, to look at'. The root appears in Greek with metathesis as *skeptomai* 'I look clearly at.' In the Rigveda we find :

यत् सानोः सानुमारुहद् भूर्यस्पष्ट कर्त्वम् ।
तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥१।१०।२॥

'As up he rose from ridge to ridge and looked upon much that yet remained to be done, Indra learns this object of his, and as a ram he set himself in motion with his troop (the Maruts).'

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ॥१।२२।१९॥

'Look ye on Viṣṇu's works, from where he pays heed to his ordinances, the true friend of Indra.'

Patañjali quotes कपोतः शरदं पस्पशाते under vii. 3. 37. 1 and Kaiyaṭa says स्पशिर्वार्त्तिककारवचनादपठितोऽपि धातुः।..."स्पश बाधनस्पर्शनयोः"...इति केचित् पठन्ति ।

*Paspas'ā,* therefore, means that which shows up the whole thing, gives a bird's eye-view of the thing and corresponds in meaning to *synopsis* (Gk. *sun* together and *opsis* sight, view ) a general view, an outline. In स्पश बाधनस्पर्शनयोः commentators explain स्पर्शन as ग्रथन. If it is explained as चक्षुरिन्द्रियेण ज्ञानम् no difficulty will arise.

Āhnika—what was taught or read in a day was known as Āhnika. It may be translated by "lecture."

———

# APPENDIX I.

## Grammar and its Critics

Grammar, strictly speaking, is a natural science. Its function is to register the facts of a language in a certain stage of its development. For its purpose, words which conform to its canons or " correct words " are as valuable as " incorrect" words, *i.e.*, those which do not so conform but have passed current in the language. In every country, however, it soon attains the status of a normative science and arrogates to itself the task of regulating the language of the people. As soon as this happens, a certain section of easygoing people begins to look askance at it.

There is always and everywhere a class of people who are intolerant of any discipline. With grammar, ethics, logic and the like they have no patience. We speak out of an inner necessity, they hold, and the most natural words and expressions are the best. As Patañjali points out, it is not necessary for us whenever we have occasion to use words to go to the house of a grammarian and order some words, just as when in need of pots we go to a potter and order them यथा घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति, न तद्वच्छब्दान् प्रयोक्ष्यमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान् प्रयोक्ष्य इति । (Mahābhāṣya ed. by Kielhorn, Vol. I, pp. 7-8). A lover does not care for grammar when pouring out his heart to his beloved, a mother does not think of grammatical accuracy when giving vent to her grief for the loss of her son. Yet the words of the moonstruck lover and the bereaved mother are far more impressive than all the grammarians in the world could ever make them. On the other hand, grammarians and Mīmāṁsakas have always been considered constitutionally incapable of understanding the softer emotions that stir the human heart. As the king's counsellor very plausibly points out in the Das'akumāracarita :—

यावता च नयेन विना न सिध्यति लोकयात्रा स लोकत एव सिद्धो नात्र शास्त्रेणार्थः। स्तनन्धयोऽपि तैस्तैरुपायैर्लिप्सते स्तन्यपानं जनन्याः ( Ucchvāsa VIII).

'The amount of policy without which one cannot make one's

way in the world one acquires from the world. S'āstra is not necessary for this purpose. Even an infant at the mother's breast makes various movements to suck the milk.' Exactly the same thing may be said of grammar. All the knowledge that is necessary for us to communicate our thoughts to others we acquire unconsciously from the conversations of our elders and from our intercourse with the world. Even in the matter of lending grace to a poetic composition, Grammar is not of much use, for its restrictions often lead people to use harsh unmelodious words jarring to the ear. And what useful purpose can grammar serve? You cannot use a word simply because it is sanctioned by grammar if it has not passed current in the language; on the other hand if a word is already established in popular usage, rules for its formation are unnecessary. Grammarians might cry till they are hoarse but they cannot banish words likh "vis'r ma," "puratah," etc. from the language.

लोके तु सर्वभाषाभिरर्थो व्याकरणादृते ।
सिध्यति व्यवहारेण काव्यादिष्वप्यसंशयम् ।।
काव्यशोभास्वपि त्वेतद् नात्रातीवोपयुज्यते ।
वैयाकरणदोषाद्धि कष्टाञ्छब्दान् ऽयुञ्जते ।।
न च लक्षणमस्तीति प्रयोक्तव्यमलौकिकम् ।
लोकसिद्धप्रयोगे तु लक्षणं स्यादनर्थकम् ।।

(Tantravarttika, ed. Chowkhāmba, p. 205.)

It is for this reason that the Naiyāyikas, the most intellectual of philosophers, do not care an 'earthen jar' for grammatical purity in their language. Their view on this point is exeeedingly beatifully summed up in the pithy saying attributed to one of them: **अस्माकूनां नैयायिकेषां अर्थनि तात्पर्यं शब्दनि कोश्चिन्ता?** The mass also thinks in the same way. There is the popular saying—

मूर्खो वदति विष्णाय ज्ञानी वदति विष्णवे ।
द्वयोरेव समं पुण्यं भावग्राही जनार्दनः ।।

'An illiterate man says *viṣṇāya* whereas a learned man says *viṣṇave*. Equal merit accrues to both, for Janārdana considers the inner spirit.'

Grammar is worse than useless, urge these people. In the first place, the observance of the rules of grammar argues "slave mentality." Secondly, what is the use of burdening the memory "with loads of learned lumber" which will have later to make room for more useful things. "Wozu denn immer lernen was man später doch vergisst!" And have the grammarians themselves followed their own precious rules? Do we not find authoritative sages, authors of the Kalpasūtras, and Gṛhyasūtras, Smṛtis and Mīmāṁsā using any number of ungrammatical words and expressions? Is there any limit to the number of ungrammatical forms in the epics, Purāṇas and other sciences like the Hastiśikṣā, etc.? Do we not find what pedants are pleased to term "ungrammatical expressions" in the Vedas even, expressions which no rule of grammar can ever justify? Has it not been said that there are a hundred *apaśabdas* in Māgha, three hundred in Bhāravi and innumerable in Kālidāsa? **अपशब्दशतं माघे भारवौ तु शतत्रयम् । कालिदासे न गण्यन्ते कविरेको धनञ्जयः ॥**

To take some concrete examples. Every schoolboy knows that the neuter singular nominative of *'itara'* is *'itarat'* and not *'itaram,'* yet Maśaka writes: *samānam itaram jyotiṣṭomena* and the Sūtrakāra himself writes: *samānam itaram gavaikāhikena.* It is well-known that when the benefit of the action accrues to the agent, then and then alone Ātmanepada is used, yet in direct violation of all rules of grammar the Sūtrakāra writes—*ahīne bāhiṣpavamānaih sadasi stuvīran* where the nominative is the three officiating priests who do not reap the fruit of the action. Āśvalāyana writes: *pratyasitva prāyaścittaṁ juhuyāt* where he uses the suffix *"lyap"* though the root is preceded by a preposition. A greater outrage on grammar could hardly be imagined. In the aphorism *"gavyasya ca tadādiṣu"* (VII. 2. 18) Jaimini uses the word *'gavya'* to mean the sacrifice known as *"gavām ayana"* a meaning the word simply does not possess. On a par with this is his use of the word *'Dyāvoh"* in the Sūtra *"Dyāvostatheti cet"* (IX. 3. 18) where he means *"Dyāvāpṛthīvyoh."* The author of the Grihyasūtra writes *mūrdhanyabhijighrāṇam* where the substitution of *"jighra"* for *"ghrā"* is absolutely unwarranted. And Yāska whose *Nirukta* professes to impart

perfection to grammar has erred in the opposite direction by not substituting *"vac"* for *"brū"* in the line *"brāhmaṇo bravaṇāt."*

It is for this reason that some have gone so far as to make fun of Pāṇini's rules. One ingenious poetaster writes:

काचं मणिं काञ्चनमेकसूत्रे
गृथ्नाति बाला न हि तद्विचित्रम् ।
विशेषवित् पाणिनिरेकसूत्रे
श्वानं युवानं मघवानमाह ॥

'No wonder that the girl strings together glass, gems and gold, for Pāṇini, who ought to know better, has spoken of the dog, the youth and the king of the gods in the same breath.[2]'

A lover is made to cry out in the agony of his soul:

नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः ।
तत्तु तत्रैव रमते, हताः पाणिनिना वयम् ॥

'I sent my mind as an emissary to my beloved, thinking it to be neuter. It, however, dallies in her company. I have to thank Pāṇini for this calamity.'

Another scholar with a touch of the logician in him points out that according to Pāṇini, neither the Ganges nor the Jumna is a river, it is land that is a river.

पाणिनेर्न नदी[3] गङ्गा यमुना वा नदी स्थली ।

---

[1] Pāṇini VI. 4. 133 श्वयुवमघोनामतद्धिते.

[2] Cf. "Mary, Mary, quite contrary,
How does your garden grow ?
With cockle shells,
And silver bells,
And pretty maids all in a row."

[3] There is a play here upon the word नदी, which means a river in literature but is also a technical term in Pāṇini's grammar, meaning roughly speaking, feminine words ending in ई and ऊ and declined like नदी and वधू.

Some think that Pāṇini, Patañjali and others might have been more profitably engaged in composing love-poems and didactic poems. They point out the great potentiality in this direction in the writings of grammarians. Take for instance such "*samasyāpūraṇa*" stanzas as :

गुर्वन्तिके ह्रिया पूर्वं संज्ञयार्थविबोधनम् ।
करोति पत्युर्युवतिरथ शब्दानुशासनम् ।।

'In the presence of the elders the bashful young bride instructs her husband in love by means of gestures, then (after the elders have moved away) she conveys her instructions in words.' This is a *samasyāpūraṇa* with "*atha s'abdānus'āsanam*" the opening words of the Mahābhāṣya.

"सर्वस्य द्वे" जगति नियते सम्पदापच्च जन्तो-
"र्वृद्धो यूना" सह परिचयात्त्यज्यते कामिनीभिः ।
"एको गोत्रे" भवति पुरुषः सम्पदामाश्रयो यः
"स्त्री पुंवच्च" व्यवहरति चेद् विद्धि गेहं प्रनष्टम् ।।"[1]

"Each has double"—prosperity and adversity are the inevitable lot of every creature.
"The elder, when with the younger"—young maids get friendly is left in the lurch.
"One in a family"—there is only one such and he is the one who is prosperous.
"Feminine like masculine"—when this begins, know the house is ruined.

"उपसर्गाः क्रियायोगे"[2] पाणिनेरपि सम्मतम् ।
निष्क्रियोऽपि तवारातिः सोपसर्गः सदा कथम् ।।

'Even the great Pāṇini thinks that *upasarga*[3] is united to

---

[1] This is a *samasyāpūraṇa* with Pāṇini VIII. 1. 1; I. 2. 65; IV. 1, 93; I. 2. 66.

[2] Pāṇini I. 4. 59.

[3] There is a pun here on the word "upasarga," which means both "preposition" and "calamity."

action. How then is your enemy, though (rendered) inactive, still united to *upasarga*?'

राजन् यद्यपि ते बाहू कान्तालिङ्गनलालसौ ।
तथापि समरे भेत्तुं "शक्तौ हस्तिकपाटयोः" ॥[1]

'Though your arms, O king, long to embrace the beloved, still for shattering in battle they have "strength in case of elephant-*kavāṭa*" (*i. e.*, they are strong enough to shatter the temples of elephants in battle).'

# Appendix II.

दुष्टः शब्दः etc. p. 11.

व्याकरणप्रयोजनप्रतिपादनपरे वचने "दुष्टः शब्दः" इति प्रतीकमुपलभ्यते। समग्रश्च श्लोको यथा—

दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ इति ।

'स्वरतः' स्वरेण उदात्तादिना । 'वर्णतः वा' अथवा वर्णेनाकारादिना ककारादिना च । आद्यादेराकृतिगणत्वात् "आद्यादिभ्य उपसंख्यानम्" इति वार्त्तिकेन सार्वविभक्तिकस्य तसेर्विधानात् तृतीयार्थे तसिः । 'दुष्टः' अशुद्धः 'शब्दः' नामाख्यातोपसर्गनिपातरूपः । 'मिथ्या' अयथावत् 'प्रयुक्तः' उच्चारितः 'तम् अर्थम्' यदर्थप्रतिपादनाय प्रयुक्तस्तमर्थं 'न आह' स्वरदोषाद्वा वर्णदोषाद्वा उभयदोषाद्वा वक्तुरभिमतमर्थं नाभिधत्ते । न केवलं तमर्थं नाह, प्रत्युत प्रत्यवायोत्पादनद्वारा हिंसको भवतीत्याह—स वाग्वज्र इति । वागेव वज्रः । मयूरव्यंसकादित्वात् समासः, द्वन्द्वे द्विवचननपुंसकत्वयोरन्यतरस्य प्रसङ्गात्, बहुव्रीहौ दुष्टशब्दपरामर्शिना स इत्यनेन सामानाधिकरण्यानुपपत्तेः । रूपकालङ्कारेण दुष्टाया वाचोऽमर्षित्वममोघहिंसत्वं च प्रतीयते। 'यजमानं हिनस्ति' येन खल्वभ्युदयाय महताभिनिवेशेन प्रभूतेन परिश्रमेण गरीयसा चार्थव्ययेन यागः प्रारब्धः तमेव यजमानं न केवलमभ्युदयेन न योजयति, प्रत्युत हिनस्ति विनाशयति, तस्य महतीं हानिं करोतीत्यर्थः । 'यथा' 'स्वरतः' स्वरेण 'अपराधात्'

---

[1] Pāṇini III. 2. 54.

दोषात् अयथोच्चारितेन स्वरेणेति यावत्। 'इन्द्रशत्रुः' लक्षणयेन्द्रशत्रुरिति शब्दः यजमानं त्वष्टारम् अहिनदिति शेषः। "इन्द्रशत्रुर्वर्धस्व" इति मन्त्रे इन्द्रस्य शत्रुः शातयिता घातक इत्यस्मिन्नर्थे विवक्षिते समासस्येतिसूत्रेण सामान्यतस्तत्पुरुषसमासस्यान्तोदात्तत्वादन्तोदात्त एव कर्त्तव्ये नियतेर्नियोगात् त्वष्ट्राद्युदात्तत्वेन प्रयुक्तत्वात् 'बहुव्रीहौ पूर्वपदं प्रकृत्या' इति स्मरणात् बहुव्रीहि-निष्पन्नः, तेन च इन्द्रः शत्रुर्घातकः यस्य इत्यर्थस्योपजायमानत्वाद् यज्ञफलेन यो वर्धितः स वृत्र एवेन्द्रेण निहतः, न पुनरिन्द्रो वृत्रेण। एवञ्च यजमानस्यानभिमतमेव संवृत्तम्। यद्यप्यत्र वृत्रस्य पितैव यजमानो निहतश्च वृत्रः, अत एव यजमानस्य न हिंसा परं तत्पुत्रस्य। तथापि पुत्रहिंसायाः पितुरपि दुःखहेतुतया, पितुर्हिंसायामेव पर्यवसानम्। शाखान्तरे वृत्रकर्तृक एवायं यागः। तस्मात् स्वर-वर्णाद्यपराधपरिहारायाध्येयं व्याकरणम्। अत्र इन्द्रशत्रुशब्दे शत्रुशब्दस्यामित्र-पर्यायत्वे बहुव्रीहि-तत्पुरुषयोरविशेषः ; अत एव यौगिकार्थस्वीकारः। अत्राभिचार-कर्मणि मन्त्रे इन्द्रशत्रुशब्द ऊहितः। ऊह्यमानस्य चामन्त्रत्वात् "यज्ञकर्मण्यजपन्यूङ्ख-सामसु" इति जपादिपर्युदासेत मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति। श्लोकोऽयं पाणिनीयशिक्षायामप्युपलभ्यते, केवलं तत्र 'दुष्टः शब्दः' इत्येतस्य स्थाने "मन्त्रो हीनः" इति पाठः।

व्याकरणप्रयोजनोपवर्णनपरे वचने "यदधीतम्" इति प्रतीकमुपलभ्यते। समग्रः श्लोको यथा—

यदधीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥

इति। 'यत्' वाक्यम् 'अधीतम्' गुरूच्चारणानूच्चारणपुरःसरं शब्दतो गृहीतम्, 'अविज्ञातम्' अर्थतो नावबुद्धम्। अत एव 'निगदेन' पाठमात्रेण 'एव' 'शब्द्यते' समुच्चार्यते, न पुनरर्थतो विचार्यते, न वा यथावसरं प्रयुज्यते। 'अनग्नौ' अनलरहिते प्रदेशे 'शुष्कैधः' शुष्कं काष्ठमिव कर्हिचित् कदापि तत् न ज्वलति स्वार्थं न प्रकाशयति स्वेन भासा वक्तुः श्रोतुश्च हृदयं नोद्भासयति। नीरसया समिधा होमादिकमनुष्ठीयते, पाकादिकमभिनिर्वर्त्यते, तमस्ततिश्चापसार्यते, परं तदर्थमनलोऽप्यपेक्ष्यते। यथा नीरसमपि काष्ठं भूमौ प्रक्षिप्तमन्तरेणानलं नालं भवति प्रज्वलितुम्, तथाधीतमपि शास्त्रमर्थावबोधमन्तरेण न भवत्यलमान्तरं तिमिरं वा हन्तुं व्यवहारे पाटवं वोप-जनयितुम्। अर्थज्ञानं च सर्वथा व्याकरणाधीनमेव। प्रकृतिप्रत्ययविभागज्ञानात् पदार्थज्ञानम्, ततो वाक्यार्थज्ञानम् इति सार्वजनीनप्रतीतेः। अत एव यच्छास्त्रं महता श्रमेण कण्ठे क्रियते तस्य श्रमस्य साफल्याय शास्त्रस्य च तस्य सार्थक्याय व्याकरणमध्येयम्। पाणिनिनापि महर्षिणा "तदधीते तद्वेद" इति सूत्रे वेदनाध्ययनयोः

पार्थक्यं प्रकटीकृतम् । निरुक्तेऽपि वचनमिदमुपलभ्यते, तत्र च यद्गृहीतमिति पाठः ।

यस्तु प्रयुङ्क्ते p. 11.

व्याकरणस्य प्रयोजननिर्देशपरे वचने यस्तु प्रयुङ्क्ते इति प्रतीकमुपलभ्यते । समग्रः श्लोको यथा—

यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः ॥

इति । अनेन व्याकरणाध्ययनस्याभ्युदयहेतुत्वमन्वयमुखेन व्यतिरेकमुखेण च प्रतिपाद्यते । 'यस्तु वाग्योगवित्' यस्तावत् वाचः प्रकृतिप्रत्ययसम्बन्धज्ञो वैयाकरणः 'विशेषे' शब्दविशेषे अर्थविशेषे च 'कुशलः' व्युत्पन्नः 'व्यवहारकाले' लौकिकवैदिकानुष्ठानवेलायाम् । तथाचोक्तं पस्पशायाम्—चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । 'शब्दान्' विवक्षितार्थप्रतिपादनपटूनि पदानि 'यथावत्' यथाशास्त्रं प्रयुङ्क्ते विनियोजयति, 'सः' तादृशो व्युत्पन्नः पुरुषः 'परत्र' मरणादूर्ध्वं स्वर्गलोकमनुप्रपन्नः 'अनन्तं' निरवसानं 'जयं' 'प्राप्नोति' समधिगच्छति ततश्च सामर्थ्यात् अवाग्योगविदित्यध्याहार्यम् । अवाग्योगवित् प्रकृतिप्रत्ययादिसम्बन्धानभिज्ञः पुनः 'अपशब्दैः दुष्यति' इहापि शिष्टजनानां गर्हणीयो भवति, अमुत्रापि निरयनियन्त्रणामनुभवति ।

अत्र वाग्योगवित् इति पदस्य मध्यमणिन्यायेनोभयत्राप्यन्वयः सम्भवति । तथाहि यस्तावद् वागयोगवित् स व्यवहारवेलायां साधुशब्दान् प्रयुञ्जानः स्वर्गे लोके चाभ्युदयेन युज्यते, अपशब्दान् पुनरुच्चारयन् महता दोषेण लिप्यते । यः पुनर्वाचोयुक्तिपटुर्न भवति, तस्यापशब्दप्रयोगो नैव तथाविधदोषाय भवति, उदेति दोषादपि दोषलाघवमित्यभियुक्तोक्तेः । यद्वा, यो हि शब्दाञ्जानात्यपशब्दानप्यसौ जानाति, एवं तस्य शब्दज्ञानाद्धर्मः अपशब्दज्ञानाच्चाधर्म उत्पद्यते । अथवैकैकस्य शब्दस्यानेकापभ्रंशसम्भवाद् भूयानधर्मः प्राप्नोति । अनया रीत्या वाग्योगविद् दुष्यति चापशब्दैः । स तु दोषो नलिनीदल इव सलिलबिन्दुर्न चिरमवतिष्ठते, सुशब्दसमुद्भूतेन गुणेन विच्छिन्नाभ्रविलायं विलीयते । यद्वा शास्त्रवचनमेवास्माकं प्रमाणम् । शास्त्रञ्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम , अतो न काप्यनुपपत्तिः । यद्वा, अपशब्दज्ञानं साधनमेव शब्दज्ञाने । अत एवापशब्दज्ञानपूर्वके शब्दज्ञाने धर्म इति सर्वमवदातम् ।

सन्निधेश्च सामर्थ्यस्य बलीयस्त्वात् प्रथममेव व्याख्यानं समीचीनम् ।

अविद्वांसः p. 16.

व्याकरणप्रयोजनप्रतिपादपरे वचने अविद्वांस इति प्रतीकमुपलभ्यते । समग्रः श्लोको यथा—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।
कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥

इति । 'अविद्वांसः' अत्र योग्यत्वाद् व्याकरणं कर्म बोध्यम् । व्याकरणज्ञानरहिताः 'प्रत्यभिवादे' अभिवादनानन्तरप्रयोज्ये वचने 'नाम्नः' अभिवादकनाम्नः टेः 'प्लुतिं' प्लुतस्वरापादनं 'ये न' 'विदुः' जानन्ति 'तेषु' 'कामम्' निःशङ्कं 'विप्रोष्य' प्रवासात् एत्य 'स्त्रीष्विवायमहं वदेत्' यथा स्त्रीष्वभिवादनवाक्ये "अभिवादये सोमशर्माहं भोः" इत्यनुक्त्वा केवलम् "अयमहम्" इत्युच्यते तथैवाविद्वत्स्वपि प्रयोक्तव्यम्। एवं धर्मशास्त्रकाराः समामनन्ति। अभिवादनकाले सोमशर्मणा "अभिवादये सोमशर्माहं भोः" इति वक्तव्यम् , प्रत्यभिवादनवाक्ये चाचार्यप्रभृतिभिः—"आयुष्मानेधि सोमशर्म३न्" इति वाक्यस्य टेः प्लुतं विधायोच्चारणीयम् । ये तावदनधीतव्याकरणग्रन्था अविज्ञातप्लुतादिका न प्रभवन्ति यथावत् प्रत्यभिवादनवाक्यं समुच्चारयितुं तेषां सविधे समग्रस्याभिवादनवाक्यस्योच्चारणं खरसूकराणामिव मृष्टमन्नं सर्वथा निष्फलमेव स्यात् । अत एव यथा स्त्रीणामविज्ञातव्याकरणत्वात् तासां सविधे केवलम् अयमहमित्युच्यते ; तथैव व्याकरणानभिज्ञानामपि सविधे अयमहमिति वक्तव्यम्। एवञ्चानभिज्ञाः स्त्रीभिस्तुल्यमूल्या भवेयुः। कस्मै वा सहृदयायैतद्रोचेत । अत ईदृशनिकारनिवारणायावश्यमध्येयं व्याकरणम् ।

अभिवादात् परं विप्रो ज्यायांसमभिवादयन् ।
असौनामाहस्मीति स्वं नाम परिकीर्तयेत् ॥
नामधेयस्य ये केचिदभिवादं न जानते ।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च ॥
भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥
यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥

[म० सं० २।१२२-१२६] इति मनुवचनमत्रानुसन्धेयम् । अत्रेदमवधेयम्—पाणिनिना महर्षिणाभिवादनविषये स्त्रीपुंसयोः कोऽपि भेदो नास्थितः ।

तस्य हि सूत्रं "प्रत्यभिवादेऽशूद्रे" इति। उत्तरवर्तिभिरेव वार्त्तिककारादिभिरुक्तम्, अत्यल्पमिदमुच्यते--अशूद्र इति। अशूद्रस्त्र्यसूयकेष्विति वक्तव्यमिति।

व्याकरणस्य प्रयोजनप्रतिपादनपरे वचने 'चत्वारि' इति प्रतीकं वर्तते। प्रकृतोपयोगि चत्वारिप्रतीकं मन्त्रद्वितयमृक्संहितायामुपलभ्यते। तत्राद्यं यथा—

चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आ विवेश ॥

[ऋ० सं० ४।५८।३] इति। सूत्रमिदं सम्प्रदायभेदेन विविधं व्याख्यायते। तत्र वैयाकरणानां व्याख्यानं यथा—'अस्य' महतो देवस्य शब्दलक्षणस्य 'चत्वारि शृङ्गा' चत्वारि शृङ्गाणि नामाख्यातोपसर्गनिपातलक्षणानि। शृङ्गा। "जश्शसोः शिः" इति शिः। "शेश्छन्दसि बहुलम्" इति शेर्लोपः, प्रत्ययलक्षणमाश्रित्य "नपुंसकस्य झलचः" इति नुम्। "सर्वनामस्थाने चासम्बुद्धौ" इति उपधादीर्घः। "नलोपः प्रातिपदिकान्तस्य" इति नलोपः। 'त्रयः पादाः' त्रयः काला भूतभविष्यद्वर्तमाना अस्य पादरूपेण विलसन्ति। "प्रकृत्यान्तःपादमव्यपरे" इत्यभिनिहितसन्धेरभावः। अस्य द्वे शीर्षे शिरोद्वयम्—नित्यकार्यभेदेन शब्दात्मनो द्वैविध्यात्। 'सप्त हस्तासः' सप्त हस्ताः। सप्त विभक्तयः अस्य पाणिरूपेण विराजन्ते। हस्तास इत्यत्र "आज्जसेरसुक्" इत्यसुगागमः। 'त्रिधा' त्रिप्रकारेण 'बद्धः' नियन्त्रितः उरसि कण्ठे शिरसि च, प्रायेण वर्णानां स्थानत्रितयान्यतमसम्भूतत्वात्। 'वृषभः' कामानां वर्षिता 'रोरवीति' शब्दायते। रौतेः शब्दकर्मणो यङ्लुगन्तस्य लटि रूपम्। रु शब्दे। "धातोरेकाचो हलादेः क्रियासमभिहारे यङ्" इति भृशार्थे यङ्। "यङोऽचि च" इति यङो लुक्। प्रत्ययलक्षणेन यङन्तत्वात् "सन्यङोः" इति द्वित्वम्। "गुणो यङ्लुकोः" इत्यभ्यासस्य गुणः। धातुत्वाल्लट्, लस्य तिप्। "शेषात्" कर्तरि इति परस्मैपदम्। "कर्तरि शप्" इति शप्। "चर्करीतं च" इत्यदादौ पाठात् "अदिप्रभृतिभ्यः शपः" इति शपो लुक्। "यङो वा" इति पाक्षिक ईट्। "सार्वधातुकार्धधातुकयोः" इत्युवर्णस्य गुणे "एचोऽयवायावः" इत्यवादेशे रूपम्। 'महो देवः' महान् देवः शब्दलक्षणः। मह पूजायाम्। "क्विप् च" इति क्विप्। "सुपां सुपो भवन्ति" इति सोर्ङसादेशः। यद्वा महच्छब्दसमानार्थकमहशब्दोऽपि वेदे समुपलभ्यते, स च महधातोर्घञर्थे के निष्पद्यते—मह्यते पूज्यते मह इति, तस्य प्रथमैकवचने रूपम्। 'मर्त्यान्' मरणधर्मणो मनुष्यान् 'आ विवेश' मर्त्येष्वाविष्टः। मर्त्यान् इत्यस्य नकारस्य संहितायां "दीर्घादटि समानपादे" इति रुत्वम्। "अत्रानुनासिकः" इत्यनुवृत्तौ "आतोऽटि नित्यम्" इत्याकारः सानुनासिकः। "भोभगोअघोअपूर्वस्य योऽशि" इति रोर्यकारः। तस्य च "लोपः शाकल्यस्य" इति लोपः। लोपस्यासिद्धत्वान्न पुनः

सन्धिकार्यम् । व्याकरणाध्ययनेन महता देवेन नः सायुज्यं स्यात्, अतस्तदर्थमध्येयं व्याकरणम् ।

भाष्ये "महता देवेन नः साम्यं यथा स्यात्" इति पाठ उपलभ्यते स च न सम्यग् लगति, महान् देवो वैयाकरणेषु प्रविष्टो भवति अत एव वैयाकरणैर्महता देवेन सायुज्यं काम्यते । अत एव साम्यम् इत्यत्र सात्म्यमिति पठनीयमिति प्रतिभाति ।

व्याकरणप्रयोजनप्रपिपादनपरे वचने चत्वारि इति प्रतीकमुपलभ्यते । प्रकृतोपयोगि चैं चत्वारिप्रतीकं मन्त्रद्वयमृक्संहितायां सन्दृश्यते । तत्र द्वितीयो मन्त्रो यथा—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

[ऋ० सं० १।१६४।४५] इति । ऋग्वेदस्य प्रथममण्डलगतो मन्त्रोऽयं बहुभिर्बहुधा व्याख्यायते । तत्रादौ वैवाकरणरीत्या तात्पर्यं प्रदर्श्यते । 'वाक्' शब्दराशिः 'चत्वारि पदानि परिमिता' नामाख्यातोपसर्गनिपातलक्षणैश्चतुर्भिः पदजातैर्विभक्ता वर्तते । ये मनीषिणः मेधाविनः । मनस ईषिण इति पृषोदरादित्वात् साधुत्वम् । 'ब्राह्मणाः' वेदविदः ते 'तानि' चत्वारि पदजातानि 'विदुः' जानन्ति । विद ज्ञाने । "विदो लटो वा" इति झेः पाक्षिक उसादेशः । 'त्रीणि' तेषामेकैकशस्त्रयो भागा 'गुहा' गुहायाम् । "सुपां सुलुक्०" इति सप्तम्येकवचनविभक्तेर्लुक् । 'निहिता' निहितानि । "शेश्छन्दसि बहुलम्" इति शेर्लोपे प्रत्ययलक्षणेन दीर्घत्वे नकारलोपः । अतिमात्रं निगूढानि 'न इङ्गयन्ति' न निमिषन्ति आत्मानं न प्रकटयन्ति । 'मनुष्याः' प्राकृता मानवाः 'वाचः' 'तुरीयं चतुर्थं 'भागं' 'वदन्ति' । चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति । यथान्यदपि भागत्रितयमस्माभिर्बुध्येत च प्रयुज्येत च तथाध्येयं व्याकरणम् । परापश्यन्तीमध्यमावैखरीरूपभागचतुष्टयात्मिकाया वाचः तुरीयं चतुर्थं भागं वैखरीरूपं मनुष्या वदन्ति इति केचित् । सरीसृपाणां स्फुरितं विहगानां कूजितं पशूनां रटितं मनुजानां च व्यक्ता वाक्, एवंरीत्या भागचतुष्टयात्मिका वाक्, तत्र चतुर्थं भागं व्यक्तवाग्लक्षणं मनुष्या वदन्ति । स च चतुर्थो भागो यथा शुद्धतया स्वरसंस्कारानुगततयोच्येत तथाध्येयं व्याकरणम् ।

अत्र सायणभाष्यम् । वाक् वाचः कृत्स्नायाः पदानि चत्वारि परिमिता परिमितानि । लोके या वागस्ति सा चतुर्धा विभक्तेत्यर्थः । तानि पदानि ब्राह्मणा वेदविदः मनीषिणः मनस ईषिणः मेधाविनः विदुः जानन्ति । तेषां मध्ये

त्रीणि गुहायां निहिता निहितानि स्थापितानि न इङ्गयन्ति न रोचन्ते न प्रकाशन्त इत्यर्थः। वाचः तुरीयं पदं मनुष्या अज्ञाः तज्ज्ञाश्च वदन्ति व्यक्तमुच्चारयन्ति व्यवहरन्ति। कानि तानि चत्वारीत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयन्ति। सर्ववैदिकवाग्जालस्य संग्रहरूपा भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति। वेदत्रयसारत्वात् व्याहृतीनाम्, तासामेव सारसंग्रहभूतत्वात् अकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन ब्रह्मवादिनो वदन्ति। अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन। क्रियाप्रधानमाख्यातम्। द्रव्यप्रधानं नाम। प्रागुपसृज्यत आख्यातपदस्येत्युपसर्गः प्रादिः। उच्चावचेष्वर्थेषु निपतनान्निपातः अपि तु च इत्यादिः। एतेष्वेव सर्वा वाक् परिमितेत्यखण्डायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात्। "वाग् वै पराच्यव्याकृतावदत्। तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते" [तै० स० ६।४।७।३] इति श्रुतेः। अन्ये तु याज्ञिकाः—मन्त्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति। याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मन्त्राः, मन्त्रविधानप्रतिपादको वेदभागः "इति मन्त्राः कल्पोऽत उर्ध्वम्"[तै० आ० १।३१।२] इत्यादिनोक्तः कल्पः। मन्त्रतात्पर्यप्रकाशको वेदभागो ब्राह्मणम्। भाषाविषया गामानय इत्यादिरूपा व्यावहारिकी। एष्वेव सर्वा वाग् नियमितेति याज्ञिकाः। ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्, वयसाम्, क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः। पशुषु, तूणवेषु, मृगेषु, आत्मनि चेत्यात्मवादिनः। अपरे मान्त्रिकाः प्रकारान्तरेण प्रतिपादयन्ति। परा पश्यन्ती मध्यमा वैखरीति। एकैव नादात्मिका वाक् मूलाधारादुदिता सती परेत्युच्यते। नादस्य व सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यन्तीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात्। सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते, मध्ये हृदयाख्ये उदीयमानत्वान्मध्यमायाः। अथ यदा सैव वक्त्रे स्थिता ताल्वोष्ठादिव्यापारेण बहिर्निर्गच्छति तदा वैखरीत्युच्यते। एवं चत्वारि वाचः पदानि परिमितानि। मनीषिणः मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा रवाख्यस्य, शब्दब्रह्मणोऽधिगन्तारो योगिनः परादिचत्वारि पदानि विदुः जानन्ति। तेषु त्रीणि परादीनि गुहा निहितानि, हृदयान्तर्वर्तित्वात्। तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदन्ति। व्याकरणप्रसिद्धनामाख्यातादिपक्षे मनीषिणः ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञाः वाग्योगविदस्तानि पदानि जानन्ति। अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं व्यवहरन्ति अर्थप्रकाशनाय प्रयुञ्जते। अयं मन्त्रो निरुक्ते व्याख्यातः सोऽत्राप्यनुसन्धेयः।

शब्दानुशासनस्य प्रयोजनप्रतिपादनपरे वचने उत त्वः इति प्रतीकमुपलभ्यते। स च मन्त्रो यथा—

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥

[ ऋ० सं १०।७१।४ ] इति। 'उत' इत्यपिशब्दसमानार्थकः। 'त्वः' एक इत्यर्थः। बहूनामपि समानपृष्ठोदरपाणिपादानां समानमेवाध्ययनमधीयानानाम् एकः कश्चित् 'पश्यन्' अपि 'वाचम्' मनसा स्वभ्यस्ताध्ययनोऽपि 'न ददर्श' न पश्यत्येव, अर्थानभिज्ञत्वात्। स हि तां सम्यक् पश्यति यस्तस्या अर्थं विजानाति। अर्थपरिज्ञानफला हि वाक् इत्यभिप्रायः। एवमेकः 'शृण्वन्' अपि 'न शृणोति' 'एनाम्' वाचम्। य एव हि अर्थमवबुध्यते वाचः, तेनैव हि सा सम्यक् श्रुता भवति, नेतरेण। इतरो ह्यविद्वान् ध्वनिमात्रमेवोच्चारयति यन्न शृणोति वाचम्। साम्प्रतमुत्तरेणार्धेनार्थज्ञं प्रशंसन्नाह—'उतो त्वस्मै' अप्येकस्मै कस्मैचिदर्थज्ञाय। 'तन्वं' 'शरीरं' 'विसस्रे' विस्रंसयति विवृणोतीत्यर्थः। अर्थो वाचः शरीरं तं विवृणोतीत्यर्थः। आत्मानं दर्शयत्येकस्मै कस्मैचिदर्थज्ञाय। कथं विवृणोत्यात्मानमित्याह—जायेव पत्य उशती सुवासाः। यथा हि जाया विवृतसर्वाङ्गावयवा भूत्वा 'उशती' कामयमाना 'पत्ये' इष्टाय भर्त्रे प्रेम्णा दर्शयेदात्मानम्। यथा स पुरुषस्तामेनां यथावत् पश्यति स्त्रियं निर्णिक्तवाससम्, नेतरां यो घनपटप्रावृतसर्वगात्रा, एवं स एवैनां वाचं यथावच्छृणोति यः पदशोऽवच्छिद्यैतां विगृह्य वार्थं पश्यति समस्तव्यस्तम्। इति दुर्गाचार्यव्याख्या। तथाच श्रुत्यन्तरम्—

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति।
यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्थाम्॥

[ऋ० स० १०।७१।६] इति। महाभारतेऽप्युक्तम् [१२।३०५।१३-१४]

यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा॥
भारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थागमो वृथा॥ इति

सक्तुमिव—p. 24.

शब्दानुशासनस्य प्रयोजनप्रतिपादनपरे वार्त्तिके सक्तुमिवेति प्रतीकमुपलभ्यते। समग्रमन्त्रो यथा—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि॥

[ ऋ० सं० १०।७१।२ ] इति। सारस्वतसूक्तं बृहस्पतेरार्षम्। तद्गतोऽयं

मन्त्रः। यत्र यस्मिन् दुर्गमे व्याकरणमार्गे सक्तुम् इव भृष्टयवादिचूर्णमिव। सचेस्तुन्नन्तस्य सक्तुरिति रूपे दुःशोधत्वमर्थः। कसतेस्तुनि वर्णव्यत्ययेन सक्तुरिति पक्षे विकसितस्तुषमिश्र इत्यर्थः। तितउना परिपवनेन। तनोतेर्डउः सन्वच्च इति पक्षे विस्तारयुक्तेनेत्यर्थः, ततेन चर्मणा नद्धमिति यावत्। तुदधातोः कर्मणि डउः सन्वच्च इति पक्षे बहुच्छिद्रमित्यर्थः। पुनन्तः परिष्कुर्वन्तः धीराः धीमन्तः मनसा वाचम् अक्रत अकृषत। कृञो लुङ्। आत्मनेपदम्। झस्यादादेशः। च्लि लुङि। "मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः" इति च्लेर्लुक्। यणादेशः। अडागम उदात्तः। यथा सक्तुं कश्चित् परिपवनेन पुनाति एवं प्रकृतितः प्रत्ययतश्च शब्दान् अपुनन्। 'अत्रा' अत्र। "ऋचितुनुघमक्षुतङ्-कुत्रोरुष्याणाम्" इति दीर्घः। दुर्गमे 'मार्गे सखायः' समानख्यानाः समानख्याना-नामेव समानेषु शास्त्रेषु कृतश्रमाणाम्, वैयाकरणानां वैयाकरणा एव नैरुक्तानां नैरुक्ता एव। 'सख्यानि' सखिभावान्। विज्ञानानि। "सख्युर्यः" इति यः। इतरेतरस्य यो विज्ञानप्रकर्षः, तं जानन्ति 'एषां' वैयाकरणानां 'वाचि अधि'। अधिः सप्तम्यर्थानुवादकः। 'भद्रा' कल्याणी 'लक्ष्मीः' 'निहिता' स्थापिता। वाक् तावत् सदोषापि भवति निर्दोषापि भवति। यत्र तावद् विद्वांसः मनसा परिचिन्त्य विशुद्धा एव वाचो व्याहरन्ति तत् स्थानं लक्ष्म्या लीलालयो भवति, विशुद्धायां वाचि लक्ष्मीर्निहितेति। अत एव लक्ष्मीलाभोऽपि व्याकरणाध्ययनस्यान्यतमं प्रयोजनम्।

सुदेवो असि वरुण—p. 28.

शब्दानुशासनस्य प्रयोजनोपवर्णनपरे वचने "सुदेवो असि" इति प्रतीकमुपलभ्यते। समग्रो मन्त्रो यथा—

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः।
अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥

[ऋ० सं० ८।६९।१२] इति। भाष्यकारोक्तदिशास्य व्याख्यानम्—हे वरुण, त्वं सुदेवः सत्यदेवः असि भवसि, यस्य ते सप्त सिन्धवः नद्य इव सप्त विभक्तयः काकुदं तालु अनुक्षरन्ति सुषिरां शोभनच्छिद्रां सूर्म्यम् सूर्मिम् अयःप्रतिमाम्। "अमि पूर्वः" इत्यत्र "वा छन्दसि" इत्यनुवृत्त्या यणादेशः। यतो हेतोर्व्याकरण-ज्ञानाद्वरुण सत्यदेवोऽसि, ततो हेतोरन्येऽपि सत्यदेवा भवन्तु इति कैयटः। तदर्थं व्याकरणमध्येयम्। निरुक्तटीकायां दुर्गाचार्येण मन्त्रोऽयमित्थं व्याख्यातः—प्रियमेधस आर्षम्। अनुष्टुप्। हे वरुण, सुदेवः असि शोभनस्त्वमसि देवः यस्य ते सप्त सिन्धवः अन्तरिक्षनद्यो वा बहुलाह्वेत्येवमाद्याः। सप्त समुद्रा एव वा सप्तसिन्धुशब्देनोच्येरन्। काकुदं तालु अनुक्षरन्ति सूर्म्यं सुषिराम् नगरोदकनिःसरणभूमिमिव सर्वतः समश्नुवतेत्यभिप्रायः।

शरणं तरुणेन्दुशेखरः शरणं मे गिरिराजकन्यका ।
शरणं पुनरेव तावुभौ शरणं नान्यदुपैमि दैवतम् ।।

# मञ्जूषा

सम्पादकः—श्रीक्षितीशचन्द्र-चट्टोपाध्यायः

षष्ठ-वर्षम्

आश्विन १८७३—भाद्र १८७४
**September 1951—August 1952**

श्रीविश्वनाथ-चट्टोपाध्यायः
८१, श्यामबाजार ष्ट्रीट्, कलिकाता—४

